THE

# PRAMANYAVADAHA

BY

*MAHA MAHOPADYAYA*
*SRI GADADARA BHATTACHARYA,*

*With*

THATHVA CHINTHAMANI

*By*

*Gungasopadyaya*

*And DIDHITHI*

BY

*Raghunadha Siromani*

EDITED BY

P. B. ANANTHACHARIAR

PRINTED AT THE

SRI SUDARSANA PRESS

*Conjeeveram.*

Vol. 1.

1901.



Price Rs. 2 - 8 - 0.

श्रीः ।

शास्त्रमुक्तावळी — ४

# ॥ प्रामाण्यवादः ॥

**महामहोपाध्याय श्रीगदाधरभट्टाचार्य विरचितः ।**

गंगेशोपाध्यायविरचितेन

**तत्वचिन्तामणिना**

तार्किकशिरोमणि श्रीरघुनाथसूरिविरचितया

**दीधित्याच सह**

श्री काञ्ची प्रतिवादिभयंकर अनन्ताचार्येण परिशोधितः

श्री सुदर्शनमुद्राक्षरशालायां

॥ अ मु द्य त ॥

**प्रथमसंपुटः—ज्ञप्तिवादान्तः ।**

**॥ श्रीकांची ॥**

इदानी मेतन्मूल्यम् — २ - ८ - ०

१९०१

श्रीः ।

# प्रामाण्यवादभूमिका ।

ग्रन्थस्या स्य रचयिता महामहोपाध्याय श्रीमान् गदाधरभट्टाचार्यः कदेमं भुवो भाग मलंचकारेति नास्माभि रेतावतापि निरचायि कालेन । अस्य मातापितरावपि किन्नामधेयाविति न वयं जानीमः । वंगदेशान्तर्गतो नवद्वीप एवा स्य जन्मभूमि निवासस्थानं चेति तु प्रायो जनानां प्रवादः । श्रृणमश्च वय मेत त्कुलसंजाताः केचने दानीमपि नवद्वीप मलंकुर्वन्तीति । एतदीयजीवनचरिताद्यवजिगमिषयाच वारद्वय मनुयुक्तो प्यस्मत्प्रियसुहृत् श्रीमान् सर्वेश्वरसार्वभौमभट्टाचार्यो नैवात्र कमपिवांशं विलिखितुं समर्थोभवदित्यत्र किंवा निदानमिति न वयं जानीमः । भट्टाचार्य श्चायं न्यायसुधाम्बुधिमन्दरमना बहून् ग्रन्था न्निबबन्ध न्याय मधि शास्त्रम् । येषु श्रीमद्गंगेशोपाध्यायविरचित तत्वचिन्तामणिव्याख्याया श्रीमद्रघुनाथशिरोमणिभट्टाचार्यविरचिताया दीधिते र्व्याख्यान मप्यन्तर्भवति । श्रीमद्गंगेशोपाध्यायविरचित स्तत्वचिन्तामणिश्च प्रत्यक्षानुमानोपमान शब्दाख्यखण्डचतुष्टयात्मकइति तद्व्याख्यारूपा श्रीरघुनाथशिरोमणिविरचिता शिरोमण्यपरनामधेया दीधितिरपि खण्डचतुष्टयात्मिकैव । खण्डचतुष्टयात्मिका दीधितिस्तु कात्स्न्र्येन व्याख्यायि नवा भट्टाचार्येणे त्यत्र तु वरीवर्ति विवाद स्सुमहान् । अनुमानखण्डव्याख्यानस्य संगत्यनुमित्यादिबाधान्तग्रन्थस्य प्रायः पठनपाठनादिषु बहुळप्रचारतया नास्ति तत्र विवादः । प्रत्यक्षखण्डेपि प्रामाण्यवादभागव्याख्यानस्य जागरूकतया कात्स्र्येन व्याख्यायि नवा प्रत्यक्षखण्ड इत्यत्रैव विवादपर्यवसानम् । चिन्तामणौ मंगळवादारम्भ एव मंगळश्लोकादिकरणा द्दीधितौच प्रामाण्यवादारम्भ एव तद्दर्शनाच्च प्रामाण्यवाद प्रभृतिग्रन्थ एव व्याख्यायि रघुनाथशिरोमणिना तत्वचिन्तामणि-

रिति निश्चित्य गदाधरीयमपि प्रामाण्यवादादिमेव निश्चिन्वन्ति बहवः। प्रामाण्यवादोत्तरमनोऽणुत्ववादादीनां दीधितिगदाधरीये नाद्याप्यस्माभि रुपलब्धे। परं किं वदन्ती किल काचि त्तदस्तित्वविषयिणी कर्णपथ मवतरतीति नात्र किमपि निश्चेतुं शक्नुमः। उपमानखण्डस्यतु नाद्यावधि कुत्रापि गदाधरीय मुपलब्धम्। शब्दगदाधरीय न्तूपलभ्यते क्वचि त्क्वचित्। एवञ्च सत्युपमानखण्डस्य परमव्याख्यानवादो न युक्तिसह इति तस्यापि व्याख्यानसद्भावपक्षमेव बहुमन्यामहे। तदेवं दीधितिव्याख्यानं खण्डचतुष्टयात्मकं गदाधरप्रणीतेषु ग्रन्थेषु मुख्यतमं। एतदन्येच स्वतन्त्रग्रन्थाः व्युत्पत्तिवाद शक्तिवाद विधिवादादय श्चतुष्षष्टिसंख्या श्रुतचरा स्तेषु केचि द्दृष्टचराश्च।

तत्रच दीधितिव्याख्याने प्रामाण्यवादस्यास्यातिकठिनदुरूहयुक्ति गर्भितस्य पण्डितानामपि मतिकुण्ठनपटोः प्रायः पठनपाठनादिषु तृतीय विप्रतिपत्त्यन्त मुपयुज्यमान स्यापि दुर्लभता मालोच्य मुद्रणे प्रायतामहि।

तत्रापि तृतीयपञ्चमविप्रतिपत्त्यो शिरोमणिना अव्याख्याततया ऽतएव गदाधरीयस्या प्यभावेन तत्र मूलमथुरानाथीया वुद्धृत्य तं भाग ममुद्रयाम।

प्रायशश्च यत्रयत्र पृष्ठे यावान् गदाधरीयस्य भागो मुद्रित स्तावतोंऽशस्य मणिदीधिती अपि तदुपरितनभाग एवा मुद्रयाम।

अस्यच --

१ - अस्मदीय "श्रीहयवदनलीलासदन" [पुस्तकालय] स्थं पत्रालिखितं ज्ञप्तिवादान्तं पुस्तकं प्राय श्शुद्ध मेकम्,

२ - विद्वद्वर्याणां - ति - अ - कु - श्रीनिवासाचार्याणा मन्तिम पत्रमात्रविहीनं ज्ञप्तिवादान्त मेकोनचत्वारिंश दुत्तरशतपत्रात्मकं प्राय श्शुद्ध मपरम्,

३ - ” तिरुप्पुट्कुळि - श्रीगोपालताताचार्याणां ताळपत्रलिखितं सम्पुटद्वयात्मकं प्राय श्शुद्धं ज्ञप्तिवादान्तं चान्यत्,

४ - ” तण्डि - श्री - श्रीनिवासताताचार्याणां ताळपत्रलिखितं तृतीयविप्रतिपत्त्यन्तं प्राय श्शुद्ध श्चेतरत,

५ - ” मन्नसालघट्टाग्रहारस्थानां, कवितार्किकसिंह रघुनाथाचार्याणां ताळपत्रलिखितं ज्ञप्तिवादान्तं प्राय श्शुद्धंच परम्,

इति गदाधरीयपुस्तकपंचकम्,

१ - अस्मदीय श्रीहयवदनलीलासदनस्थं पत्रलिखितं प्राय श्शुद्ध मेकं दीधितिपुस्तकमान्तम्,

२ - द्वितीयं चोक्तपुस्तकशालास्थं कल्कत्तानगरमुद्रित तत्वचिन्तामणिपुस्तक मपरम्,

३ - विद्वद्वर्याणां - श्रीतिरुप्पुट्कुळि गोपालताताचार्याणां ताळपत्रलिखितं प्राय श्शुद्ध मान्तं दीधितिपुस्तकं चेतरत,

इति मूलपुस्तकत्रयं चेति पुस्तकाष्टक मवलम्ब्य शोधन मकारि -

ज्ञप्तिवादोपरितनभाग उत्पत्तिवादेपि कियद्दूरपर्यन्तं गदाधरीयस्या स्मन्निकटे सत्त्वे प्यान्त मभावा न्नेदानीं तन्मुद्रण मारब्धम् इतःपरं यदा पुन रान्तं पुस्तकं लभ्येत तदा तन्मुद्रणे कृतसंकल्पा एव स्मः । यदिच ये केचि दुक्तपुस्तक मान्तं प्रेषयेयु स्तदा तेषा मुपरि कार्तज्ञ्यं वक्ष्यामो वयम् ।

यथाबलं शोधने कृतावधानस्यापि मानुष्यकसुलभेन मतिमान्द्येना नवधानेनच मे, यन्त्राधिकृताना मनवधानेनच, यदि यत्रकुत्रचि-

दशुद्धानि स्युस्तेषां ज्ञापने द्वितीयसंस्कारे पुनस्तेषां संशोधनं क्रियेत ।

इति सविनयं निवेदयति –

प्र. अनन्ताचार्यः ।

सम्पादकः ।

# विषयानुक्रमः ।

| | | | |
|---|---|---|---|
| | २४ | कार | कारि |
| | २५ | विष | विष |
| ३१ | २ | घटितव्या | घटयितव्यां |
| ३२ | १३ | पुनः थे पंचा | पुनः पंचा |
| | २३ | प्राणै | शब्दितप्राणै |
| | २४ | धस्येव | धस्यैव |
| ३३ | ६ | ग्रहणार्थम् | प्रहाणार्थम् |
| ३४ | ६ | तद्रूपा | तद्रुपा |
| ३५ | ११ | मर्थौ | माशयो |
| ३६ | २१ | ब्रह्म | ब्राह्म |
| ३७ | १२ | दार्थ | दार्थम् |
| | १४ | विश्वासिते | विश्वासवासिते |
| | १९ | तद्दशो | ताद्दशो |
| ४१ | २ | विषक्षि | विवक्षि |
| | २१ | १२७ | ११७ |
| ४४ | १८ | १३३ | १३२ |
| ४५ | ८ | पदस्यसति | पदस्यासतिबाधके |
| | २० | सिह्मा | सिंहा |
| | २४ | सिह्म | सिंह |
| | ३ | १२५ | १३५ |
| | २२ | १८१ | १४१ |
| ४६ | १३ | ताविशेषेण | त्वाविशेषेण |
| ४७ | १० | परमंगुणम् | परमम्पदम् |
| | १६ | पांवात्तिर्हिभ | पावाभिर्भ |
| | २७ | व्यपदशः | व्यपदेशः |
| ४८ | १४ | प्रप्यि | प्राप्य |
| ४९ | ६ | परं | परमं |
| | १६ | परत्वद्धय | पर्वद्धय |
| ५० | ५० | विम्शा | विंशा |
| | २४ | सवरूप | स्वस्वरूप |
| ५१ | ६ | कालिकत्व | कालत्व |
| ५४ | १७ | किकम् | क्तिकम् |
| ५५ | ७ | सस्या | लस्या |

| | | | |
|---|---|---|---|
| | ९ | पूर्वकप्राप्ते | पूर्वकमेवप्राप्ते |
| | १२ | परस्ता | परस्मा |
| | २१ | लक्षगप्राधान्य | लक्षणप्राप्यप्राधान्य |
| ५६ | १२ | यत्नादिना | यत्नादिसाध्या |
| ५७ | ४ | स्यनित्यत्व | स्यानित्यत्व |
| ६० | ७ | सम्भवादिति | सम्भवात् |
| | १६ | पपडयते | पपद्यते |
| ६१ | ७ | प्रमाणा | प्रहाणा |
| | १४ | तेऽर्थे यथाश्रुत्यै | तस्यार्थस्य यथाश्रुत्ये |
| | १६ | च्चमे | चेमे |
| | १९ | च्चवेव | ध्वेव |
| | २५ | तात्सिध्या | तात्सिध्या |
| ६२ | २ | अनेकानां | अनेकासां |

श्रीः ।

श्रीमते हयग्रीवाय नमः ।

# शास्त्रमुक्तावळी ।

## प्रामाण्यवादः ।

### दीधितिः ।

गिरं गुरूणां हृदये निधाय विधाय सिद्धान्तसरोऽवगाहम् ।
संक्षेपतः श्रीरघुनाथनामा चिन्तामणेर्दीधितिमातनोति ॥

### गदाधरीयम् ।

नत्वा नन्दतनूजसुन्दरपदं स्मृत्वा गुरोरादरा
दुर्वीमण्डलमण्डनायितयशोराशेरशेषा गिरः ।
संक्षिप्तोक्त्यतिदक्षदीधितिकृतः प्रत्यक्षचिन्तामणि
व्याख्यां व्याकुरुते गदाधरसुधीर्मोदाय विद्यावताम् ॥

गुरुकीर्तनरूपं मंगळं कुर्वाणएव स्वीयग्रन्थे प्रेक्षावत्प्रवृत्त्यर्थं तदुत्कर्षं दर्शयति ( गिरमिति ) हृदये - मानसे । निधानं - सम्बन्धसम्पादनम् । मनसि गुरुगिरस्संबन्धः स्वार्थज्ञाने जननीये तत्सहकारित्वम् । सहकारित्वं चात्र परंपरया फलोपयोगित्वं । तथाच गुरुवाक्याधीनशाब्दबोधजसंस्कारसध्रीचीनेन मनसा निबद्धव्य मितरापरिशीलित मर्थं निश्चित्येति फलितोर्थः । सिद्धांताविरुद्धएवार्थो वर्णनीयइति सूचयति ( विधायेति ) सिद्धान्तो

[ दी ] प्रेक्षावत्प्रवृत्तये

---

[ग] मूलकृता महर्षिणा तदुपजीवि पूर्वपूर्वनिबन्धकार परंपरयाचा भ्युपगतोऽर्थनिकरः, सएवसरः, तदवगाहनस्य निबन्धनीयार्थे सिद्धान्तापसिद्धान्त सन्देहाहित चेतस्सन्ताप सन्तानो पशान्ति साधनत्वात् । तदव गाह्य । अवगाहन मन्तःप्रवेशः, सच प्रकृते निगूढतत्वाकलनरूपः । संक्षेपतः – संक्षिप्तोक्तितः । चिन्तामणेः – चिन्तामणिनामकग्रन्थस्य । दीधितिं – अर्थप्रकाशम् । आतनोति – विस्तारयति । विवरणग्रन्थनिर्माणेन बहुतर सम्बद्धं करोति । चिन्तामणिग्रन्थतत्वार्थान् भूयस शिष्यान् बोधयतीति फलितोर्थः । श्रिया युक्तो रघुनाथ नामा श्रीरघुनाथनामेति मध्यमपदलोपिसमासः रघुनाथइति नामरूपं – यस्येति बहुव्रीहिगर्भः । नतु श्रीरघुनाथेति स्वनामरूपं यस्येत्येक स्समासः, श्रीशब्दस्य नामानन्तर्गतत्वात, तथासति हर्यादिपदाना न्द्व्यक्षरत्वानुपपत्तेः । नचास्यैव नाम श्रीघटित मित्याशंकनीयम्, रघुनाथकवे रिति विरोधात् ॥ … …

प्रमाणतत्वे निरूपयितव्ये महर्षेः प्रमाणादितत्वप्रतिपादक शास्त्रप्रयोक्तृत्वाद्यभिधानस्य सफलत्वं दर्शयति ( प्रेक्षावदिति ) प्रेक्षावतांविवेचकानां, प्रकृष्टफलोद्देशमन्तरेण शास्त्राध्ययने ऽ प्रवर्तमानाना मिति यावत् । तेषां स्वीयग्रन्थाध्ययने प्रवृत्त्यर्थ मित्यर्थः । स्वीयग्रन्थस्य प्रयोजनवत्तां– परमप्रयोजनभूत निश्रेयसरूपफलवत्ताम् । अभिधेयसंबन्धौच– प्रमाणतत्वरूपं प्रतिपाद्यं, प्रतिपादकत्वरूपं तत्संबन्धं चाहेत्यन्वयः ॥

यद्यपि अभिधेयसम्बन्धज्ञानमपि अर्थविशेषप्रतिपादनद्वारा फलवतो ग्रन्थस्य सफलत्वज्ञान उपयुज्यते, अतः प्रयोजनाभिधेयसंबन्धां स्तुल्यतयो पादाय तत्प्रदर्शकताकथनं न संगच्छते । तथा प्येतद्ग्रन्थ प्रतिपाद्यत्वेन सामान्यत स्सप्रयोजनज्ञानाविषयत्व मवगत्य ग्रन्थस्य प्रयोजनवत्तां जानतोपि प्रतिपाद्यस्य ज्ञातत्वसंशये ग्रन्थश्रवणे प्रवृत्ति र्नोपपद्यतइति विशिष्या भिधेयज्ञानम प्यपेक्षित मित्याशयेन तदाभिधानम् ॥

## तत्वचिन्तामणिः ।

अथ जगदेव दुःखपङ्कनिमग्न मुद्दिधीर्षु रष्टादश विद्यास्थाने ष्वभ्यर्हिततमा मान्वीक्षकीं परमकारुणिको मुनिः प्रणिनाय । तत्र प्रेक्षावत्प्रवृत्त्यर्थं "प्रमाणादीनां तत्वज्ञानान्निःश्रेयसाधिगम" इत्यादावसूत्रयत । तेष्वपि [ तत्र ] प्रमाणाधीना सर्वेषां व्यवस्थिति रिति प्रमाणतत्वमत्र विविच्यते ।

---

[ दी ] फलवच्छास्त्रोपकरणत्वेन प्रयोजनवत्ता मभिधेयसम्बन्धौ चाह स्वीयग्रन्थस्य ( अथेत्यादिना विविच्यतइत्यन्तेन )

---

[ ग ] "प्रमाणतत्व मत्र वि.विच्यत" इत्यतः साक्षादेवा भिधेयसंबन्धलाभः , प्रयोजनवत्तालाभश्च नतथा, तद्वाचकपदाभावात् , अपि त्वर्थत एव तल्लाभइति विशेषसूचनाय पृथक्समासेन तदभिधानम् ॥

कुतोर्था त्प्रयोजनवत्तालाभ इ त्याकांक्षाया माह ( फलवच्छास्त्रोपकरणत्वेनेति ) निश्श्रेयसफलवदान्वीक्षकीशास्त्रप्रतिपादित स मुदायैकदेशार्थप्रतिपादकत्वेनेत्यर्थः । तृतीयार्थः प्रयोजनवत्त्वान्वयि ज्ञाप्यत्वं । " जगदुद्दिधीर्षु रान्वीक्षकीं प्रणिनाय " इत्यतो मूलभूत शास्त्रस्य निश्श्रेयसरूपो द्धार प्रयोजकता लाभः । "प्रमाणादीनां तत्व ज्ञानान्निश्श्रेयसाधिगम" इत्यादा वसूत्रय दित्यनेन निश्श्रेयसोपायभूतज्ञान विषय प्रमाणादि पदार्थतत्वस्य तच्छास्त्राभिधेयत्व लाभः । एवंच- तदन्तर्गत प्रमाणतत्वप्रतिपादकत्वलाभा न्निरुक्त शास्त्रोपकरणत्वला भ स्स्वीयग्रन्थस्य । तत्र - निश्श्रेयससाधनानुमितौ - निरुक्ता र्थ प्रतिपादकत्वस्य निश्श्रेयससाधनार्थ प्रतिपत्ति जनकतात्वेनैवहे- तुता , तथाविधार्थे आन्वीक्षकी प्रतिपाद्य समुदायान्तर्गतत्वंच- तस्यां सहचारज्ञानेन व्याप्तिग्रहार्थ मित्यवधेयम् । "प्रणिनाये" त्यत्रै व वाक्यपरिसमाप्ते स्तावन्मात्राच्च प्रयोजनाभिधेय सम्बन्धलाभो- न सम्भवतीति तत्र कथन्तानिवृत्तये ( विविच्यत इत्यन्तेनेति )

[दी] जगत् - संसार्यात्मजातम् । नचा नधिकारिण शूद्रदीनध्याप यांबभूव प्रवरो मुनीनां ।

---

[ग ] जगत्पदस्य वस्तुमात्रार्थकत्वे घटादीनामचेतनानां मोक्षरूपोद्धारस्य बाधेन तदीयत्वेनोद्धारेच्छा मुने र्न सम्भवतीति व्याचष्टे ( जगदि - ति ) परमेश्वरस्य मुक्तानां च जीवानां नोद्दिधीर्षाविषयत्व सम्भव- इत्यतः संसारित्वं विशेषणम् । संसारश्च मिथ्याधी प्रभवा वा- सना । मत्वर्थीयार्थ उपलक्षणत्वव्यावृत्तं विशेषणत्वं । अतस्तदुपल क्षित मुक्तजीवानां व्यावृत्तिः । नच मूळोपात्त दुःखपंकनिमग्नत्ववि- शेषणेनैव परमेश्वरादिव्यावृत्ति सम्भवा त्संसारि विशेषणवैय्यर्थ्य मि- ति वाच्यम् । एवं ह्यात्मपर जगत्पदस्यापि वैयर्थ्यापातात , आ- त्मभिन्नानां दुःखपंकनिमग्नत्वविशेषणेनैव वारणात् दुःखपंकनिमग्न त्वस्यो द्दिधीर्षाविषयत्वोद्देश्य जगत्पदार्थव्यावर्तकतया विवक्षित- त्वे उद्देश्यतावच्छेदकीभूत तद्वाचकपदस्य जगत्पद पूर्वमुपादानं - क्रियेतेति "यतो जगत् दुःखपंकनिमग्नं अतस्तदुद्दिधीर्षुः" इत्यर्थ स्यैव विवक्षणा ज्जगत्पदार्थता वच्छेदकमात्रस्यैव उद्दिधीर्षित- त्वोद्देश्यता वच्छेदकतया तत्र संसारित्वान्तर्भावस्या वश्यकत्वात् । आत्मपदंचा वच्छेदक शरीरव्यावृत्तस्य समवायेन वासना विशेष वत्त्वस्य लाभाय । लक्षणयापि समूहएव प्रामाणिकानां जगत्पदस्य व्यवहारात् । समूहार्थकं जगत्पदं न त्वशेषार्थकम् , एवकारेणैव तल्लाभात् । अथवा जगत्पदमेवा शेषार्थकम् , तत्परत्व ग्राहक एवकारः- नतु तदर्थकः , यथा " सर्वएव शुभः काल " इत्यादौ । ...

ननु शूद्रादीना मपि जगदन्तर्गततया ऽ र्थविद्या नधिकारिणां तेषा मर्थज्ञानेच्छया शास्त्रप्रणयने महर्षिः प्रत्यवेयात् , अनधिकारि- णा मर्थज्ञानेच्छया शब्दप्रयोगरूप तदध्यापनस्य प्रत्यवायहेतुत्वा त् , इत्यधिकारित्वमपि विशेषणमस्त्व त्याशंकां परिहरति ( नचे ति ) शूद्रादीन् , शूद्रत्व जात्याक्रान्त शरीरविशेष वि- शिष्टात्मनः । अध्यापयां बभूव - उद्दिश्य शास्त्रं प्रणिनाय । तादृश

[ दी ] येनाशंक्येतापि प्रत्यवायस्तस्य । नचानधिकारिणां शास्त्रावलोकनेना र्थावगमे प्रत्यवयन्ति प्रणेतार श्शास्त्राणाम् । उद्देश्यतातु कीटपतङ्गादीनामपि विशिष्टशरीरपरिग्रहा दर्थावगमेनस-भवन्ती न कामपि क्षतिमावहतीति सर्वश्चतुरश्रम् [सुस्थं] । टीकाकृतस्तु समाधिसौकर्या दभ्युपेत्य प्रत्यवायम्मुने रन्यथैव समादधिरे ।

---

[ग] शरीरोपलक्षितात्मनां शास्त्रार्थाज्ञान भागितया तदुद्देश्यत्वादिति-भावः । अनधिकारिता प्रयोजक शरीरावच्छिन्न ज्ञानेच्छया श-ब्द प्रयोगस्यैव प्रत्यवाय हेतुत्वात् इत्याशयेनाह ( येनेति ) स्वम युक्तशब्दा द्दैववशेनानधिकारिणा मर्थज्ञानं न प्रत्यवायहेतुरित्याह ( नचेति ) तथासति ब्राह्मणादिमात्रो द्दिधीर्षया शास्त्रप्रणयना दपि प्रत्यवेया दिति भावः । ... ... ...

ननु जन्यज्ञानस्य शरीरावच्छिन्नत्व नियमात् शूद्राद्यात्मनामु-द्धारेच्छया शास्त्रप्रणयने शूद्राद्यात्मनां ज्ञानभागितयो द्देश्यत्वे -शूद्रादिशरीरावच्छिन्न ज्ञानेच्छा मुने रावश्यकी त्याशंकां परिहरति ( उद्देश्यतेति ) अर्थज्ञानवत्त्वेने च्छाविषयता त्वित्यर्थः । ( विशिष्टश रीरेति ) ब्राह्मणत्वादि विशिष्टशरीरं परिगृह्य एतच्छास्त्रार्थमवग-च्छे दित्यभिसन्धानेना नाधिकारि शरीरावच्छिन्नतया ज्ञानस्येच्छ-या नवगाहने प्युपपद्यमानेत्यर्थः । अन्यथा कीटादि शरीरस्य शा-स्त्राधीनज्ञानानवच्छेदकत्वनिश्चया त्तदात्मनामुद्देश्यतैव न निर्वहे दिति-भावः । क्षतिं - प्रत्यवायं । नन्वेवं मुनेरुत्पन्नोपि प्रत्यवाय स्तपः प्रभावा न्नश्यतीति टीकाकारसमान विरोध इत्यत आह (टीकाकृतस्त्विति)

ननु प्रमाकरणत्वरूप प्रमाणतत्वावधारणे तद्घटक प्रमातत्वावधा-रणस्या प्यपेक्षिततया तस्य स्वतः परतश्चा सम्भवेन प्रमाणतत्वस्य दुर-वधारणतया तदवधारणसम्पादनेन शास्त्रस्य निश्श्रेयसोपयोगित्वं य-त्सूत्रकृतोक्तं तन्नयुज्यत इत्याक्षेपे प्रामाण्यावधारणस्य व्यभिचारा-न्यथासिद्धिभ्यां प्रवृत्त्यहेतुतया तदसम्भवेपि न क्षतिरित्याशंकन मथाकि

[ म ] ननु प्रमाणादीनां तत्वं प्रतिपादयच्छास्त्रं परंपरया निश्श्रेयसेन सम्बंध्यत इति न युक्तम् – प्रामाणत त्वावधारणस्या शक्यत्वात् , तद्धिप्रमातत्वावधारणाधीनम् , तच्च स्वतः परतोवा नसम्भवति , वक्ष्यमाणदूषणगणग्रासात् ।

---

[ दी ] प्रामाण्यनिश्चायनेन निश्श्रेयसार्थिनं प्रवर्तयच्छास्त्रं निश्श्रेयसेन सम्बध्यत इति [आशयं] मन्वान आदेशयति

---

[ग] मित्यादिना मूलकृतोऽसंगतम् , प्रवर्तकतया प्रामाण्य निश्चयापेक्षाया आक्षेपेऽनुक्तत्वात् , अतः प्रवर्तकतया प्रामाण्यनिश्चयापेक्षैवा ऽऽ क्षेपक स्याभिप्रेते त्यभिमानमूलकतया शंकां संगमयति - ( प्रामाण्येति ) प्रामाण्यनिश्चायनेन - निश्श्रेयसार्थप्रवृत्तिजनकज्ञाने प्रामाण्यनिश्चय स म्पादनेन , निश्चीयमान प्रामाण्यकस्य स्वप्रतिपाद्य प्रथमसूत्रार्थ ज्ञानस्य सम्पादनेनेति यावत । ( निश्श्रेयसेन सम्बध्यत इति ) निश्श्रेयसोपयोगि भवितु मर्हतीत्यर्थः । प्रमात्वस्य दुरवधारणतयाच सूत्राधीन प्रयोजन वत्ताज्ञाने निश्चीयमान प्रामाण्यकत्वं न सम्भवतीति शेषः । “ प्रामा-ण्यनिश्चायने ” नेत्यस्य यथाश्रुत परतातु न संगच्छते, एतच्छास्त्रस्य मोक्षसाधनताज्ञाने प्रामाण्याबोधकत्वात् , शास्त्राधीन प्रमात्वग्रहे स्व-तस्त्वाप्रसक्तया स्वतः परतोवेत्यादिना स्वतस्त्वनिराकरणासंगतेश्च ! इतिमन्वानः – नन्वित्याक्षेपकर्तु रित्याशयंमन्वानः । अभिमानश्चायं न-दुर्घटः, तथाहि – “ परंपरये ” त्यस्य प्रवर्तकज्ञाने प्रामाण्यनिश्चायने-नेत्यर्थकतायाः सम्भवात् “ प्रमाणतत्वावधारणस्ये ” त्यादेश्च शास्त्र श्रवणप्रवृत्तिनिर्वाह्य शास्त्राधीन प्रमाणतत्वावधारणस्या शक्यत्वात् , यत स्तत्र परंपरया प्रवर्तकज्ञाने प्रमातत्वावधारण मपेक्षितं– तच्च स्वतः परतश्च न सम्भवती त्यर्थकताया अपि सम्भवात् । नचैव मेतदर्थकता-भिप्रायस्सम्भवदुक्तिकएव मूलकृत इतिकथं तदभिमान इतिवाच्यम् , सम्मुखतएवा क्षेपसंगते स्तथाभिप्रायस्या नौचित्यात् । प्रामाण्यावधा रणात्मकज्ञानस्यैव प्राग्दुर्घटत्वोक्ते “ रथ ” त्यादिनातस्यैवानुपयोगित्वं

[म] अथ किं प्रामाण्यज्ञानेन, ? प्रवृत्तिमात्रे तस्य व्यभिचारात् । बहुवित्तव्ययायाससाध्ये प्रवृत्तिश्चावश्यकार्थ निश्चयादेव । नच यस्य संशयव्यतिरेक निश्चयौ प्रवृत्ति प्रतिबन्धकौ

---

[दी] ( अथेति) प्रामाण्यज्ञानेन - प्रामाण्यनिश्चयेन । यस्य संशय- व्यतिरेकनिश्चयौ - यद्व्यतिरेकसंशयनिश्चयौ ।

---

[ग] शंकितु मुचितम् , नतु तज्ज्ञानसामान्यस्य, तथास त्युत्तरकालं निश्चयमात्रस्यैवोपयोगिताव्यवस्थापन मप्यसंगतंस्या दतो ज्ञानपदं निश्चयपरतया व्याचष्टे ( प्रामाण्यज्ञानेनेति ) " यस्य संशयव्यतिरेक- निश्चयाविति " मूलं व्यतिरेकज्ञान सामान्यपरतया अनुपदं वर्णनीयं, सामान्यलाभश्च यावद्विशेषोपादानादेव, तच्च यथाश्रुते नोपपद्यते, यत्सं- शयानात्मकयदि व्यतिरेक संशयानुपादानात् , तदभावव द्वृदकोटिक तदभाव संशयस्य तत्संशयानात्मकत्वात । एवं यत्संशयादिपदं यद्रू पावच्छिन्न विषयक संशयादिपर मवश्यं वाच्यम् , व्याप्तिसंशय सा मान्यांतर्गतानां किंचिद्रूपेण व्याप्तिप्रकारक नानासंशयाना मनुमित्युत्प त्ता वप्रतिबन्धकत्वात् । तथाच व्याप्तित्वावच्छिन्न संशयानात्मको पि व्याप्त्यभावाभावत्वादिना व्याप्तिविषयक व्याप्त्यभावादि संशय- स्सम्भवतीति व्याप्तित्वाद्यवच्छिन्न संशयत्वेन तदुपादानासम्भवा- दसंगतिः, अतो व्यतिरेकपदं व्यत्यासेन व्यतिरेक विषयक संशयनिश्च- यपरतया व्याचष्टे ( यस्येति ) परेतु - यथाश्रुते यस्येति षष्ठ्याः प्रतियोगित्वरूपार्थो व्यतिरेकान्वयी , अन्यश्च विषयतारूपः संशया- न्वयी, अत स्तस्या एकार्थपरत्वनिर्वाहाय व्यतिरेकपदं व्यत्यस्यति- ( यस्येति ) नच घटस्य संशय इत्यादौ एक धर्मिक घटतदभावा व- गाहि ज्ञानलाभाय संशयपदं व्यतिरेकावगाहि समान धर्मिकज्ञानपरं, प्रतियोगित्वं विषयत्वंच षष्ठ्या अर्थः, संशयपदार्थैकदेशे व्यतिरे- के प्रतियोगित्वस्य ज्ञानेविषयत्वस्यान्वय इति व्युत्पत्तिरावश्यकीति- षष्ठ्या अर्थद्वयपरत्व मावश्यकमेवेति कथमेतदितिवाच्यम् , यतःस्वा-

[ दी ] तेन व्यतिरेकज्ञानत्वेन प्रतिबन्धकतालभ्यते ।

---

[न] वच्छिन्न प्रतिबध्यता निरूपित प्रतिबन्धकतावच्छेदकत्व स्वसामाना-धिकरण्योभयसम्बन्धेन विशयिताविशिष्ट विषयिताशालिज्ञानं संशय पदार्थः, चरमविषयितायामेव षष्ठ्यर्थस्य निरूपकत्वस्य निरूप्यत्वस्यवान्वयः, एवंचा भावस्य संशयपदार्थाघटकतया तत्समभिव्याहृत षष्ठ्या अभावान्वयि तदीय प्रतियोगितार्थकताया अनावश्यकता , नच विषयितानिरूपकत्वं विषयिता प्रतियोगित्वमेव, तथाच-व्यतिरेकेसंशयेचान्वय्येकएवार्थ ष्षष्ठ्याइति कथं तदर्थभेदभयेन व्यतिरेकपदव्यत्यासइतिवाच्यम् , अभावनिरूपितस्य विषयितानिरूपितस्यच प्रतियोगित्व स्यैक जातीयत्वविरहा दित्याहुः । ... ...

अत्र संशयादिपदं प्रतिबध्य समानधर्मितावच्छेदकक यद्रूपावच्छिन्नाभाव संशयादि सामान्य पर मवश्यं वाच्यं, अन्यथा समूहालंबनरूप घटाभावादिनिश्चयात्मक व्याप्त्यादि व्यतिरेक संशयादि प्रतिबध्यस्य घटादिज्ञानस्य व्याप्त्यादिनिश्चयाहेतुकत्वा द्व्यभिचारापत्तेः । एवंच व्यतिरेकनिश्चयत्वादि घटक व्यतिरेकज्ञानत्व पुरस्कारेण तज्ज्ञानसामान्य निवेशादेवो पपत्ते स्तद्घटकदळांतरोपादान मितरपदोपदानं च-व्यर्थम् , यदिच संशयत्वादि व्यापकत्वेन प्रतिबन्धकता निवेशे तज्ज्ञानत्व व्यापकता घटक प्रतियोगितावच्छेदकत्वाभावा दन्यएव-तदभावः संशयत्वादि व्यापकता घटकइत्यवैयर्थ्यम् , संशयत्वनिश्चयत्वे अव्याप्यवृत्तिजातिविशेषावितिमते तच्छरीरे ज्ञानत्वस्यानन्तर्भावादपि न वैयर्थशंका, तथाप्यनुचितंगौरवं संशयनिश्चययोः पृथक्-निवेशपक्षेदुर्वारमेवेति मनासिकृत्य फलितार्थमाह ( तेनेति ) (व्यतिरेकज्ञानत्वेनेति ) अनतिरिक्तवृत्तित्वरूपा वच्छेदकत्वं तृतीयार्थः । नतुस्वरूपसम्बन्धरूपं । ग्राह्याभावज्ञानत्वस्य ग्राह्यज्ञान प्रतिबन्धकतावच्छेदक ग्राह्याभावनिश्चयत्व घटकतया ग्राह्यनिश्चयस्य ग्राह्यज्ञानाहेतुतया व्यभिचारस्य दुर्वारत्वात । पर्याप्तिनिवेशेचतदर्थपर्याप्तो

[दी] ग्राह्यसंशयस्यतु न प्रतिबन्धकतेतिभावः ।

---

[ग] च्ने लाघवासंभवात् । यद्व्यतिरेकज्ञानत्वावच्छिन्न प्रतिबन्धकताकं य त तन्निश्चयत्वावच्छिन्नजन्य मिति सामान्यव्याप्तिः पर्यवसितेति न सा ध्यसाधनयो वैयधिकरण्यम् । नवेश्वरीय प्रामाण्यनिश्चय जन्यतामा दाय सिद्धसाधनावसरः ।

नच माध्यमिकपूर्वपक्षे अथेत्याद्याशंका न नैयायिकस्य, तेन प्रामा· ण्यनिश्चयोपयोगितास्वीकारात , किंतु तटस्थस्य, तदुपरिच नचेत्याद्याशं का पुन र्माध्यमिकस्यैव, तेनेश्वरानभ्युपगमेन न सिद्धसाधनावसरः, साध्य स्य मतद्वयासिद्धतायामेव तद्दोषादिति वाच्यम् । एवमपि तटस्थे ना- र्थान्तरोद्भावनस्य दुर्वारत्वात् । नच स्वतः परतश्च प्रामाण्यस्य ग्रहणं निराकुर्वतो माध्यमिकस्य कथं प्रवृत्तौ प्रामाण्यनिश्चयहेतुकत्व साधनं संगच्छतइति वाच्यम् । प्रामाण्यनिश्चायनेन शास्त्रस्य नि श्श्रेयसो पयोगिता वादिनं नैयायिकं पराभवितुं तन्मत मालम्ब्य माध्यमिकस्यापि प्रवृत्तौ प्रामाण्यनिश्चयोपयोगिता व्यवस्थापन संभवात् ।

ननु अव्यभिचारव्यतिरेकरूप व्यभिचारस्य संशयो निश्चयश्चा व्यभिचारग्रहप्रतिबन्धकः - व्यभिचारसंशयप्रतिबन्धकतायाः व्याप्तिग्र- होपाये मणिकारै रेवोक्तत्वात् , तथाच व्यभिचारज्ञानसामान्यप्रति- बध्ये ऽव्यभिचारानिश्चयाजन्ये ऽव्यभिचारनिश्चये व्यभिचार इत्यत आह ( ग्राह्यसंशयस्येति ) अव्यभिचारव्यतिरेक संशयरूपस्येत्यादिः । नप्रतिबन्धकता - व्याप्तिग्रहइति शेषः । तथाच व्यभिचारसंशय- स्य व्याप्तिग्रहप्रतिबन्धकत्वाभिधानं मतविशेषावलम्बनेनै वोक्तमिति नविरोधइति भावः । एतेन घटादिसंशयस्य घटादिग्रहाप्रतिबन्ध- कतया संशयपदेन घटादिनिश्चयाहेतुके घटादिज्ञाने व्यभिचारं वा- रयतां मिश्राणां प्रतिबन्धकसंशयादौ यदभावत्व प्रकारकत्व नैयत्य विवक्षया ऽव्यभिचारानिश्चयाजन्य तन्निश्चये ऽव्यभिचाराभावत्वा प्रका- रकाव्यभिचारत्वप्रकारक संशयसाधारण प्रतिबन्धकताके व्यभिचार वारण मयुक्त मिति ध्वनितम् । घटादिसंशयस्य तन्निश्चयइव ग्य-

[ग] भिचारसंशयस्यापि अव्यभिचारनिश्चये ग्राह्यसंशयत्वाविशेषेणा प्रतिबन्धकत्वौचित्यात् । यन्मत मवलम्ब्य मणिकृतो व्यभिचारसंशय प्रतिबन्धकताभिधानं, घटादिसंशये तन्निश्चयप्रतिबन्धकताया अपि तन्मतसिद्धत्वात् ।

अत्र मिश्रानुयायिनः, व्यभिचारज्ञानस्य व्याप्तिनिश्चये मणिमंत्रादिवत् पृथगेव प्रतिबन्धकता, नतु ग्राह्यभावज्ञानतया, कथ मन्यथाऽत्यन्ताभावगर्भ व्यभिचारग्रहस्या न्योन्याभाव गर्भव्याप्तिधी विरोधिता, ग्राह्याभावावगाहितया प्रतिबन्धकत्वमेवच ग्राह्यसंशयव्यावृत्तमिति व्यभिचारसंशयप्रतिबन्धकत्वं युक्तमेव, स्वप्रतिबन्धक संशयव्यतिरेकनिश्चययो र्यदभावत्व प्रकारतानियतत्वविशेषणं वैकल्पिकं, अव्यभिचाराभावत्व प्रकारकत्वस्य व्याप्तिनिश्चयप्रतिबन्धके व्यभिचारनिश्चये संशयेचा नियमात् , एकत्र तन्निवेशेनैवा व्यभिचारसंशय तद्व्यतिरेकनिश्चप्रतिबध्ये तन्निश्चयाजन्ये व्याप्तिनिश्चये व्यभिचारवारणसम्भवात , यद्यपि प्रमेयत्वादिना व्याप्त्यभावावगाहिनि पक्षधर्मत्वाभावत्वाद्यवच्छिन्न विषयकज्ञाने ऽनुमिति प्रतिबन्धके व्याप्त्यभावत्वादिप्रकारकत्वाभावात् दृष्टान्तासिद्ध्यादिवारणाय यदभावावगाहिताप्रयुक्तप्रतिबन्धकताशालि संशयादौ यदभावत्वप्रकारता नैयत्यं विवक्षणीयम्, तथाच व्यभिचारसंशयप्रतिबध्ये तद्व्यतिरेकनिश्चये व्यतिरेकनिश्चयपदोपादानव्यावृत्त्यसंगतिः, अव्यभिचारनिश्चयंप्रति प्रतिबन्धकताया व्यभिचाराभावावगाहित्वाप्रयुक्ततया यत्पदेन व्यभिचारोपादानासम्भवात, तथापि व्यतिरेकनिश्चये यदभावत्वप्रकारतानियतत्वानिवेशपक्षएव प्रतिबन्धकतायां यदभावावगाहिताप्रयुक्तत्वं निवेशनीयम्, नतु संशये तद्विशेषणनिवेशपक्षे, अनुमित्यादि प्रतिबन्धक व्याप्त्यादिसंशये व्याप्त्यभावत्वाप्रकारकत्वायोगेन दृष्टान्तासिद्ध्याद्यनवकाशात् । तथाच सति व्यभिचाराावगाहिताप्रयुक्तानुमितिप्रतिबन्धकतावति व्यभिचारसंशये व्यभिचाराभावत्वप्रकारता नैयत्येनैव यत्पदेन व्यभिचारोपादानसम्भवात व्यतिरेकनिश्चयोपादानव्यावृत्ति श्शक्यते संगमयितुम्

[म] तन्निश्चयस्तद्धेतुः अनुमितौ व्याप्तेरिवेतिवाच्यम् ,

[दी] ( तन्निश्चयइति ) तद्व्यतिरेकज्ञानमात्रस्य प्रतिबन्धकत्वे तत्संशयात्कार्यानुत्पत्ते स्तन्निश्चयत्वेनैव तद्धेतुत्वात् ,

[ग] यदभावत्वा प्रकारकज्ञानानिष्ठ यदभावावगाहिताप्रयुक्त प्रतिबन्धकताकान्यत्वे सति यत्संशयव्यतिरेक निश्चयसामान्यप्रतिबध्यत्वं वा हेतुः , अव्यभिचाराभावत्वा नवच्छिन्न व्यभिचारविषयताप्रयुक्त प्रतिबंधकताक व्याप्तिनिश्चये सत्यन्ताभावा द्व्यभिचारनिश्चयत्वा वच्छिन्ना जन्यत्वेपि नव्यभिचारः, व्यभिचारसंशयमात्रप्रतिबध्यस्य व्याप्तिनिश्चयस्य व्यभिचाराभावत्वानवच्छिन्न व्यभिचाराभावविषयिताप्रयुक्त प्रतिबन्धकताकान्यत्वं , तत्प्रतिबन्धकतायां व्यभिचाराभावविषयित्वाप्रयुक्तत्वादेवा क्षतमिति व्यतिरेकनिश्चयो पादानसार्थक्यम् । व्यभिचाराभावत्वानवच्छिन्न तदभावविषयिता प्रयुक्तत्वंच तदभावव्यक्तित्वावच्छिन्नाभावज्ञान प्रतिबन्धकतायामेव प्रसिद्धं, स्वप्रतिबन्धकतानवच्छेदक यदभावत्वानवच्छिन्न यदभावविषयितासामान्यकत्वे सतीतिवा वक्तव्यम् इत्याहुः ।

दीधिति कृतस्तु अन्योन्याभावादि गर्भव्याप्तिबुद्धौ अत्यन्ताभावादिगर्भ व्यभिचारधियो विरोधित्व मस्वीकुर्वन्तो मणिमन्त्रादिव द्व्यभिचारज्ञानस्य प्रतिबन्धकत्वं नानुमन्यन्ते , अपितु ग्राह्याभावावगाहित्वेनैवेति न तेषां व्यभिचारसंशयस्य व्याप्तिनिश्चयप्रतिबन्धकतेति यथाश्रुतमेव साधु । उक्तव्याप्ता वनुकूलतर्क मुपदर्शयति ( तद्व्यतिरेकेति ) मात्रपदं कृत्स्नार्थकम् । हेतुत्वात् - हेतुत्वौचित्यात । अन्यथा संशयस्वरूपयोग्यताकल्पनेन गौरवा दित्याशयः । इद मापा ततः, कारणतावच्छेदकलाघवानुरोधेन फलानुपधायकसाधारण स्वरूपयोग्यताकल्पने ? - तिविरहात् , तद्व्यतिरेकज्ञानत्वेन प्रतिबन्धकत्वे तज्ज्ञानत्वेन हेतुताकल्पनेपि क्षतिविरहात । उक्तयुक्त्या निश्चयत्वेन हेतुतासिद्धे रस म्भवदुक्तिकत्वाच्च । विशेषतः प्रवृत्तेः व्याप्तावन्तर्भावे ऽनुमते हे-

[ म ] तत्सन्देहस त्यर्थसन्देहेना र्थानिश्चया देवा प्रवृत्ते स्तत्र तयो रप्रतिबन्धकत्वा दिति चेत , न ।

---

[ दी ] प्रवृत्तीति प्रकृताभिप्रायम् । यत्प्रतिबन्धकाविरयर्थः । ( तत्सन्देहइति ) क्लृप्तकारणसद्भावे यत्सत्वे कार्यानुत्पादः अनायत्या तस्यैव प्रतिबन्धकत्वं कल्प्यते , नचेह तथा ।

---

[ग ] दृष्टान्तत्वासंगति रिति विशेषत स्तदन्तर्भावो नाभिप्रेतः, अपितु यत्त्व तत्त्वमात्रेणेत्याह ( प्रवृत्तीति ) ननु प्रामाण्यसंशयदशायां अर्थानिश्च-या देव प्रवृत्त्यभाव निर्वाहात् प्रामाण्याभावज्ञानस्य कारणीभूताभा-व प्रतियोगित्वरूप प्रतिबन्धकत्वा ऽसिद्धे रुक्तानुमानं स्वरूपासि द्ध्या दुष्टमिति मूलोक्तं न संगच्छते , प्रवृत्तावर्थनिश्चयस्येव प्रामा ण्याभाव ज्ञानाभावस्यापि कारणताग्राहक नियतान्वय व्यतिरेकस-त्वेन कारणताया दुरपह्नवत्वा दित्याशंकां निराकरोति ( क्लृ-प्तेत्यादिना ) तस्य प्रतिबन्धकत्वं - तदभावस्या नन्यथा सिद्धत्वं क-ल्प्यते । ( नचेह तथेति ) प्रकृते क्लृप्तापर सकलकारणसत्व प्रामा ण्य सम्शयादिसत्त्वे प्रवृत्त्यनुत्पाद इति नेत्यर्थः । प्रामाण्यसंशया द्यभावेपि विनार्थनिश्चय मप्रवृत्ते स्तद्धेतुताया आवश्यकत्वात् , प्रा-माण्यसंशय दशायांच तदसत्वेनाप्रवृत्ते रितर सकल कारणासम्प-त्तेरिति भावः। तथाच नियतान्वय व्यतिरेकेपि प्रामाण्याभावज्ञा-नाभावस्या न्यथा सिद्धत्वमेवेति न तज्ज्ञानस्य कारणीभूताभाव प्रतियोगित्वरूपं प्रतिबन्धकत्वं शंकास्पदमपीति मूलसंगतिः ।

अथा र्थनिश्चयकाले तद्द्वितीयक्षणेवा यत्र प्रामाण्यसम्शय स्तत्र तादृशार्थनिश्चय द्वितीयक्षणे तत्तृतीयक्षणेवा प्रवृत्त्यापत्ति वारणाय प्रामाण्यसंशयस्य प्रतिबन्धकत्व मावश्यकमिति चेन्न ; अगृहीताप्रा माण्यकार्थनिश्चयत्वेन हेतुतयैव निर्वाहात , गौरवेणा प्रामाण्य ज्ञानाभावस्य पृथक्कारणत्वा कल्पनात । मूले स्वरूपासिद्धिप्रदर्शनं दृष्टा न्तासिद्धेर प्युपलक्षणं बोध्यं । प्रमात्वाभावग्रहाभावस्य प्रवृत्तिकारण

दी ] नच प्रयोजकीभूताभाव प्रतियोगित्वमेव वाच्यम् , अप्रयो जकत्वात ,

---

[ग] त्वाभावेपि न स्वरूपासिद्धिः, अन्यविधप्रतिबन्धकताया एव वि-षक्षणीयत्वा दित्याशंक्य निराचष्टे ( नचेति )

यद्यपि प्रयोजकत्वमिदं न नियतपूर्ववृत्तित्वरूपं , व्याप्तयभा-व संशयद्वितीयक्षणे व्याप्तिनिश्चयोत्पत्तौ तृतीयक्षणे ऽनुमित्युत्प त्त्या व्याप्तयभाव ग्रहाभावस्या नुमित्यप्रयोजकत्वेन दृष्टान्ता सिद्धेः , नापि जनक जनकत्वं - ग्राह्यसंशयस्या प्रतिबन्धकत्वेन तदभावस्या-नुमिति जनकव्याप्तिनिश्चया जनकत्वेन तद्दोष तादवस्थ्यात , तथापि जनकतावच्छेदक प्रविष्टत्वमेव तत , व्याप्तिसंशयभेदस्य निश्चयत्वघटकतया ऽनुमिति जनकतावच्छेदकत्वात् । व्याप्तिसंशय स्यानुमिति प्रतिबन्धकत्वा न्न दृष्टान्तासिद्धिः । उक्तयुक्त्या अगृ हीताप्रामाण्यकत्वस्या र्थनिश्चयनिष्ठ प्रवृत्तिहेतुता वच्छेदकताया - आवश्यकत्वा न्न स्वरूपासिद्धिः ।

अथवा यन्निश्चय विरहविशिष्टस्य यद्धर्मिक यद्व्यतिरेकज्ञान स्याभावो यद्विशेष्यक यत्प्रकारक यज्जातीय कार्यनियताव्यवहित पूर्ववृत्तिः, तद्धर्मिक तन्निश्चय स्तद्विशेष्यक तत्प्रकारक तज्जातीय कार्यजनक इति समुदायार्थः , व्याप्त्यभाव संशयाद्वितीय क्षणोत्पन्न व्याप्तिनिश्चयात यत्र तदनन्तरक्षणेनुमिति स्तत्र तत्पूर्वक्षणे वि-विशेषणाभावा द्विशिष्टाभावो ऽक्षत एवेति न दृष्टान्तासिद्धिः ।

एतेना प्रामाण्यग्रहाभावस्य कारणतावच्छेदक त्वोपगमे वि-शेष्य विशेषणभावे विनिगमना विरहात , तस्य कारणत्वमप्यन पवादमिति कारणीभूताभाव प्रतियोगित्वघटित हेतुर प्यविकल इति प्रयोजकता घटित साधनानुसरण शंकाया असंगति रिति दूषण मनवकाशम् ।

( अप्रयोजकत्वादिति ) प्रामाण्यव्यतिरेक ज्ञानाभावस्यार्थनिश्चय निष्ठ कारणतावच्छेदकतया अर्थ संशयकारणाभावतया ऽर्थनिश्चय

[ म ] प्रामाण्यसंशयानन्तरम् इदं इत्थमेवेत्यवधारणस्य निष्कम्पप्रवृत्त्यङ्गस्य प्रामाण्यनिश्चयाधीनत्वात् ।

---

[दी] यत्तदर्थयो रननुगमाच्चेति भावः । अभ्युपेत्य समाधत्ते ( प्रामाण्येति ) तथाच कारणत्वाभावे प्यवश्य मपेक्षणीयत्व

---

[ग] सम्पादकत्वेनवा प्रवृत्तावपेक्षणीयत्वेन ततएवातिप्रसंगभंगे प्रामाण्य निश्चयस्य प्रवृत्तिहेतुत्वास्वीकारे ऽनिष्टप्रसंगरूप विपक्षबाधका भावादित्यर्थः । अप्रयोजकत्वंच कारणीभूताभाव प्रतियोगित्वरूप प्रतिबन्धकताया हेतुघटकता पक्षेपि बोध्यम् । अनुमाने दूषणान्तर माह ( यत्तदर्थयोरिति ) तथाच - यत्पदेन प्रामाण्योपादाने दृष्टान्ता सिद्धिः , व्याप्त्यु पादाने च स्वरूपासिद्ध्यादिः ।

ननु प्रामाण्याभाव ज्ञानाभावस्य उक्तयुक्त्या र्थज्ञाननिष्ठ कारणतावच्छेदकत्वं विनिगमनाविरहभयेन स्वतन्त्रकारणत्वं वा ऽवश्य मङ्गीकर्तव्यम् , तथाच - प्रामाण्यनिश्चयस्यैव हेतुता युक्तेति- हेतुविधयैव प्रामाण्यनिश्चयापेक्षाया एव सम्भवा दर्थनिश्चय सम्पादकतया तदपेक्षाभिधानं " प्रामाण्य सम्शयानन्तर " मित्यादिना मणिकृतो न युक्तमित्यत आह ( अभ्युपेत्येति ) परेण व्यवस्थाप्य मानं प्रामाण्यनिश्चयस्य प्रवृत्त्यहेतुत्व मभ्युपेत्यैवे त्यर्थः समाधत्ते - प्रामाण्य निश्चयापेक्षां व्युत्पादयति । अथवा- प्रवृत्तौ प्रामाण्यनिश्चयानपेक्षाया मपि नन्वित्याद्याक्षेप कर्तु रभिप्रेतया प्रमात्वस्य प्रमाणतत्वघटकतया तदवधारणे प्रमात्वावधारणा पेक्षयैवो द्देश्यसिद्धेः प्रवृत्तौ प्रामाण्य निश्चयस्य परंपरया ऽपेक्षणीयत्व व्यवस्थापन मयुक्तमित्याशंक्याह ( अभ्युपेत्येति ) प्रवृत्तौ प्रामाण्यनिश्चया पेक्षयैव तदसम्भवेन शास्त्रस्य निश्श्रेयसोपयोगित्वा निर्वाहइत्येव स्वाभिप्रेतमिति स्वीकृत्यै वेत्यर्थः । इदमित्थमेवे त्यर्थनिश्चये प्रामाण्यनिश्चयापेक्षायामपि प्रवृत्तौ तत्कारणत्वा सिद्धौ नोद्देश्य सिद्धि रित्याशंकां निराकुरुते ( तथाचेति ) अवश्यापेक्षणीयत्वं कारण-

[ म ] ननुस्वत एवास्तु तन्निरूपणं ।

---

[ दी ] मिति भावः । स्वतः - स्वस्मात् स्वकीयात् । तत्र स्वप्रकाशतया तेनैव तत्प्रामाण्यं गृह्यतइति गुरवः ।

---

[ग] सम्पादकतया- तादृशापेक्षयामपि तदसम्भवे शास्त्र श्रवणे प्रवृत्त्यनुत्पत्त्या शास्त्रस्य निष्फलत्वेनाक्षेप संगतेरिति भावः ।

ननु स्वतएवेति मीमांसकत्रयस्यैव प्रत्यवस्थानं, नतु गुरोरेव- मिश्रभट्टयो रेव वा, मतत्रयसाधारण विप्रतिपत्ते रग्रे दर्शनीयत्वात्, अनुव्यवसायेना नुमित्या स्वप्रकाशेन वा गृह्यत इत्यादिना मत- त्रय साधारण स्वतस्त्वस्य व्यवस्थापनीयत्वाच्च । एवंच स्वपदस्य प्रामाण्याश्रयमात्रपरत्वे तदीयमात्रपरत्वे वा न मतत्रय सा- धारण्य मत उभय परतया व्याचष्टे ( स्वत इति ) ( स्वस्मादिति ) प्रामाण्याश्रय व्यवसाया दित्यर्थः । तन्निरूपणमिति- मूलस्यच प्रा- माण्य व्यवहार इत्यर्थः । तावताच व्यवसायस्यैव स्वप्रामाण्यविषयकत्व लाभः । तावतैव व्यवहर्तव्य ज्ञानविधया प्रामाण्यव्यवहार हेतुतायाः स्वस्य निर्वाहात् । एतच्च गुरुमतानुसारेण । मिश्रभट्ट- योरनुसारेणाह ( स्वकीयादिति ) स्वप्रयोज्यादित्यर्थः । मिश्रमते व्यवसायजन्यो नुव्यवसायएव तत्प्रयोज्यतया विवक्षितः, भट्टमते च व्यवसायजन्य ज्ञाततारूप हेतुजन्यानुमिति रेवेति मत द्वयो पसंग्रहः ।

केचित्तु - तन्निरूपणं - प्रामाण्यग्रहः । स्वस्मा द्व्यवसाया त् व्यवसायप्रयोज्य इति यावत्, सच मिश्रमते ऽनुव्यवसायरूपः, भट्टमते ज्ञाततालिंगकानुमिति रूपः । गुरुमतानुसारेणाह ( स्व- कीयादिति ) स्वोत्पत्तिप्रयोजक कारणसमुदाया दित्यर्थः । एताव- ता स्वसामग्रीजन्यत्वेन स्वस्यैव स्वप्रामाण्यग्रह रूपता लभ्यत इति व्याचक्रुः । तच्चिन्त्यं । तथासति तत्र स्वप्रकाशतये त्यादिना प्रथमतो गुरुमत विवरणस्या युक्ततापातात् । स्वप्रकाशतया-व्यवसायस्य स्वविषयकतया । ( तेनैव तत्प्रामाण्यं गृह्यत इति ) तस्यैव

[ म ] तथाहि । तत्र – विप्रतिपत्तयः–

[ दी ] तदनुव्यवसायेनेति मिश्राः । ज्ञानस्यातीन्द्रियतया ज्ञातता लिंगकानुमि त्येति भट्टाः । तत्र– मतत्रयसाधारणस्वतस्त्वे ।

[ग] प्राथमिकज्ञानग्रहत्वात् सर्वेषा मेव मीमांसकानां प्राथमिक ज्ञानग्रहग्राह्यताया स्स्वतो ग्राह्यतारूपत्वादिति भावः । ( तदनुव्यवसायेनेति ) तद्विषयक लौकिक मानसेनेत्यर्थः । तत्प्रामाण्यं - गृह्यत इत्यनुषज्यते , एवमग्रे प्यनुषंगो बोध्यः । उपनीत प्रामाण्यस्य न्यायमतेपि ज्ञानमानसे भाना ल्लौकिकत्व विशेषणम् । नच ज्ञानांशे – लौकिकमानसे प्युपनीतप्रामाण्य भाना त्तद्विशेषणेनापि न न्यायमता द्विशेष इति वाच्यम् । स्वांश लौकिकत्वस्य विवक्षणीयत्वात , तच्च स्वविषयक ज्ञानाजन्यत्वं , स्वाश्रयग्राह्यत्वरूप गुरुमतासिद्ध स्वतस्त्वेपि स्वविषयक ज्ञानाजन्यत्वेन स्वाश्रयो विशेषणीयः , अन्यथा प्रामाण्याश्रयज्ञानेपि कदाचिदुपनीत प्रामाण्यभानस्य न्यायमत सिद्धतया तदविशेषापत्तेः । ( ज्ञानस्यातीन्द्रियतयेति ) एतेन भट्टानां ज्ञाततालिंगकानुमिते र्मिश्रमतसिद्धा नुव्यवसायवत् प्राथमिकज्ञानग्रह रूपतेति सूचितम् , तेन न्यायमते प्यनुमित्या प्रामाण्यं गृह्यते , परन्तु तन्मते ज्ञातताया अप्रसिद्धतया तल्लिंगकानुमित्या – ग्राह्यत्वासम्भवः । एवंच ज्ञाततयामेव विवादपर्यवसानं , नतु स्वतो ग्राह्यत्व इति द्वेश्यानवकाशः । नच ज्ञाततालिंगकानुमिति ग्राह्यत्वे ज्ञानातीन्द्रियत्वस्या प्रयोजकतया ज्ञानस्यातीन्द्रियतयेति हेत्वनन्वयः , अनुमित्येत्यस्य सावधारणपरतया तल्लभ्यप्रत्यक्षा ग्राह्यत्वे हेत्वन्वयस्य विवाक्षितत्वात् । मूलस्थं तत्रेत्युपादाय व्याचष्टे ( मतत्रयसाधारण स्वतस्त्व इति ) एतेन प्रथमावधि विप्रतिपत्तित्रयस्य मतत्रयसाधारण्यं मूलस्थ शब्दलभ्य मेवेति तुरीयविप्रतिपत्तेः प्रत्येकमेवेत्यनेन यथा एकमतासिद्ध स्वतस्त्वकोटिकत्व मभिहितम् , तथा – प्रथमादिविप्रतिपत्तीनां मतद्वयमात्रासिद्ध स्वतस्त्वादिकोटिकत्व शंकावारणाय युक्तं त्रितयसिद्ध स्वतस्त्व कोटिकत्वाभिधानं, तद्भिनान्यूनत्वस्यापरिहारः । ( तत्रेति ) सप्तम्ये

[ म ] ज्ञानप्रामाण्यं तदप्रामाण्याग्राहक याव ज्ज्ञान ग्राहक सामग्री ग्राह्यम् - नवा ।

---

[दी] विचारांग संशयजननी विप्रतिपत्ती राह ( ज्ञानेत्यादिना ) अत्रच तात्पर्यवशा त्तद्वति तत्प्रकारकत्वरूप प्रकर्षविशिष्टं ज्ञानं प्रशब्दोपसंहितेन माधातुना प्रत्याय्यते । भावल्युटाच

---

[ग] र्थ विषयताया स्वंसंशयजनक वाक्यरूपविप्रतिपत्ति पदार्थैकदेशे संशयेऽन्वयोबोध्यः । विप्रतिपत्तेरुपयोगितां दर्शयितुमाह ( विचारांगेति ) विचारोजल्पः, विपरीतोद्भावक परविजिगषिया न्यायप्रयोगरूपः । जिज्ञासासम्पादनेन तदङ्गस्य तदुपयोगिनो मध्यस्थसंशयस्य जननीरित्यर्थः । अत्रच " नन्वि " त्यादिवक्तु मीमांसकस्यैव न " तथाही " त्याद्यभिधानं, तथासतिच विधिकोटिमात्रस्य तदभिधेयतया निषेधादिबोधक " नत्रे " त्याद्यभिधानासंगतेः, स्वसंशयज्ञापनाय मध्यस्थस्यैव तथाभिधानौचित्यादिति " स्वतएवास्तुतन्निरूपण "मित्यनन्तरं "इति मीमांसकानां स्वमतपरिग्रहेण नैयायिकेन विचारप्रसक्ति" रिति पूरणीयं, तथाच ग्रन्थकृत एवोक्तिरियं । तथाच सएव विचारो विप्रतिपत्त्यभावे न घटत इत्यालोच्य ग्रन्थकृतैव "तथाही" त्यादिना विप्रतिपत्तयो दर्शिताः । उत्तरव त्पूर्व पक्षोपि परिष्करणीय इत्यवधेयम् । पक्षेज्ञानपदोपादानं प्रामाण्यपदस्य प्रमाकरणत्वार्थपरत्व भ्रमनिरास परतया सार्थकयिष्यन् तत्पदस्य प्रमात्वतत्करणत्वोभयार्थकतां व्युत्पादयति ( अत्रचेति ) अत्र - पक्षबोधके ज्ञानप्रामाण्यपदे, ज्ञानेतिपदं ज्ञानकारणत्व निरासाय, तात्पर्यभ्रम विषयता वारणायेत्यन्वयः । तद्वति तत्प्रकारकत्वरूपम् याथार्थ्यमिवा न्योपि प्रकर्षः प्रशब्दार्थइति कुतोस्यैव लाभ इत्यत आह ( तात्पर्यवशादिति ) मा-

[दी] तादृशज्ञानत्वं, करणल्युटा तादृशज्ञानकरणत्वं तद्धितान्तेनोप स्थाप्यते । तत्र तादृशज्ञानकरणत्वस्य निरासाय ज्ञानेति सावधारणम् । तच्च न ज्ञानत्वनियतम्, मनः प्रभृतिवृत्ति-

---

[ग] धातुपूर्व प्रशब्दस्य याथार्थ्यरूप प्रकर्ष एवा नादितात्पर्यादित्यर्थः । प्रशब्दस्य वाचकत्वे विवादात् पदत्वं सविवादमिति प्रशब्दे- त्यभिधानम् । तदुपसन्धानंच तदव्यवहितोत्तरत्वम् । माधातु- ना - ज्ञानत्वविशिष्टार्थकमाधातुना । तद्धितांतेनेत्यस्य भावल्युटा करणल्युटे त्युभयत्रसम्बन्धः, तद्धितश्च भावार्थकः ष्यञ्प्रत्ययः, तस्य प्र कृत्यर्थतावच्छेदकबोधकत्व व्युत्पत्ते रितिभावः । तत्र-तयोरर्थयोर्म- ध्ये । ज्ञानपदादेव कथं तन्निरास इत्यपेक्षायामाह ( सावधारणमि- ति ) ज्ञानस्यैव यत्प्रामाण्य मित्यर्थपरम् । तच्च - प्रमाकरणत्वंच । ( न ज्ञानत्वनियतमिति ) न ज्ञानमात्रवृत्तीत्यर्थः, तथाच प्रमाकरण त्वे समभिव्याहृत ज्ञानमात्रवृत्तित्वान्वयानुपपत्त्या प्रामाण्यपदे तत्प- रत्वभ्रमनिरासः । गङ्गायां घोष इत्यादौ प्रवाहे घोषाद्यन्वयानुपपत्त्या- गङ्गापदे तत्परत्वभ्रमनिरासवदितिभावः । ( मनः प्रभृतीति ) यद्य- पि परामर्शादिनिष्ठ मनुमित्यादि प्रमाकरणत्वं ज्ञानत्वनियतमेव, त- थापि विशेष्यतावच्छेदकावच्छेदेन विशेषणान्वयस्यौ त्सर्गिकत्वात् प्रमाकरणत्वत्वावच्छेदेन ज्ञानत्वनैयत्यान्वयानुपपत्त्या तद्वति तत्प्रकारक ज्ञानत्वत्वावच्छेदेन तदन्वय सम्भवेन तत्परतैव गृह्यतइतिभावः ।

अथैवं " ज्ञानस्यैवे " त्यवधारण परत्वादरो व्यर्थः, मनः प्रभृ- ति निष्ठज्ञानकरणतायाः परामर्शादिनिष्ठकरणताता भिन्नतया तत्र ज्ञानवृत्तित्वस्य बाधेन प्रमाकरणतापरत्व भ्रमनिरास सम्भवादितिचे- त्सत्यम् । सावधारणमित्यस्य अन्वयितावच्छेदकावच्छेदेन स्वार्थ सम्बन्धपरमित्यर्थः । " तच्चनज्ञानत्वनियत " मित्यस्य तत्त्वंच न ज्ञा नवृत्तित्वव्याप्यमित्यर्थ इति न दोषः ।

[ दी ] त्वात । ज्ञानपदेनो त्सर्गतो ज्ञप्ति रेवोपस्थाप्यते । तद्वति

---

[ग] एतेन ज्ञानप्रामाण्यपदस्य ज्ञानस्यैव यत्प्रामाण्यमित्यर्थ परत्व- निर्णायकाभावा न्नोक्त भ्रमनिरासस्म्भवः , नह्यवच्छेदकावच्छेदेनान्वय परताव देताद्दशार्थपरताया अपि औत्सर्गिकत्व मित्यपि परास्तम् ।

यत्तु प्रमात्व प्रमाकरणत्वयोः प्रामाण्यपदार्थत्व व्युत्पादनं तेन- रूपेण पक्षत्वमिति प्रदर्शनाय, " ताद्दशज्ञान करणत्वस्य निरासा- येति " तस्य व्यावर्तनायेत्यर्थः , तथाच ज्ञानमात्रवृत्ति प्रामाण्य- पदार्थत्वेन ज्ञानान्य वृत्तितानवच्छेदक प्रामाण्यपदार्थतावच्छेदकवत्वे न पक्षत्वात् प्रमाकरणत्वत्वरूप प्रामाण्यपदार्थतावच्छेदकस्यच मनः प्रभृति वृत्तितावच्छेदकत्वात न प्रमाकरणत्वस्य पक्षांतर्भावइ- ति नांशतोबाधादिरितिव्याख्यानम् , तन्न, तथासति ज्ञानपदस्य क रणव्युत्पत्या ज्ञानजनकार्थकत्वा त्तत्समभिव्याहारेणापि न भ्रमनि- रास इत्याशंकाया असम्भवेन ज्ञानपदस्य ज्ञप्तावेव भूरिप्रयोगदर्शना न्न ज्ञानकरणत्व परत्व शंके त्यर्थ पराया ज्ञानपदेने त्याद्यग्रिम फक्कि- काया अवतारासम्भवात । ज्ञानपदार्थत्वेन ज्ञाननिवेशे प्रयोजना भावा ज्ज्ञानकरणरूप ज्ञानपदार्थ मात्रवृत्तितायाः प्रमाकरणत्वे सत्वे- पि अंशतो बाधाशंकानवकाशेन ताद्दशफक्किकाया अवतारयितुम- शक्यत्वात् । ज्ञानपदार्थत्वेन ज्ञाननिवेशे ज्ञप्तेरेवौत्सर्गिकज्ञानपदा- धीनोपस्थिति विषयत्वेपि ज्ञानकरणस्य ज्ञानपदार्थतानपायेन अंश तोबाधवारणासंभवेन ज्ञानपदेनेत्यादे र्दुस्संगततापत्तेश्चेति ।

विशिष्य तद्वति तत्प्रकारज्ञानत्वस्य पक्षत्वे ज्ञानत्वनियतत्वस्य- पक्षतावच्छेदकानुप्रवेशो व्यर्थ इत्याशंकां निराकर्तु मभिमतार्थ तात्पर्य निश्चयार्थमेव ज्ञानत्वनियतत्वांशोपादानं, नतु तदपि पक्षतावच्छेदक घटकमित्याशयेनाह (तद्वतीति) प्रवर्तकज्ञानविषय प्रमात्वात्मक प्रामा- ण्यपदार्थ मधिकृत्य विचारादेव प्रमाजनकत्व परताभ्रमो न संभव

[दी] तत्प्रकारकज्ञानत्वंतु फलितार्थः। तद्वति तत्प्रकारकज्ञानत्वस्य तत्तदर्थभेदेन भिन्नत्वात् कस्यापि प्रामाण्यस्यच यावज्ज्ञानग्राहकसामग्रीग्राह्यत्वाभावात तत्तज्ज्ञानप्रामाण्यम् तत्तज्ज्ञान ग्राहकयावद्ग्राह्यम् नवेति लाभार्थं तत्तज्ज्ञानपरम् ज्ञानपदमितितु तत्वम्। यत्तु मिश्रादिमते अगृहीतज्ञानप्रामाण्यविशेषे बाधवारणाय ज्ञानपदम्,

---

[ग]तीत्यालोच्य ज्ञानपदोपादाने प्रयोजनांतर माह (तद्वतीति) तत्तदर्थभेदेन - प्रकारीभूत घटत्व पटत्वादिभेदेन (तत्तज्ज्ञानेति) यद्धर्म प्रकारक ज्ञानप्रामाण्यं यदा पक्ष स्तदा तद्धर्मप्रकारकज्ञान ग्राहक यावद्ग्राह्यत्वमेव साध्यं, नतु सामान्यतो ज्ञानग्राहकयावद्ग्राह्यत्वं, यद्धर्मांतरप्रकारक ज्ञानग्राहकयावद्ग्राह्यत्वंवेति लाभायेत्यर्थः। तत्तज्ज्ञानपरं - विशिष्य साध्यघटकघटत्वादिप्रकारक ज्ञानपरम्। ताहशज्ञानस्यच न पक्षतावच्छेदकांतर्भावः, प्रामाण्यपदेन घटत्ववतीत्यादेः विशेषरूपेणैवोपस्थित्या ऽव्यावर्तकत्वात, अपितु ताद्रूप्येणैव घटत्ववतीत्यादिकम् घटत्वादिप्रकारक ज्ञानघटित साध्यसाधने पक्षइत्यवधेयम्।

मिश्रोक्तज्ञानपदव्यावृत्ति मुपन्यस्य दूषयति (यत्त्वित्यादिना) मिश्रादीत्यादिना भट्टपरिग्रहः (अगृहीतेति) निर्वाच्यया ऽनुव्यवसायसामग्र्या अगृहीतं यद्धर्मप्रकारकज्ञानसामान्यं तद्धर्मवति तद्धर्मप्रकारकज्ञानत्वरूपप्रामाण्य इत्यर्थः (बाधवारणायेति) बाध स्साध्यसत्वानिर्वाहः, तत्प्रामाण्याश्रयग्राहक वक्ष्यमाणसामग्र्या एवा प्रसिद्ध्या प्रसक्तः, तद्वारणायेत्यर्थः। गुरुमते ज्ञानमात्रस्यैव तथाविध स्वप्रकाशसामग्रीग्राह्यतया नैताद्दशो धर्मः प्रसिद्ध्यति, यद्धर्मप्रकारकं ज्ञानं ताद्दशसामग्र्या नगृह्यत इति तन्मत मुपेक्षितम्। नचाप्रामाण्यग्राहकसामग्रीकालएव यद्धर्मप्रकारकग्रहसामग्री नान्यदा, सएव ताद्दशो धर्मः, अप्रामाण्याग्राहकत्वस्य ताद्दशसामग्रीविशेषणत्वादिति वाच्यम्, तद्धर्मघटिताप्रामाण्यग्रहस्य त-

[ दी ] कर्मणि ल्युटा ज्ञानस्य प्रामाण्यमिति विषयत्वार्थकष-ष्ठ्यावा ज्ञायमानपरमिति – तन्न ।

---

[ग] तत्प्रकारकज्ञानानुत्तर मसम्भवेन अप्रामाण्यग्रहसम्पादक तज्ज्ञानसाम-ग्र्याएव तदप्रामाण्याग्राहिकाया स्तज्ज्ञानग्राहकसामग्र्याः प्रसिद्धेः, वर्तमानज्ञानग्राहक सामग्र्या ज्ञाने गृह्यमाणे यथा ज्ञानत्वधर्मिविष यकत्वादे विपरीतं नगृह्यते, तथा सविषयकत्व सप्रकारकत्वादे रपीति सर्वमतसिद्धं । तादृशीच सामग्री मिश्रादिमते यथा ऽनुव्य वसायसामग्री, तथा गुरुमते तत्स्थानाभिषिक्ता व्यवसायसामग्री। ततः स्वप्रकाशात्मक तदंकुरत्वादिप्रकारक ज्ञानसामग्रीकाले न तत्र निष्प्रकारकत्व भ्रमसामग्रीसम्भव इति न सप्रकारकत्वग्रहविरोधि-दोषघटित निष्प्रकारकत्वभ्रमसामग्रीसमवहित स्वप्रकाशात्मक त-ज्ज्ञानसामग्र्या स्तादृशज्ञानप्रामाण्यविरोधि ग्राहकत्वोक्तिसम्भवः। अन्यथा तेषां निर्विषयकत्वभ्रमसामग्रीकाले विषयोपरागासम्भवेन स्वप्रका शात्मक ज्ञानसामग्री विषयानुपरक्तमपि ज्ञानं गृह्णातीति स्वीकारापत्तेः ॥

यद्यपि तदंकुरप्रकारकज्ञान मन्तरेणापि जातायां धर्म्यगृही-तासंसर्गक तदंकुरविशेष्यक ज्ञानात्मक तदंकुरभ्रमजन्य तदंकुर-प्रकारक विसंवादीच्छायां गृहीतस्य तदंकुराभाववति तदंकुरप्र-कारकत्वस्यो पस्थित्या तदंकुराप्रकारक ज्ञानसामग्रीदशायां नियम त उपस्थिततादृशधर्म साकांक्ष तादृशज्ञानरूप धर्मिज्ञानरूपा ऽप्रामा ण्यभ्रमसामग्रीसम्भवः। तथापि तादृशा प्रामाण्यभ्रमस्य ग्राह्याभावान-वगाहितया प्रामाण्यग्रहाप्रतिबन्धकत्वेन तत्सामग्र्या अपि नप्रामा-ण्यग्रहप्रतिबन्धकत्वम् । पूर्वं तादृशप्रामाण्यावच्छेदेन ज्ञाने प्रामा ण्यविरहग्रहोपगमेन तत्प्रतिबन्धकत्वोपपादनेच तादृशाप्रामाण्यग्र-हस्य प्रामाण्यविषयकतया तत्सामग्रीग्राह्यतयैव तत्प्रामाण्ये साध्य सत्त्वनिर्वाहइति सर्वं समंजसम् ॥

ज्ञानपदोपादानेपि कथं तज्ज्ञानप्रामण्यव्यावृत्ति रित्यपेक्षाया मा-ह ( कर्मणि ल्युटेति ) " कृत्यल्युटोबहुळ " मिति सूत्रानुशिष्टेनेत्या दिः। ( ज्ञायमानपरमिति ) निर्वाच्यसामग्रीजन्य ज्ञानविषयार्थ मित्यर्थः ॥

[ दी ] तादृशज्ञानप्रामाण्यत्वेन रूपेण ज्ञानाज्ञानयो र्बाधबुद्ध्य सम्भवात् । विधौ सिद्धसाधनस्य

[ ग ] एतदपि न पक्षतावच्छेदकं, प्रमापदप्रवृत्तिनिमित्तत्वेन पक्षत्वे प्रमापदप्रवृत्तिनिमित्ताश्रय ग्राहकसामग्रीजन्य यावद्ग्रहविषयतायाश्च क्वचिदपि प्रामाण्ये ऽसत्वात् घटत्ववति घटत्वप्रकारकताश्रयग्राहक सामग्रीजन्य यावद्ग्रहविषयत्वादे श्चांशतो बाधेन विशिष्य तत्त द्धर्मघटितप्रामाण्यानां पक्षत्वस्योपगन्तव्यतया ऽव्यावर्तकत्वात् , किन्तु विशिष्य ज्ञायमानप्रामाण्यमेव पक्षो नोक्तप्रामाण्यमिति सूचनाय ज्ञानपदमिति ध्येयम् ।

तादृशप्रामाण्यत्वेन- तदंकुरत्वादिमति तदंकुरत्वादिप्रकारकज्ञान त्वत्वेन प्रकारेण । ( ज्ञानाज्ञानयोरिति ) ज्ञाने तादृशसामग्र्या एव ज्ञानत्वतत्प्रकारकत्वयो र्वैशिष्ट्यादिघटकतया ज्ञानग्राहकत्वेन प्रामाण्याग्राहकतया ज्ञानग्राहकतयाच भट्टमतसिद्धभिन्नसामग्रीत्वेनच तामादायैव साध्यसत्त्वोपपत्तेः अज्ञानेच पक्षतावच्छेदक तादृशप्रामाण्यत्वेन साध्यघटकं यत्प्रामाण्यं तदाश्रयज्ञानविषयत्वस्य तद्विशेष्यतया साध्यघटकीभूते ग्रहे अभावग्रहासम्भवादित्यर्थः ।

नच तत्र तदभावग्रहासम्भवेन तदंशे तद्वत्त्वघटित विशिष्ट साध्यज्ञानप्रतिबन्धासम्भवेपि तद्घटितविशिष्ट साध्यविषयिण्या वाद्युद्देश्यानुमिते र्भ्रमत्वं दुर्वारमेवेति वादिनिग्रहप्रसंगइति वाच्यम् , मध्यस्थादेरपि तादृशप्रामाण्यत्वरूप पक्षतावच्छेदकप्रकारक पक्षाज्ञानेन तदवच्छिन्न उक्तसाध्यस्या नुमित्या वगाहनासम्भवात् प्रतिवादिना तदुद्भावनासम्भवाच्च ।

प्रामाण्यपदार्थस्य दर्शितरीत्या ज्ञानत्वघटिततया इच्छावृत्ते र्घटत्ववति घटत्वादिप्रकारकत्वादे रिच्छादिग्राहकाग्राह्यत्वात् बाधवारकतया-ज्ञानपदसार्थक्यसम्पादनं मिश्राणा मतितुच्छमिति तन्नोपन्यस्तम् ॥

( विधाविति ) मीमांसकै स्साध्यइति शेषः । ( सिद्धसाधनस्येति ).

[दी] निषेधेबाधस्याप्रसिद्धेर्वावारणाय"यावदिति"फलताग्रहविशेषणम् । तथाच तादृशग्रहत्वव्यापक विषयिताप्रतियोगित्वमर्थः ।

---

[ग] प्रामाण्यानुमितिसामग्रीमादायेत्यादिः।"निषेधे" नैयायिकैस्साध्ये,तादृशसामग्रीग्राह्यत्वमादायैव बाधस्य वारणायेत्यन्वयः । घटज्ञानंप्रमासर्वमभिधेय मित्यादिज्ञानविषयत्वस्य केवलान्वयित्वेन यावत्त्वाघटितसाध्याप्रसिद्धावप्यभावसाधने पक्षे प्रतियोगिमत्त्वमेव बाधइत्याशयेनेदं (अप्रसिद्धेर्वेति) समुच्चये वाकारः । उक्तबाधपक्षेपि साध्याप्रसिद्धिसत्त्वेन परस्परव्यवच्छेदरूपविकल्पासंभवात् । ... ... ... ...

अथवा उक्तमीमांसकसाध्ये पक्षनिष्ठाभावप्रतियोगित्वसाधनेनापिनैयायिकस्य कृतकृत्यतया तत्साधनाभिप्रायेण " बाधस्ये " त्युक्तं । तदभावसाधनाभिप्रायेण " अप्रसिद्धेर्वे" ति । प्रसिद्धसाध्यकएव बाध इत्याशयेन वाकारसङ्गतिः । अन्यथा अप्रसिद्धिर्बाधश्च द्वयं द्वितीयपक्षे दूषणमवगंतव्यं ॥ ... ... ... ... ...

ननु सामग्र्यांयावत्त्वविशेषणमयुक्तं, यावत्सामग्रीजन्य ग्रहाप्रसिद्धेः नंहि सर्वाभिर्ज्ञानसामग्रीभिः किमपि ज्ञानं जन्यते। यदिच्चयावतीस्सामग्रीः प्रातिस्विकरूपेणोपादाय तत्तज्जन्यग्रहविषयत्वं साध्यते तदातदंतर्गतानुमितिसामग्र्यादिजन्यत्वसाधनेसिद्धसाधनादिकमेवदुर्वारं । अनुव्यवसायादिसामग्रीणांताद्रूप्येणप्रवेशेमतत्रयसाधारण्यानिर्वाहः।तादृशसामग्रीत्वव्यापकस्वग्राहकताकत्वनिवेशेनायं दोषइतिच्चेत् तथापि ज्ञानग्राहकताव्यापकतानिवेशैनैवोपपत्तौ सामग्रीत्वनिवेशवैयर्थ्यमित्यतआह (विशेषणमिति) स्वाश्रयग्राहकसामग्रीजन्ययावद्ग्रहविषयत्वं साध्यमिति फलितं । व्यापकतारूपयावदर्थमंतर्भाव्यनिष्कर्षमाह ( तादृशेति ) तत्तद्धर्मप्रकारकज्ञानग्राहकसामग्रीजन्येत्यर्थः । तादृशज्ञानग्रहस्यैव तज्जनकसामग्रीजन्यग्रहत्वेनोपादानेपि यथासन्निवेशे न वैयर्थ्यम् ॥ ... ...

यद्यपि नैयायिकमतेपि प्रामाण्यविषयताया घटत्वप्रकारकत्वाविषयतात्वादिनाऽनुव्यवसायादि सामग्रीजन्यग्रहत्व व्यापकत्वात्सिद्धसाधनम् , घटत्ववद्विशेष्यकत्वावच्छिन्न घटत्वप्रकारकत्वत्वावच्छिन्न निरूपितविषयतात्वेन व्यापकत्वविवक्षाच न्यायमते साध्याप्रसिद्ध्या न -

संभवति। नच विशिष्टप्रामाण्ये तादृशग्रहनिष्ठ भेदप्रतियोगितानवच्छेदकविषयितानिरूपकत्व पर्याप्तिस्साध्यतया नानुपपत्तिरितिवाच्यम्, तत्तज्ज्ञानव्यक्तिविषयितावच्छिन्न प्रामाण्यविषयितायास्तत्तज्ज्ञानरूपाश्रयभेदेन भिन्नतया चालिनीन्यायेन तादृशग्रहनिष्ठभेदप्रतियोगिता वच्छेदकतया तदनवच्छेदकप्रामाण्य विषयित्वाप्रसिद्धेः। ... ...

यत्तु विषयितानिष्ठ तादृशग्रहत्वव्यापकतायां निरूपितत्वसंबन्धेन घटत्ववति घटत्वप्रकारकत्व विशिष्टसामान्याभावो ननिरुक्तग्रहइति - परमते तथाविधप्रामाण्ये तथाविधव्यापकतावच्छेदकत्वमक्षतमेवेति न बाधः, न्यायमतेच केवलघटत्वप्रकारकत्वत्वाद्यवच्छिन्न निरूपितविषयितायाः विशिष्टप्रामाण्यानिरूपितत्व विरहात्तादृश विषयिताशालिन्यपि अनुव्यवसाये निरूपितत्वसंबन्धेन विशिष्टप्रामाण्यावच्छिन्न विषयितावरहस्य अक्षततयाविशिष्टप्रामाण्ये न तादृशानुव्यवसायनिष्ठाभाव प्रतियोगितानवच्छेदकत्वमिति नासिद्धसाधनम्। घटत्ववंति घटत्वप्रकारकत्वादीनां तत्तद्घटविशेष्यकत्वावच्छिन्नघटत्वादिप्रकारकत्वादि रूपाणां विशेष्यभेदेन भिन्नतया प्रत्येकं घटत्वादिप्रकारकघटादि ज्ञानग्रहत्वसमानाधिकरणाभाव प्रतियोगितायां निरूपितत्वसंबन्धेनावच्छेदकत्वेपिविशिष्य तत्तद्घटादि व्यक्तिविशेष्यकत्व घटितप्रामाण्ये तत्तद्व्यक्तिविशेष्यकघटत्वादिप्रकारक ज्ञानग्रहत्वघटितसाध्यस्य साधनीयतया नबाधइति। ... ... ... ...

तदपिन-गुरुमते व्यवसायरूपग्रहग्रहे विशिष्टप्रामाण्यनिरूपिताधिकरणतासत्त्वेनैव तस्य निरूपितत्वसंबन्धेन व्यवसायवृत्त्यभाव प्रतियोगितायामनवच्छेदकत्वाद्व्यवसाये प्रामाण्यविषयित्वासिद्धेः। तादृशग्रहनिष्ठाभाव प्रतियोगितावच्छेदकत्व पर्याप्तिविरहरूप व्यापकतावच्छेदकत्वस्य केवलघटत्वप्रकारकत्वादौ सत्त्वेनाप्यवच्छिन्नत्वान्तविशिष्टे - घटत्वादिप्रकारकत्वे पक्षे तत्साधने सिद्धसाधनस्य दुर्वारत्वाच्च, विशिष्टस्या नातिरिक्तत्वात् ... ... ... ...

नचविशेषणान्तर्भावेन विशेष्ये अवच्छेदकत्वपर्याप्तिविरह सिद्धेरुश्यतया नासिद्धसाधनमिति वाच्यम्, अनुमानात्पक्षतावच्छेदक विशे

[दी] ज्ञातग्राहकात्मादिजन्ययावद्ग्रहविषयत्वस्याप्रसिद्धेस्सामग्रीति।

---

[ग] षणांशे साध्यवत्त्वज्ञानासंभवेन तदन्तर्भावेनच पक्षे साध्यवत्त्वसिद्धेरुद्देश्यत्वासंभवात् । ... ... ... ...

नचतादृशविशेषणावच्छेदेन विशेष्ये साध्यवत्त्वसिद्धेरुद्देश्यतामुपगम्य सिद्धसाधनपरिहारसंभवः। विशेष्यनिष्ठे अवच्छेदकत्वपर्याप्तिविविरहवत्त्वे तन्निष्ठस्य घटत्वप्रकारकत्वादे रिवावच्छिन्नत्वान्तविशेषणस्यापि अवच्छेदकताया न्यायमतसिद्धत्वात्तादृशधर्मस्य विशेष्यविशेषणसमुदायनिष्ठावच्छेदकता पर्याप्तेरनवच्छेदकत्वा त्समुदायनिष्ठावच्छेदकतापर्याप्त्यभाववत्त्वस्य परोद्देश्यसिद्धिकस्यैवा वच्छेदकताया एकदेशात्मकविशेषणेऽसंभवादिति । ... ... ... ...

एतेन प्रामाण्यनिरूपितत्व विशिष्टविषयितात्वं पक्षीकृत्य तादृशग्रहत्वव्यापकतावच्छेदकत्वकोटिका - विप्रतिपत्तिः, तादृशग्रहत्वव्यापकतावच्छेदक घटत्वादिमद्विशेष्यकत्वावच्छिन्न घटत्वादिप्रकारकत्व निरूपितत्वविशिष्ट विषयितात्व घटत्वादिविषयितात्वान्यतररूपवद्विषयिताकत्व कोटिकविप्रतिपत्तिरपिवा, नसाधीयसीतिफलितम् ।

तथापि तादृशग्रहनिष्ठाभाव प्रतियोगितात्वावच्छिन्नं पक्षीकृत्यैव विशिष्टप्रामाण्य विषयितात्वावच्छिन्नत्वकोटिकविप्रतिपत्तौ तात्पर्यात् न कश्चिद्दोषः(ज्ञानग्राहकेति)घटत्वादिप्रकारकज्ञानग्राहकेत्यर्थः (आत्मादीति)

यद्यप्यात्मनोऽप्रामाण्यग्रहजनकतया अप्रामाण्याग्राहकत्व विशेषणेन व्यावृत्तेरिदमसङ्गतम् । तथाप्यतद्गुणसंविज्ञानबहुव्रीहिणा शरीरविशेषादेरपि विवक्षणीयतया नदोषः । ... ... ...

अथवा स्वयमप्रामाण्याग्राहकपदस्य प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेनच यद्भट्टमतसिद्धं तदन्यार्थकत्वेन व्याख्येयतया आत्मनः प्रामाण्यग्राहकत्वेन ज्ञानग्राहकत्वेनच भट्टमतसिद्धतया तद्विशेषणेन न व्यावृत्तिरिति यथाश्रुतमेव साधु ( अप्रसिद्धेरिति ) घटत्वादिप्रकारकग्रहस्यापि घटत्वादिप्रकारक ज्ञानग्राहकजन्ययावद्ग्रहान्तगर्ततया गुरुमतातिरिक्तमते तादृशयावद्ग्राह्यत्वाप्रसिद्धेरिति भावः। ज्ञान-त्वविशिष्टविषयकयावद्ग्रहोपादानेन ज्ञानत्वे प्रसिद्ध्युपपादनेपि घटत्ववति घटत्वप्रकारकत्वादौ बाधवारणमशक्यमेवेति बोद्धव्यम् । ( साम ग्रीति )

यद्यपि सामग्रीपदस्य यावत्कारणपरतया घटत्वादिप्रकारक ज्ञान ग्राहकयावत्कारणजन्य ग्रहघटितसाध्यं पर्यवसितम्। तथाचाप्रसिद्धिः। कस्याप्यनुव्यवसायादे र्घटत्वादिप्रकारक व्यवसायग्राहकतत्तद्व्यवसायतत्तन्मनोयोगादिरूप नानाकारणव्यक्तिघटित समुदायजन्यत्वासम्भवात्। सामग्रीपदेन प्रागभावमात्रोपादाने गुरुमिश्रयोर्मते ज्ञाततालिङ्गकानुमितेः शशविषाणायमानतया व्यवसायादिरूपज्ञानग्रहस्यैव प्राभाकरादिमते ज्ञाततालिङ्गकानुमितित्वेनभट्टाभिमानविषयतया तत्प्रागभावस्यज्ञानग्राहकतया भट्टाभिमतत्वमिति व्यवसायादिरूपज्ञानग्रहस्य निर्वाच्यसाध्यघटकत्वानुपपत्तेः। नचव्यवसायादि प्रागभावे ज्ञाततालिङ्गकानुमिति प्रागभावत्वेन भट्टाभिमाने तत्रप्रामाण्यग्राहकत्वमपि तदभिमतमितिप्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेनच यद्भट्टाभिमतं तदन्यत्वंतत्राक्षतमेवेतितज्जन्यग्रहस्यापि प्राभाकरादीनां साध्यघटकतेतिवाच्यम्। ज्ञाततालिङ्गकानुमिति प्रागभावत्वेन प्रामाण्यग्राहकत्वाभिमान विषयस्यापि व्यवसायादिप्रागभावत्वेन तेषांप्रामाण्याग्राहकत्वाभिमान विषयतया व्यवसायादिप्रागभावस्य साध्यघटकभेदप्रतियोगित्वात्। यदिचैकरूपेणतदभ्युपगमोऽवश्यंविवक्षणीयः - अन्यथाकारणसमुदायरूप सामग्रीनिवेशे व्यवसायादिसाग्र्यां ज्ञाततालिंगकानुमिति सामग्रीत्वेन ज्ञानग्राहकतया व्यवसायादिसामग्रीत्वेन प्रामाण्याग्राहकतया भट्टाभिमतत्वात् तस्यास्साध्यघटकत्वानुपपत्तेः, तथाच प्रागभावमात्रनिवेशेपि नदोषइतिविभाव्यते तथाप्यग्रे ओदनकामकार्यताज्ञानविषयः पाकइत्यादिवाक्यतः शाब्दबोधस्य गुरुमते शब्दानुपस्थाप्यौदन साधनताज्ञानविषयत्वरूप योग्यताविषयकस्य सामग्र्याः शब्दाजन्यतादृश योग्यताज्ञानघटिततया ज्ञान ग्राहकत्वेन भट्टमतासिद्धत्व सम्पादनं दीधितिकृतां प्रागभावमात्रोपादाने विरुद्ध्येत, तादृशशाब्दबोधस्य भट्टमतेपि कार्यताज्ञानविषयकतया तत्प्रागभावमात्रस्य ज्ञानग्राहकतया भट्टमतासिद्धत्वात्, कथञ्चिदपि तद्भिन्नत्वानुपपत्तेः।

तथापिस्वाश्रयविषयक ग्रहोत्पत्तिप्रयोजकतावच्छेदकरूपावच्छिन्नप्रयोज्योत्पत्तिकयावद्ग्रहविषयत्वरूप साध्यविवक्षया नानुपपत्तिः। तत्तद्व्यवसायादिरूप ज्ञानग्रहोत्पाद प्रयोजकतावच्छेदकत तद्व्यक्त्युपधायक

[दी] ज्ञानव्यक्तिभेदानामुपादानात्तत्र - ज्ञानत्वविशिष्टग्राहकत्वस्य विवक्षणाद्वा ज्ञानत्वे विधिप्रसिद्धिः ।

---

[ग] कारणस्तोमनिष्ठ समुदायत्वावच्छिन्न तत्तद्व्यक्तिसामग्रीप्रयोज्योत्पत्तिकत्वस्य ज्ञानग्रहात्मक तत्तद्व्यवसायादिष्वेव तत्तन्मते यथायथं प्रसिद्धेः ।

ननु घटत्वादिप्रकारक घटादिज्ञानग्राहक सामग्रीजन्यानां यावतां तादृशग्रहाणां विषयत्वं न तावत्तादृशज्ञाने सर्वमतसिद्धं - तादृशैकज्ञानव्यक्तिग्रहे तादृशापरज्ञान व्यक्तेरविषयत्वात् । नापि ज्ञानत्वे, घटत्वप्रकारकत्वमात्रेण तादृशज्ञानग्रहे नैयायिकादिनये ज्ञानत्वाभानादित्याशङ्कां परिहरति (ज्ञानव्यक्तीति) तत्तद्व्यक्तित्वेन घटादिज्ञानव्यक्तीनां साध्येन्तर्भावनीयत्वादित्यर्थः । तत्र - तत्तज्ज्ञानव्यक्तौ (विधिप्रसिद्धिरिति) तत्तज्ज्ञानव्यक्तिग्राहक सामग्रीजन्ययावद्ग्रहविषयत्वरूप विधिकोटिप्रसिद्धिरित्यग्रिमेणान्वयः । ग्राह्यज्ञानानां घटत्वादिप्रकारक घटादिज्ञानत्वेन निवेशेऽपि ज्ञानत्वे तत्प्रसिद्धिमुपपादयति । (ज्ञानत्वविशिष्टेति) ज्ञानग्राहकेत्यनेन ज्ञानत्वविशिष्टस्वाश्रयविषयक ज्ञानजनकसामग्रीविवक्षणाद्वेत्यर्थः । (ज्ञानत्वइति) केवलघटत्वादिप्रकारकत्वेन ज्ञानग्रहस्य ज्ञानत्वविशिष्टाविषयकत्वेन व्यावर्तनादितिभावः । ... ...

यद्यपि प्रामाण्याग्राहकत्वेनेत्यादि विवक्षणे तद्वतितत्प्रकारकज्ञानत्वाग्राहकत्वमेव तत्र निवेश्यं । अन्यथा ज्ञानत्वविशिष्टग्राहकसामग्र्युपादानेऽपि तद्वति तत्प्रकारकगुणाभिन्नं ज्ञानमित्यादि शाब्दसामग्र्या तद्वति तत्प्रकारकज्ञानत्वरूप प्रामाण्याग्रहेण बाधस्य दुर्वारत्वात् । तथाच ज्ञानग्राहकपदेन ज्ञानत्वविशिष्टग्राहकत्वपर्यंताविवक्षणेऽपि ज्ञानत्वे प्रसिद्धिसंभवः । तथापि यथाश्रुताभिप्रायेणेदं । अन्यथा शाब्दबोधादिसामग्रीविशेषैःप्रामाण्याग्रहेण बाधप्रसंगस्य वारणाय तादृशसामग्रीव्यावर्तक कथित विशेषणोपादाने तावतैव घटत्वादिरूपप्रकृतप्रामाण्यघटकप्रकारकत्वत्वेन ज्ञानग्रहविषयक ग्रहवारणे विना प्रयासं घटत्वादौ विधिप्रसिद्धिसंभवात ज्ञानत्वे तत्प्रसिद्धिसंपादक प्रयास वैफल्यादितिनानुपपत्तिः । ... ... ... ...

वस्तुतस्तु तद्वतितत्प्रकारकज्ञानत्वत्वेन पक्षत्वं न विचारसहं,ज्ञानत्वत्वस्य स्वतोऽग्राह्यतया तादृशप्रामाण्यत्वविशिष्टस्य स्वतोग्राह्यत्वसाधने

[दी] इदंज्ञानमप्रमेतिज्ञानग्राहकेण प्रामाण्याग्रहाद्बाधवारणाय ( अप्रा माण्याग्राहकेति ) अप्रामाण्यम् - प्रामाण्यविरोधि ।

---

[ग]बाधात्। अतस्तद्वति तत्प्रकारकत्वत्वस्यैव पक्षतावच्छेदकत्वंस्वीकरणीयम् । तथाच तद्रूपावच्छिन्नाग्राहकत्वमेव प्रामाण्याग्राहकत्वेनेत्यत्र विवक्षणीयम् । एवञ्चज्ञानत्वविशिष्ट ग्राहकत्वविवक्षयैव ज्ञानत्वे विधिकोटिप्रसिद्धिः । ...

नचप्रामाण्यपदस्य तद्वति तत्प्रकारकत्वमात्रार्थकत्वे यथाश्रुतपरित्यागाद्दोषः, प्रामाण्यपदेन तद्वति तत्प्रकारकज्ञानेतरत्व व्यापकभेदप्रतियोगितावच्छेदकत्वे सति तद्वति तत्प्रकारकज्ञाननिष्ठभेद प्रतियोगितानवच्छेदकत्वेन तद्वति तत्प्रकारकज्ञानत्वरूप प्रकृत्यर्थतावच्छेदक बोधनादितिवाच्यम् । अगत्या यथाश्रुतार्थपरित्यागात् । "प्रामाण्याग्राहकत्वेने" त्यत्रच ज्ञानत्वघटितप्रामाण्यगृाहकत्वं प्रतियोगितया विवक्षितमित्यत्रैव "ज्ञानत्वविशिष्टस्य विवक्षणादि" त्यस्य तात्पर्यमित्यप्याहुः । ...

इतिज्ञानगृाहकेण - इत्याकारकज्ञानगृहजनकसामगृ्या । अप्रामाण्यपदस्यभ्रमत्वार्थकत्वे प्रमात्वाभावगृाहकेण प्रमात्वाभावार्थकत्वे चभ्रमत्वगृाहकेण प्रामाण्यागृहात् बाध इति तदुभयमनुगमयति ( अप्रामाण्यमिति ) प्रामाण्यविरोधित्वं - तत्प्रामाण्यावच्छेदकावच्छेदेन तद्वद्वृत्तिभिन्नत्वम् । घटत्वादिना घटपटादिविषयकज्ञाने घटपटादिरूपांशभेदेन घटत्वादिप्रमात्व तदभावादि सत्वात्तदभावादीनामपि तद्विरोधित्वानुपपत्तिरित्यंशैक्योपादानम् । व्याप्यवृत्तेरवच्छेदकानभ्युपगमे ज्ञानत्वादेः प्रामाण्यविरोधितावारणाय प्रमात्वावच्छेदकानवच्छिन्नत्वाऽवच्छिन्नत्वो भयाभाववत्प्रमानिष्ठाधिकरणता कान्यत्वं प्रमात्वविरोधित्वं वक्तव्यम् ।

यत्तु प्रमात्वगृहप्रतिबन्धकीभूत गृहविषयत्वं तद्विरोधित्वं । भ्रमत्व घटत्वादिगृहस्य प्रमात्वगृहे गृाह्याभावावच्छेदक धर्मदर्शनादिविधयाप्रतिबन्धकत्वात् भ्रमत्वघटत्वादीनां प्रमात्वविरोधितेति । तदसत् । पुरोवर्तिविशेष्यकत्वावच्छेदेन प्रमात्वाभावगृहदशायां तद्धर्मज्ञानस्यापि प्रमात्वगृहप्रतिबन्कधतया तेषामपि प्रमात्वविरोधितया प्रामाण्यगृहसा

मग्र्या विरोध्यग्राहकत्वस्य दुर्घटत्वात् ।

नचभवन्मते ज्ञानत्वादि धर्माणां प्रामाण्याविरोधितया तदवच्छेदे नतद्वति तत्प्रकारकत्वाद्यभाव ग्रहदशायां विरोध्यग्राहिकया ज्ञानत्वादिग्राहकसामग्र्या प्रामाण्याग्रहात् बाधवारणमशक्यम् । यदिच प्रामाण्यस्य लौकिकप्रत्यक्षमंगीकुर्वतां तदापि लौकिकप्रामाण्यभानमुपपद्यतएव । अवच्छेदकधर्मदर्शनादे लौकिक प्रत्यक्षाविरोधित्वात् मिश्रातिरिक्त मीमांसकमते प्रामाण्यभानस्य लौकिकसन्निकर्षघटित सामग्र्यनधीनत्वेपि तादृशसामग्रीतुल्यप्रामाण्य भासकसामग्र्यधीनतद्भानस्य लौकिकभानतुल्यतया अवच्छेदकधर्म दर्शनाप्रतिबध्यत्वेन तन्मतेपि तथाप्रामाण्यभानोपपत्तिरित्युच्यते, तदा भ्रमत्वग्रहकालेपि अनुव्यवसायादेः प्रामाण्यावगाहित्वसम्भवात् तदग्राहकत्व निवेशनमफलमितिवाच्यम् । भ्रमसामग्रीसत्त्वे भ्रमविषयनिष्ठासाधारण धर्मविशेषाणां लौकिकंज्ञानमपिनोत्पद्यते, शङ्खःपीतइत्याद्यारोप दशायां श्वैत्याद्यग्रहात्, अतः प्रमायां प्रमात्वविरोधि भ्रमत्वाद्यारोपसामग्रीदशायां अनुव्यवसायादिना प्रमात्वग्रहासम्भवेन भ्रमत्वाद्यग्राहकत्व निवेशस्यावश्यकत्वात् । अविरोधिज्ञानत्वादेश्च प्रमायामारोपसम्भवात् प्रमात्वाभावावच्छेदकतया गृहीत तद्धर्मभानदशायामपि प्रमात्वलौकिकग्रहस्य श्वैत्याद्यभावावच्छेदकतया गृहीतशङ्खत्वादि ग्रहदशायां श्वैत्यादिलौकिकग्रहवत्सम्भवात्

अथभ्रमत्वस्य परमतेप्यतीन्द्रियतया तस्यारोपेपरमते गुरुत्वाद्यारोपइव नसाक्षात्कारित्वग्रहः;योग्यपीतत्वाद्यारोपएव तद्ग्रहस्यानुभाविकत्वात्। तथाचतदारोपसामग्र्या नप्रमात्वलौकिकप्रत्यक्षप्रतिबन्धः। यादृशदोषजन्यज्ञानेसाक्षात्कारित्वग्रहः तद्घटितारोपसामग्र्याएव लौकिकप्रत्यक्षसामग्र्यपेक्षयाबलवत्त्वादिति कथंभ्रमत्वारोपकाले प्रमात्वाग्रहइति चेन्न । उक्तयुक्त्याभ्रमत्वारोपसामग्र्याः प्रमात्वलौकिकप्रत्यक्ष सामग्र्यपेक्षया बलवत्त्वविरहेपि संशयजनकदोषस्येव विपर्ययजनकदोषस्यच साक्षात्कारित्वग्रहाप्रयोजकस्यापि प्रमात्वग्रहप्रतिबन्धकतया भ्रमत्वारोपकाले प्रमात्वग्रहासम्भवात् ।

अस्तुवाभ्रमत्वग्राहकसामग्र्या अपि प्रमात्वग्राहकत्वं, तथापि, प्रमात्वाभावप्रमात्वघटकत द्वद्विशेष्यकत्वाभावाद्यनुगमपरएव प्रकृतग्रन्थः

[दी] घटत्वनिष्प्रकारकत्वादिघटित प्रामाण्यग्रहे तद्विरोधिनो घट-

---

[ग] तिनासंगतिः .

वस्तुतस्तु तदभाववति तत्प्रकारकत्वरूपं भ्रमत्वं तदभावधर्मिता वच्छेदकक तत्प्रकारकाहार्यभ्रमे लौकिकप्रत्यक्षविषय इतिध्येयम् ।

यत्तु अप्रामाण्यारोपकालेऽपि निर्धर्मितावच्छेदक कप्रामाण्यभानसम्भवात् अत्राप्रामाण्याग्राहकत्व विशेषणानर्थक्यमिति देश्यं । तन्नसाधु। पुरोवर्तिविशेष्यकत्वावच्छेदेन प्रामाण्यग्रहस्यैव पुरोवर्तिनि प्रवर्तकतया अस्यैव स्वतस्त्व परतस्त्व विवादास्पदतया तद्विशेष्यकज्ञानप्रामाण्ये तद्विशेष्यकत्वावच्छेदेन यावत्स्वाश्रयग्राहकग्राह्यत्वस्यैव परैस्साधनीयतया तत्सार्थक्यात् ।

नचैवंज्ञाने साध्यप्रसिद्धिकथनं नसंगच्छतइतिवाच्यम् । यथाश्रुतसाध्याभिप्रायेणापाततस्तत्कथनात् । उपदर्शितसाध्याभिप्रायेण प्रामाण्यघटक घटत्वादिकमुपेक्ष्य ज्ञानत्वपर्यन्तानुसरणात् ।

नचानुव्यवसायादेः पुरोवर्तिविशेष्यकत्वं धर्मितावच्छेदकीकृत्य ज्ञानत्वावगाहित्वानियमात् न ज्ञानत्वेप्युक्तसाध्यप्रसिद्धिसम्भव इति वाच्यम्, तद्विशेष्यकत्वावच्छिन्ने ज्ञानत्ववैशिष्ट्यग्राहक सामग्र्याएवसाध्येन्तर्भावनीयतया तादृशसामग्रीजन्य यावद्ग्रहविषयताया ज्ञानत्वे सौलभ्यादित्यलमतिविस्तरेण ।

"तदप्रामाण्याग्राहके" त्यत्र तत्पदप्रयोजनमाह ( घटत्वेति ) घटत्ववतीत्यादि प्रामाण्यग्राहकसामग्र्या घटादिरूपविशये तत्प्रामाण्यविरोधिघटत्वादेरवश्यं ग्रहात् प्रकृतप्रामाण्यविरोध्यग्राहक तद्ग्राहकसामग्र्या अप्रसिद्धेरित्यर्थः । अप्रामाण्यपदस्य यदि साक्षात्प्रमात्वग्रह प्रतिबन्धकम् यज्ज्ञानं तद्विषयार्थकतोपेयते, उक्तयुक्त्या भ्रमत्वारोपसामग्र्या भ्रमत्वलौकिकप्रत्यक्षाप्रतिबन्धेन भ्रमत्वापरिग्रहेपि क्षतिविरहात् । तदा घटत्वादिकमादाय दोषाप्रसक्तावपि इदं निष्प्रकारकमित्यादि ज्ञानीयनिष्प्रकारत्वादिमतीत्यादि प्रामाण्यग्राहकसामग्र्या निष्प्रकारकत्वादिग्राहकत्वस्यावश्यकत्वात् तादृशप्रामाण्यपक्षकस्थलेऽनुपपत्तिर्दुर्वारैवेत्याशयेनाह ( निष्प्रकारकत्वेति ) प्रमात्वविरोधि ज्ञानवृत्ति धर्माग्राहकत्व निवेशे घटत्वादिग्राहकतामादाय दोषानवकाशाद्वा निष्प्रकारकत्वाद्य

[दी] त्वादेरवश्यं गृहात्तादितिलुप्तसप्तमीकम् । अप्रमाण्यग्रहः - इदं ज्ञानमप्रमेतिव्यवहारजनकोग्रहः ।

---

[ग] नुसरणम् । घटइत्यादिज्ञानेनिर्विशेषणघटत्वादिरूपप्रकारांशे निष्प्रकारकत्वसत्त्वात्तत्सम्बन्धावगाहि ज्ञानप्रामाण्यविरोधिनस्तत्सम्बन्धेन तत्प्रकारकत्वाभावस्यच ज्ञानेतिसुलभत्वात् ज्ञानवृत्तित्वविशेषणेन तद्वारणासंभवात् । तस्याप्रामाण्यं तदप्रामाण्यमिति षष्ठ्यन्तार्थस्य प्रामाण्येनान्वयात् तदीयप्रामाण्यविरोधिपर्यवसितमिति मिश्रव्याख्यायां निष्प्रकारकत्वादेः सकलप्रामाण्यविरोधितया उक्तदोषोद्धारासम्भवात् सप्तमीसमासाभिप्रायेणाह (लुप्तसप्तमीकमिति)

ननु तदप्रामाण्याग्राहकपदस्य सप्तमीसमासेन तद्विशेष्यकाप्रामाण्यग्रहाजनकत्वमर्थः, एवञ्च घटत्वादिप्रकारकज्ञानग्राहक सामग्र्या स्तज्ज्ञानांशे प्रामाण्यघटकघटत्वादि ग्राहकत्वाभावेनोक्तदोषवारणेपि अन्यथाख्यातिमनभ्युपगन्तु र्गुरोर्ज्ञानविशेष्यकाप्रामाण्यगृहाप्रसिद्ध्यासाध्याप्रसिद्धिर्दुर्वारैव, ज्ञानेऽप्रामाण्यासत्त्वेन तत्प्रकारकज्ञानस्या न्यथाख्यातित्वेन तेनाभ्युपगमासम्भवात् । अप्रामाण्यग्रहस्याप्रामाण्या वगाहित्वमात्रेण निवेशे ज्ञानेऽप्रामाण्यप्रकारक विसंवादीच्छाप्रसिद्ध्या साध्याप्रसिद्धि वारणेतु ज्ञानग्राहकसामग्र्यां तादृशेच्छाद्यजनकत्वस्याव्यावर्तकतया अप्रामाण्यभ्रमात्मक ज्ञानग्राहकसामग्र्या प्रामाण्याग्रहेण बाधोदुर्वारइत्याशङ्क्याह (अप्रामाण्यग्रहइति) (व्यवहारजनकइति) तादृशशब्दप्रयोगजनकइत्यर्थः । प्रामाण्यविरोधिप्रकारतानिरूपित तज्ज्ञाननिष्ठविशेष्यतानिरूपकइति यावत् । गुरुमते भ्रमस्थले विभिन्नज्ञानगोचरयोरपि धर्मधर्मिणोर्विशेषणविशेष्य भावोपगमात् नतन्मतसिद्धाप्रामाण्यभ्रमासंग्रहः ।

एतेन शब्दप्रयोगेर्थज्ञानकारणतायाः निर्युक्तिकत्वात्सयुक्तिकत्वेपि इदं ज्ञानमप्रमेतिवाक्यस्यानुपूर्वीविशेषपुरस्कारेण निवेशोऽप्रमापदस्यशक्तिभ्रमेणाधुनिकसङ्केतेनवा प्रामाण्यप्रकारकबोधेपि हेतुतया प्रामाण्यग्रहस्यापि तादृशशब्दप्रयोगजनकतया प्रामाण्यग्राहकसामग्र्याः तादृशशब्दप्रयोगजनकगृहाजनकत्वाप्रसिद्धेः अप्रमाशब्देन प्रमाविरोधित्वेन प्रमा-

[दी] सचमिश्रादिमते विशिष्टज्ञानं । गुरूणान्तत्स्वातन्त्र्येणाप्रामाण्योपस्थितौ धर्मिज्ञानम् । यत्रच तादृशग्रहादिः-कदापिनजातस्तत्राग्राहकान्तं नोपादेयं

---

[ग] भेदवत्त्वेनच बोधनात् प्रमात्वाभावत्व भ्रमत्वत्वादिनाऽबोधके तत्र तादृप्येण भ्रमत्वादिग्रहहेतुतायाश्चासम्भव दुक्तिकत्वात् । तदंशे वस्तुगत्याप्रमात्वविरोधि धर्मप्रकारिका या प्रतीतिः तत्परशब्दजनकज्ञानत्वेन इदं ज्ञानं भ्रम इत्यादिज्ञानसंग्रहस्यच तदंशे तत्प्रकारकत्वस्य गुरुमतासिद्धभ्रमत्वादिप्रकारक भ्रमसाधारणस्य दुर्वचतयाऽशक्यत्वात् । सुवचत्वेपि तेनैवरूपेणेदं भ्रम इत्यादिसकलज्ञानसंग्रहसम्भवे तद्रूपेणप्रतीतिमादाय-तत्परवाक्यजनकत्वेन तादृशज्ञानसंग्रहस्य शिरोवेष्टनेन नासिकास्पर्शतुल्यत्वाद्यथाश्रुतासङ्गतावपि नक्षतिः ।

केचित्तु व्यवहारजनकइत्यस्य प्रमात्वविरोधिप्रकारकत्वेन तद्धानविषयकोयोभिप्रायः तदधीनवाक्यजनकइत्यर्थः । अभिप्रायश्चेच्छात्मको व्यधिकरणप्रकारकोपि गुरूणामनुमतः । अर्थबोधेच्छापूर्वकवाक्ये वाक्यार्थज्ञानंहेतुरिति मतमवलम्ब्येदमित्याहुः ।

सच - तादृशग्रहश्च ( विशिष्टज्ञानमिति ) तेषाम्मतेऽन्यथाख्यात्यभ्युपगमादेकज्ञानगोचर धर्मधर्मिणोरेव विशेषणविशेष्य भावादिति भावः । (स्वातन्त्र्येणेति) स्वतन्त्रोपस्थिताप्रामाण्य प्रकारतानिरूपितधर्मिनिष्ठविशेष्यतानिरूपक तज्ज्ञानगोचरानुभव रूपज्ञानान्तरमित्यर्थः ।

एतेनाप्रामाण्याग्राहकपदस्याप्रामाण्यविषयक ज्ञानाजनकार्थत-याज्ञानग्रहजनकसामग्र्याश्च गुरुमते स्वतन्त्राप्रामाण्य ग्रहाजनकतयानुपपत्तेर्ज्ञानरूप धर्म्यगृहीतासंसर्गक स्वतन्त्राप्रामाण्यग्राहकसामग्र्यसमवाहितार्थकतया तत्पदव्याख्यानं मिश्राणामनुपादेयमिति सूचितम् । मिश्रमते क्षणद्वयात्मककालघटित यौगपद्यमेव समवधानंबोध्यम् । क्रमिकज्ञानद्वयसामग्र्योरेकक्षणेऽसत्त्व नियमात् ।

ननु यादृशप्रामाण्याश्रयज्ञाने कदाचिदप्यप्रामाण्यभ्रमो नजातः तत्प्रामाण्यपक्षकस्थले तदप्रामाण्यग्राहकाप्रसिध्या साध्याप्रसिद्धिरित्यत आह ( यत्रचेति ) ग्रहादीत्यादिपदा सत्राप्रामाण्य प्रकारकगुणान्तरपरिग्

[दी] प्रयोजनाभावादिति वदन्ति । नन्विदंघटत्वप्रकारकं ज्ञानंसविशेष्यकमित्यादेर्ज्ञानग्राहकस्यप्रामाण्याग्राहकत्वाद्बाधः - अथविशेष्यज्ञानस्य तत्प्रकारकत्व प्रकारतया - ग्राहकत्वंवाच्यम् । पुरोवर्तिनि घटत्वप्रकारकं ज्ञानमितिज्ञानेनच-प्रामाण्यंगृह्यतएव । तत्रतस्यप्रकारत्वं - तत्रभासमानवैशिष्ट्यप्रतियोगित्वम् ।

---

[ग] हः । तेन तादृशज्ञानाप्रसिद्धावपि तादृशेच्छाप्रसिद्धौ अग्राहकशरीरे ज्ञानत्वमनन्तर्भाव्य अप्रामाण्यावगाह्यजनकनिवेशे प्रसिद्धिस्सम्भवति - तादृशेच्छाद्यसत्त्वेतु ज्ञानत्वपरित्यागेऽप्यप्रसिद्धिरिति सूचितम् ( प्रयोजनाभावादिति) बाधाप्रसक्तेरितिभावः । इत्यादेः-एतादृशशब्दादेः । ज्ञानग्राहकस्येत्यनेन तज्जन्यग्रहस्य स्वाश्रयग्राहकसामग्रीजन्य यावद्ग्रहान्तर्गतत्वं सूचितम् ( बाधइति )

यद्यपि ज्ञानं घटज्ञानं वागुणइत्यादेः ज्ञानग्राहकस्य प्रामाण्याग्राहकत्वादपि बाधसम्भवः तथापि तद्धर्मप्रकारकत्वेन सविशेष्यकत्वेनच ज्ञानग्रहपर्यन्तनिवेशे तद्वारणसम्भवादुक्तग्रह पर्यन्तानुधावनं ( विशेष्यइति ) विशेष्यांशेयत्प्रकृतप्रामाण्यघटक प्रकारप्रकारकत्वं, तेन प्रकारेण ज्ञानस्यग्राहकत्वं साध्येप्रवेश्यमित्यर्थः ।

नन्वेवमपि पुरोवर्तिनिघटत्वप्रकारकमिदंज्ञान मित्याकारकशाब्दादिज्ञानस्योक्तप्रकारेण ज्ञानावगाहिनः पुरोवर्तिरूपधर्मिणि घटत्वादिवैशिष्ट्यानवगाहिनोधर्मिनिष्ठघटत्वादिमत्त्व घटितप्रामाण्यानवगाहित्वात् बाधोदुर्वारएवेत्याशंक्य तादृशज्ञानेनापि धर्मिनिष्ठघटत्वादिवैशिष्ट्यस्य प्रकारता घटकत्वेनावगाहनेन प्रामाण्यग्रहान्नबाध इत्याह ( पुरोवर्तिनीति ) उपदर्शितज्ञानस्य पुरोवर्तिनिष्ठघटत्वादिवैशिष्ट्यावगाहितां स्पष्टयितुं प्रकारतापदार्थं विवृणोति ( तत्रतस्येति ) ( तत्रभासमानेति ) भासमानंयत्तन्निष्ठं वैशिष्ट्यं तत्प्रतियोगित्वमर्थोत्र वैशिष्ट्येन तत्रेत्यस्य संबंधाभिमानेनाभिमतः । वैशिष्ट्ये भासमानत्वविशेषणात् पुरुष इत्यादिज्ञाने स्वरूपसत्पुरुषादिनिष्ठवैशिष्ट्यप्रतियोगित्वमादाय न दण्डादेः प्रकारता । तत्पदार्थेपि भासमानत्वं निवेश्यं । अन्यथा घटो द्रव्यमित्यादौ घटादाविव पटादावपि द्रव्यत्वादेः प्रकारतापत्तेः । प्रतियोगित्वमपि भा

[दी] तच्च तत्र वैशिष्ट्याग्रहे दुर्ग्रहमिति।

---

[ग ] समानत्वेन विशेष्यं । अन्यथा दण्डपुरुषसंयोग इत्यादौ दंडादेः प्रकारतापत्तेः । ... ... ... ... ...

नचैवं वैशिष्ट्ये भासमानत्वरूपविशेषणस्योक्तव्यावृत्त्यसंगत्या तद्वैयर्थ्यमिति वाच्यं । प्रतियोगीदण्डपुरुष इत्यादौ दण्डादेः प्रकारतावारणस्य आपाततस्तत्प्रयोजनत्वात् । ... ... ...

यद्यप्येवमपि संयोगप्रतियोगीदण्डः पुरुषश्चेत्यादौ दण्डादेः प्रकारत्वं दुर्वारं । तथापि स्वविषयतद्धर्मिनिष्ठं यत्संसर्गविधया स्वविषयीभूतं वैशिष्ट्यं तदीयसंसर्गविधया स्वविषयीयत्तदीयप्रतियोगित्वं तद्वेवत्त्वीयं तद्धर्म्यंशे प्रकारत्वमिति विवक्षया नदोषः । प्रतियोगितासंबंधेन पुरुषादिनिष्ठसंयोगादिप्रकारकदण्डादिविशेष्यकज्ञाने दण्डादेः प्रकारतावारणाय वैशिष्ट्यस्य संसर्गताख्यविषयताविशेषनिवेशः । स्वनिष्ठसंयोगादिप्रतियोगित्वसंबंधेन दण्डादौ पुरुषादि प्रकारके पुरुषे दण्ड इत्यादिज्ञाने दण्डादेः प्रकारतावारणायप्रतियोगित्वस्यापिसंसर्ग - संसर्गविधया विषयत्वनिवेशनं। उक्तपरम्परासम्बन्धावगाहिज्ञाने संसर्गतया भासमानवैशिष्ट्यस्य सम्बन्धतया न प्रतियोगित्वभानमिति नातिप्रसंगः। संसर्गीयप्रतियोगित्वानुयोगित्वयोरपि विशिष्टधीविषयत्वमितिमतेनेदं। एवं टीकाकारानुमतं भ्रमेविशेष्यानुयोगिक विशेणप्रतियोगि काळीकवैशिष्ट्यभानमवलम्ब्येदं । अन्यथा भ्रमप्रकारासंगहात् (तच्चेति ) तादृशप्रकारत्वंचेत्यर्थः। वैशिष्ट्याग्रहे-धर्म्युपरागेण तत्तद्धर्मिप्रतियोगिकत्वोपरागेणच्च वैशिष्ट्याज्ञानइत्यर्थः। ईदृशप्रकारताघटितस्य तदंशे तत्प्रकारकत्वस्य तन्निष्ठवैशिष्ट्यनिरूपित तत्तद्धर्मिनिष्ठप्रतियोगितावगाहितारूपस्य भानेतद्घटकतया तद्धर्मिनिष्ठप्रकारवैशिष्ट्यभानमावश्यकमिति प्रामाण्यभाने न किंचिदवशिष्यत इति भावः।

यद्यप्येवं प्रामाण्यघटकसकलपदार्थभानेपि विलक्षणविशेषणविशेष्यभावापन्नविशेष्यप्रकारादि रूपपदार्थघटितं तद्वतितत्प्रकारकत्वरूप विशिष्टप्रामाण्यंनभातं, एवं भ्रमे विशेष्यानुयोगिकाळीक वैशिष्ट्यावगाहितास्वीकारेतत्साधारण्य वारणायसंसर्गे सत्त्वमधिकं प्रामाण्यशरीरेवश्यमे

[दी] तत्र । तत्र भासमानवैशिष्ट्येत्यत्र तत्रेत्यस्य भासमानेनैव सं म्बन्धात् । नतु वैशिष्ट्येनापि । अन्यथा तदभाववति तत्प्रकारकत्वम प्रामाण्यं न ज्ञायेत । तदभावग्रहे तद्वैशिष्ट्यस्यदुर्ग्रहत्वात् । एवमे कत्र विरुद्धोभयप्रकारकत्वरूपंसंशयत्वमपि । ... ...

---

[ग] वनिवेशनीयम् । तथाच पुरोवर्तिनिघटत्वप्रकारकमिद मित्यादिज्ञाने तदनवगाहनात् बाधवारणासम्भवः ।

एतेन विशेष्यनिष्ठं यद्वैशिष्ट्यं तद्धर्मनिष्ठप्रतियोगिता वगाहितारूप- प्रामाण्यमेव तत्प्रकारकप्रवृत्त्यौपयिकं । तादृशस्यैवपक्षतेत्युक्तावपि नप्र तीकारः । ... ... ... ... ...

एवं यदि धर्मिणि तद्वैशिष्ट्यावगाहित्वं तत्प्रमात्वं तच्चविशेष्यांशेत त्प्रकारकत्वशरीरान्तर्भूतं तदापर्यवसितं, प्रामाण्यस्य स्वतोग्राह्यत्ववि वादेन तादृशस्य तद्वति तत्प्रकारकत्वस्य ग्राहकसामग्र्या न्यायमतेपि नियमतः प्रामाण्यग्रहात् , तथापि इदन्त्वादिना भासमानविशेष्यांशे घ टत्वादिप्रकारकत्वं तत्प्रमात्वम् न्यायमतेप्यनुव्यवसायेनावश्यंगृह्यते । तज्ज्ञानश्चेदुक्तयुक्त्या प्रामाण्यभाननियतं तदानैय्यायिकानां प्रामाण्यग्रह स्य स्वतस्त्वखण्डनाय विचारारम्भणं महासाहसिकतेति मन्वानो विशे ष्येतत्प्रकारकत्वस्य शरीरे प्रामाण्यान्तर्भावनिर्वाहकं तत्रेत्यस्य संसर्गा न्वयित्वमसहमानस्तदेव दूषयति (तत्रेत्यादिना) भानेनैव । भानं-विषयता तथाच तद्धर्मनिरूपिता या वैशिष्ट्यस्य संसर्गतेत्येवं रीत्यैवनिवेशात् वैशिष्ट्यांशे तन्निष्ठत्वं न तदंशे तत्प्रकारकत्वघटकमिति तज्ज्ञानेपि प्रामाण्यघटकस्य वैशिष्ट्ये धर्मिनिष्ठत्वस्या भानान्नोक्तज्ञानानां प्रा माण्यविषयकत्वमितिभावः । अन्यथा - तत्र तत्प्रकारकत्वग्रहे तत्रत द्वै- शिष्ट्यावश्यम्भाने । नज्ञायेत-अनाहार्यनिश्चयेन न कदापिविषयीक्रियेत (त दभावेति ) तदभाववत्तयागृह्यमाणे तद्वैशिष्ट्यस्यानाहार्य ज्ञानागोचरत्वा दित्यर्थः । निर्वह्निर्वह्निमानित्यादिवद्वह्न्यभाववति वह्निसम्बन्धइत्यादि - ज्ञानानामाहार्यत्व नियमादितिभावः । संशयत्वमपि नज्ञायेत, ननिश्चये नावगाह्येतेत्यन्वयः । एकधर्मिणिविरुद्धोभय प्रकारकत्वस्य भवन्मते ए कधर्मिणि विरुद्धोभयवैशिष्ट्यघटितत्वान्निश्चयेनच विरुद्धोभयवैशि ष्ट्यस्य एकधर्मिनिष्ठतयानवगाहनात् । एकधर्मिणि तद्वैशिष्ट्यग्रहेत

[दी] वस्तुतस्तत्प्रकारत्वादिकं स्वरूपसंबन्धविशेष इतिवक्ष्यामः ।

अत्रकेचित् अस्ति कस्यांचित्सामग्र्यां विषयग्रहनियमः कस्यां चिन्नेति सर्वजनसिद्धम् । तथाच या सामग्री विषयमविषयीकुर्वती ज्ञानमपि न गृह्णाति ,

---

द्विरुद्धवैशिष्ट्यावगाहि निश्चयस्य विरोधित्वादिति भावः । एवं तद्धर्मि निरूपितत्वस्य वैशिष्ट्यवियतायामनिवेशे घटोद्रव्यं रूपवान्घटइत्या दिज्ञाने तद्विषयघटत्वाद्यंशे द्रव्यत्वादेः प्रकारत्वं दुर्वारमित्यपिबोध्य म् । सम्बन्धविधया प्रतियोगित्वानुयोगित्वयोर्विशिष्टबुद्धौ विलक्षणभान कल्पनमपेक्ष्य प्रकारत्वस्य विलक्षणस्वरूपताभ्युपगम एवोचितइत्या-शयेनाह (वस्तुतइति) प्रकारत्वमित्यादिना विशेष्यत्वपरिग्रहः (स्वरूपेति) प्रकारविशेष्ययोर्ज्ञानस्य स्वरूपानतिरिक्तः सम्बन्धविशेषइत्यर्थः । उक्तपूव पक्षे मिश्रोक्तं समाधानं दूषयितुमुपन्यस्यति (अत्रेति ) कस्यांचित्सामग्र्यां अनुव्यवसायादिसामग्र्यां । विषयग्रहनियमः-ज्ञानग्रहे तद्विशेषणतया विषय स्यावश्यंग्रहः । कस्यांचित्-शाब्दबोधादिसामग्र्यां । न विषयग्रहनियम इ त्यनुषज्यते । ज्ञानपदादितो विषयीभूतघटाद्यविशेषितस्यापि तज्ज्ञानस्य शाब्दादिज्ञानोत्पत्तेरिति भावः ( यासामग्रीति ) स्वाश्रयविषयकग्रहोत्प त्तिप्रयोजक यत्सामग्रीघटकनिखिलकारणम् । ( विषयमिति ) विषयिता सम्बन्धेन किंचिदनवच्छिन्न ज्ञानविषयताशालिग्रहाजनकमित्यर्थः ।

एतेनयथाश्रुते ग्राह्यज्ञानस्यापि क्वचिज्ज्ञाने विषयतया सामान्य तो विषयाविषयक ज्ञानग्रहाप्रसिद्धिः । ग्राह्यज्ञानविषयाविषयक ज्ञान ग्रहविवक्षणेपि ज्ञानस्यस्वविषयतानियमेन गुरुमते तदप्रसिद्धिरेव, तज्ज्ञा नगृहे तज्ज्ञानविषयस्य तस्यावश्यं भावात् । तत्प्रामाण्यघटकविषया विष यकत्वविवक्षणेपि मेयत्व सर्वत्वादि प्रकारकज्ञानीयप्रामाण्यघटकतायाः केवलान्वयित्वेन तत्पक्षके दुर्वारैवाप्रसिद्धिरित्यादिकं परास्तम् । घट ज्ञानमित्यादिशाब्दबोधादि सामग्रीघटक ज्ञानपदोपस्थित्यादे र्निरुक्त निखिलकारणान्तर्गतस्य विषयानवच्छिन्न विषयकग्रहं प्रत्यपि जनक तया तादृशसामग्रीव्याप्तिः । घटपदोपस्थित्यादे र्ज्ञानभानप्रयोजकस्यच ज्ञानांशे विषयान्वयबोधजनक योग्यताज्ञानादेरुक्त सामग्रीघटक कति पयकारणस्य विषानवच्छिन्नज्ञानाग्राहकत्वा न्निखिलकारणोपादानम् ।

[ग] अनुव्यवसायादि सामग्रीघटकश्च नकिञ्चिदपि तादृशंकारणमस्ति, य द्विषयरूपविशेषणानवच्छिन्नं ज्ञानंगृह्णाति । व्यवसायमनस्संयुक्तसमवाया देः विषयोपरागेणैव ज्ञानादिभासकत्वनियमात् ।

नचात्ममनस्संयोगादिरपि तादृशसामग्रीघटकं कारणं, तच्च विष यानवच्छिन्न ज्ञानगोचरस्मृत्यादि जनकमिति कुतस्तादृशसामग्रीसंभ वइति वाच्यम् । ज्ञानभानप्रयोजक निखिलकारणस्य विवक्षणीयत्वा त्। आत्मादेश्च कार्यतावच्छेदककोटौ ज्ञानविषयत्वाप्रवेशेन तस्या-तथात्वात् ।

नचात्मादीनामपि गुरुमते ज्ञानभानप्रयोजकत्व मव्याहतम् । तन्म तेज्ञानोत्पादकसामग्र्या एव तत्त्वात् । आत्मादीनामपि तत्सामग्र्यन्तर्गत त्वादितिवाच्यम् । तन्मते तज्ज्ञानप्रागभावमात्रस्य तज्ज्ञानभाने प्रयोज कत्वोपमात् । आत्मादीनामतथात्वात । आत्मादिजन्यज्ञानान्तरे तज्ज-न्यज्ञानांतराभानेन विनिगमकसम्भवात् । तत्तज्ज्ञानप्रागभावस्यच विषयोप रागेणैवं तत्तज्ज्ञानभासकत्वं । मिश्रादिमतेनुव्यवसायइव गुरुमते व्यव साये विषयविशेषितस्यैव व्ययसायस्यभानात् ।

अथ घटज्ञानमित्यादौविषयोपरक्त ज्ञानविषयकशाब्दबोध सामग्री निविष्ट ज्ञानपदाद्युपस्थितिव्यक्त्या विषयानुपरक्तज्ञानाविषयक :शाब्दबो-धाजननात् तादृशसामग्रीव्यावृत्ति र्दुर्घटा ।

नच तयाप्युपस्थितिव्यक्त्या ज्ञानशाब्दबोधहेतुभूत विषयानुपरक्त ज्ञानविषयकस्मृतेरवश्यं जननात्तद्घटितसामग्री व्यावृत्तिसम्भव इतिवा च्यम् । यादृशज्ञानोपस्थित्या ज्ञानस्मृतौ जन्यमानायां उद्बोधकान्तरव-शात् ज्ञानांशे पूर्वानुभूतविषयवैशिष्ट्यमपि भातम्, तदुपस्थितिव्यक्ति घटितसामग्र्या उक्तरीत्याप्यवारणादितिचेन्न । "ज्ञानमपिनगृह्णाती" त्यत्र स्वरूपयोग्यतारूप ज्ञानग्राहकताया एव विवक्षितत्वात् । उक्तसा मग्रीघटकज्ञानपदाद्युपस्थिति व्यक्तेश्च विषयाविषयककालान्तरीण ज्ञा नशाब्दबुद्धावपि: स्वरूपयोग्यतया तादृशसामग्रीवारणसम्भवात् । यद्य द्रूपेण कारणानां प्रकृतसामग्रीघटकत्वं तत्तद्रूपस्याविषयानुपरक्त ज्ञानपद स्वरूपयोग्यतानवच्छेदकत्वं विवक्षणीयम्, तेन गुरुमतेतत्तद्व्यवसायप्राग

[ग]भावस्य प्रागभावत्वेन जन्यमात्रं प्रति स्वरूपयोग्यत्वेपि नतद्घटितव्यवसायसामग्र्या असंग्रहः । व्यवसायात्मक ज्ञानोत्पादप्रयोजक समुदाय मध्ये तत्तद्व्यवसायप्रागभावत्वेन तन्निवेशात्तद्रूपेण जन्यमात्रं प्रति स्वरूपयोग्यताविरहात् ।

एवंच मिश्रमतेनुव्यवसाय सामग्रीघटकव्यवसायस्य कालोपाधिविधया जन्यमात्रस्वरूपयोग्यत्वेपि तत्सामग्र्यसंग्रहः । तत्सामग्रीघटकतावच्छेदकेदं विशेष्यकघटत्वादि प्रकारकज्ञानत्वेनातथात्वात् -

नच विषयविनिर्मुक्त ज्ञानाग्राहकत्वस्य विषयानवच्छिन्नज्ञानभानाप्रयोजकत्वरूपस्य निवेशे उक्तविवक्षामन्तरेणापि सामञ्जस्यम् । व्यवसायतत्प्रागभावादीनां कालत्वप्रागभावत्वादिना विषयानवच्छिन्नज्ञान विषयकग्रहस्य स्वरूपयोग्यत्वेपि तेन रूपेण विषयानवच्छिन्न ज्ञानविषयतावच्छिन्नाजनकत्वात् । एवञ्च गुरुमते आत्मादीनां ज्ञानग्राहकसामग्रीत्वेन ज्ञानग्रहत्वावच्छिन्नंप्रति हेतुत्वेपि नक्षतिः, तत्रविषयानवच्छिन्न ज्ञानभानप्रयोजकत्वे तद्व्यावृत्तेरनपेक्षितत्वादिति वाच्यम् । एवमपि मिश्रमते ज्ञानत्वादिप्रकारक व्यवसायस्योपनीतज्ञानग्रहे विषयानवच्छिन्नज्ञानाविषयताप्रयोजकत्व सत्त्वेन तद्घटितानुव्यवसाय सामग्र्याः दुस्संग्रहतया तादृशव्यवसायप्रामाण्ये बाधस्यवारणायोक्तविवक्षाया आवश्यकत्वात् । तद्विवक्षणे ज्ञानत्वादिप्रकारकत्वप्रकारकज्ञानत्वस्य ज्ञानोपनीतभानजनकतानवच्छेदकत्वेन सामञ्जस्यात् ।

अथैवं घटज्ञानमित्यादि शब्दजन्यशाब्दसामग्रीवारणमशक्यमेव । घटान्वितज्ञानविषयक शाब्दबोधेहि घटपदसाकांक्षज्ञान पदज्ञानत्वेनैव हेतुता । नतु केवलज्ञानपदज्ञानत्वेन । परस्पराकांक्षाशून्य घटपदज्ञानपदयो र्ज्ञानादन्वयबोधानुदयात् । तथाच तादृशसामग्रीघटकतावच्छेदक घटपदसाकांक्षज्ञानपद ज्ञानत्वावच्छिन्नस्य विषयानालिङ्गित ज्ञान विषयताघटित धर्मावच्छिन्नग्रहस्वरूप योग्यतापि नास्ति ।

नच घटपदंविनापि ज्ञानपदेन ज्ञानं गुणइत्यादौ शाब्दबोधजननात् तत्साधारणज्ञानगोचर शाब्दबोधत्वरूप सामान्यधर्मावच्छिन्नंप्रतिसामान्यतो ज्ञानपदज्ञानत्वेनापि हेतुत्वात् तदवच्छिन्नमपि घटज्ञानमित्यादि शाब्दसामग्रीघटकम् । विशेषसामग्र्याः सामान्यसामग्र्यनुप्रवेशेनैव -

[ दी ] ज्ञानग्राहकताप्रयुक्तमेव यस्या विषयग्राहकत्वमितियावत् । तादृशयावत्सामग्रीग्राह्यत्वमर्थः । ... ...

---

[ ग ] कार्योपधानप्रयोजकत्वात् । सामग्रीपदेनापि फलोपधानप्रयोजक सामान्यकारण विशेषकारण समुदायस्यैव विवक्षितत्वादितिवाच्यम् । यत्र विशेषकारणस्य सामान्यकारणतावच्छेदकावच्छिन्नत्व नियमस्तत्र विशेषकार्योपधानप्रयोजकविशेष कारणघटितसमुदाये तादृशसामान्यकारणस्य प्रयोजनविरहेणानिवेशात् । विशेषसत्त्वे सामान्यसत्त्वस्यावश्यकतया सामान्यकारणं विना कार्योपधानासम्भवात् । इतिचेत् ...

माभूत्केवलं ज्ञानपदज्ञानत्वेन घटज्ञानगोचर शाब्दबोधसामग्रीघटकता तथापि पदजन्यज्ञानोपस्थितित्वेन पदार्थोपस्थितेः ज्ञानगोचरशाब्दसामान्यहेतुत्वात् , तद्रूपावच्छिन्नस्य विषयानवच्छिन्नज्ञानभानेपि प्रयोजकस्योक्तसामग्रीघटकत्वेन तद्व्यावर्तनसम्भवात् । नहिपदार्थोपस्थितेरपि घटाद्यन्वितज्ञानादिबोधे घटादिपद साकांक्षज्ञानादिपदज्ञान जन्य ज्ञानाद्युपस्थितित्वेन हेतुता कल्प्यते । प्रयोजनविरहात् । तत्तत्पदजन्योपस्थिति तत्तत्पदधर्मिकपदान्तराकांक्षाज्ञान घटित सामग्र्याः - कार्योपधानप्रयोजकत्वेन निराकांक्षपदजन्योपस्थिति बलादन्वयबोधापत्त्यसम्भवात् । ... ... ... ...

यदिचाकांक्षाज्ञानं न शाब्दधीकारणम् , अपितु पदार्थोपस्थिति कारणतायां जन्यतासम्बन्धेनावच्छेदकमेवेति " नव्यास्तिवत्यादिना " मणिकाराणां स्वं मतमाद्रियते तदोक्तप्रकारेण घटज्ञानमित्यादि सामग्री व्युदासासम्भवात् पक्षधरमिश्राएव प्रकारान्तरमनुसृतवन्तः तमेव पक्षमुपन्यस्यति ( ज्ञानग्राहकताप्रयुक्तामिति ) यत्र ज्ञानभासकमेव विषयभासकं विषयभानार्थं नाधिकमपेक्षितं तज्ज्ञानसामग्र्या विषयग्राहकत्वे ज्ञानग्राहकत्वं प्रयोजकम् । उक्तशाब्दबोधसामग्र्या विषयग्राहकत्वेच न ज्ञानग्राहकत्वं प्रयोजकं । तत्र ज्ञानभानाप्रयोजक घटादिपदज्ञानस्य अधिकस्य विषयभासकत्वात् । अनुव्यवसायसामग्र्या विषयग्राहकत्वेच ज्ञानग्राहकत्वं प्रयोजकम् । तत्र ज्ञानभानप्रयोजकव्यवसाय ज्ञानधर्मिक विषयासंसर्गग्रहाभावयोरेव विषयभासकत्वात् । ... ...

[ दी ] यद्यप्युभयभासकसामग्र्या नैकग्राहकत्वप्रयुक्तमन्यग्राहकत्वम्, तथापि ज्ञानग्राहकता प्रयोजकसामग्री प्रयुक्तविषयग्राहकताकत्वं, वाच्यम्। घटज्ञानपदाद्यात्मकसामग्र्यास्तु ज्ञानपदाधीनं ज्ञानग्राहकत्वं। तच्च न घटग्राहकत्वे तन्त्रम्। अपितु घटपदम्।

---

[ग] यद्यपि ज्ञानपदसमभिव्याहृतत्वेन घटपदज्ञानस्य ज्ञानविषयतापि जन्यतावच्छेदिका, तथापि तदवच्छिन्नजनकत्वमेव न तत्प्रयोजकत्वरूपं तद्भासकत्वं। किन्त्वेतद्बोधजनकवाक्येऽमुकपदसत्त्वादस्य बोधस्यैतद्विषयकत्वमित्यादि व्यवहारसिद्धस्वरूप सम्बन्धविशेषएव। नहि घटज्ञानबोधे ज्ञानपदात् ज्ञानभानमितिवत् घटपदाज्ज्ञानभानमित्यपि व्यवहारः। विषयोपस्थितिंविना ज्ञानस्य शाब्दबोधे बहुशोभानं, नतु ज्ञानोपस्थितिंविना क्वचिदपीति ज्ञानविषयोपस्थापक पदयोर्विशेषादितिभावः।

एतावतानुव्यवसायादिस्थले तुल्यकालसम्बन्धिनो ज्ञानविषयभानयोरिव तथाविधयो स्सामग्रीनिष्ठज्ञानविषयभासकतयोरपि न प्रयोज्यप्रयोजकभावः सिद्ध्यति। अपित्वेकतरभानेन्यतर भासकहेतोरेवेति, यथाश्रुतेसम्भव इत्याशंक्य निष्कृष्टार्थमाह (यद्यपीत्यादि) (ज्ञानग्राहकतेति) यादृशसामग्रीजन्यज्ञानेविषयभानं ज्ञानभानप्रयोजकत्वेन तत्प्रयोजकप्रयुक्तं तादृशत्वं सामग्र्यां विशेषणं वक्तव्यमित्यर्थः। ... ...

एतेन यथाश्रुते घटज्ञानमित्यादि शाब्दबोधरूप ज्ञानग्रहस्य विषयग्रहरूपतया तत्सामग्रीनिष्ठज्ञानग्रहोपधानरूप ज्ञानग्राहकतायाविषयग्राहकतातोभिन्नतया तुल्यप्रयोजकप्रयुक्तत्वसत्त्वेपि नक्षतिः। प्रयोजकत्वेनेतिकरणात्तादृशशाब्दबोधे योग्यताज्ञानादीनामुभयभान प्रयोजकत्वेपि नदोषः। ज्ञानभानप्रयोजकत्वस्य विषयभासकमध्यनिविष्ट घटपदाद्यसंग्राहकत्वेन-विषयभासकतानवच्छेदकत्वात्। तदेवदर्शयति (घटज्ञानपदेति) तादृशसामग्रीजन्यज्ञाने ज्ञानपदाधीनं ज्ञानभानमित्यर्थः। तच्च-ज्ञानपदञ्च। घटग्राहकत्वे - घटविषयकत्वे। ... ... ... ...

नन्वेवं प्रामाण्यानुमितिग्राह्यत्वमादाय सिद्धसाधनवारकं यावत्पदमनर्थकम्, इदंज्ञानं घटविषयकं घटेच्छाजनकत्वादि त्याद्यनुमानानामिव - प्रामाण्यानुमानस्याप्युक्तविशेषणेनैव वारणात्, तत्रेवात्रापि ज्ञानविषय-

[दी] एकयैव शक्त्या विषयोपरक्तज्ञानग्राहकेण प्रमापदेन प्रामाण्य-ग्राहिणा सिद्धसाधनवारणाय "यावदिति" तद्धि धात्वर्थतावच्छेदक ज्ञानत्वपुरस्कारेणैवयथार्थज्ञानमभिधत्ते । स्मृतिहेतोः प्रमाणांतरताप त्तेस्तु भीतास्तांत्रिकाः शास्त्रेप्रमाव्यवहारौपयिकं स्मृतिव्यावृत्तं रूप मनुमन्यन्ते। भ्रम पदेन प्रामाण्याग्रहाद्बाधवारणाय "तदप्रामाण्येति"

---

[ग] ग्राहकतयोः पृथक्प्रयोजप्रयुक्तत्वादित्याशंक्य एकप्रयुक्तोभयग्राहक ताकपदविशेषघटित सामग्रीग्राह्यताप्रयुक्त सिद्धसाधनवारकतां तस्याह (एकयेवैति) पदैक्येपि विशेषणविशेष्यभेदेन शक्तिरूपप्रयोजकभेदात् न तादृशसामग्रीसंग्रह इति तदैक्याभिधानं (विषयोपरक्तेति) विषय घटितयाथार्थ्यविशिष्टेत्यर्थः। उपसर्गस्य द्योतकतया नप्रशब्दस्य याथा र्थ्यरूपप्रकर्षे स्वतन्त्रशक्तिरिति भावः। ... ... ...

ननु प्रमापदं यथार्थानुभवत्वविशिष्टएव शक्तम्, नतु यथार्थज्ञान त्वविशिष्टे स्मृतिकरणे प्रमाणव्यवहारविरहात। एवञ्चानुभवत्व जातिम ङ्गीकुर्वतां नैय्यायिकानां नप्रमापदस्य ज्ञानत्वघटितप्रामाण्यग्राहकत्वमि त्याशंकां निरस्यति (तद्धीति) तत्-प्रमापदं (ज्ञानत्वपुरस्कारेणैवेति) ज्ञा नत्वघटितप्रामाण्यप्रकारेणेत्यर्थः। एवकारेण यथार्थानुभवत्व विशिष्ट व्यवच्छेदः। प्रकर्षादिद्योतकोपसर्ग पूर्वकधातोः प्रकर्षादि सहि तस्व शक्यतावच्छेदकावच्छिन्न वाचकत्वनियमादिति भावः। उपसर्गस्तु श क्ततावच्छेदककोटौ निविशतां नवेत्यन्यदेतत् । स्मृतौतान्त्रिकाणां प्रमाव्यवहारं शास्त्रेप्रमापदस्य पारिभाषिकतया वारयति (स्मृतीति) प्रमाणान्तरतापत्तेः- प्रमाणान्तर व्यवहारविषयतापत्तेः । स्मृतिव्यावृ त्तंरूपं- यथार्थानुभवत्वं प्रमाव्यवहारौपयिकमनुमन्यन्त इत्यन्वयः।

नन्वेवमपि अप्रामाण्याग्राहकेत्यस्य वैयर्थ्यम्, भ्रमग्राहकानुमि त्यादेः उक्तविशेषणेन वारणात् तदग्राह्यत्वेपि बाधासम्भवादित्यत आह (भ्रमपदेनेति) एकयैव शक्त्या विषयघटितमूर्तिक भ्रमत्वविशिष्टबोधके नेतिशेषः। ... ... ... ...

नचभ्रमपदस्य प्रामाण्याश्रयाग्राहकत्वात् न तदग्राह्यत्वेपि बाधइ तिवाच्यम्। प्रमाया अप्यंशे भ्रमत्वसम्भवेन भ्रमपदस्य तादृशज्ञानबोध

[दी] तत्र गुरुनये विषयग्राहकताया ज्ञानग्राहकताप्रयोजकाप्रयुक्तत्वात् प्रत्युत विषयग्राहकताप्रयोजकस्यैव ज्ञानग्राहकताप्रयोजकत्वात् । सर्वस्यैव विषयग्रहस्य आत्मविषयत्वात् । अस्तु वा तत्र यथा तथाभिधानम् ॥

---

[ग] कतया प्रामाण्याश्रयबोधकत्वात् । सर्वधीराचार्य्यमते भ्रमपदं तदभाववद्धर्मिसाकांक्षं तद्विषयकज्ञानत्वेन तत्प्रमामेव बोधयति । एतच्च समाधिसौकर्येण । अग्राहकान्तानुपादाने गुरुमते स्वतन्त्राप्रामाण्योपस्थिति द्वितीयक्षणोत्पन्न प्रामाण्याश्रयविषयक स्वप्रकाशात्मक व्यवसायसामग्र्या निश्चयेऽपि गृहीताप्रामाण्यविषयकानु व्यवसायसामग्र्या ज्ञानभानाप्रयोजकाप्रामाण्योपस्थिति प्रयुक्ताप्रामाण्यघटक विषयग्राहकताकत्वेपि तदप्रयुक्त प्रामाण्यघटकधर्मिग्राहकताकत्वेन उक्तविशेषणेन वारणासंभवात् तद्ग्राह्यतयापि बाधस्य निश्चत्यूहत्वादिति वदन्ति । ... ...

विषयग्राहकतायाः - विषयविषयतायाः ( ज्ञानग्राहकताप्रयोजकाप्रयुक्तत्वादिति ) ज्ञानभानप्रयोजकत्वेन तत्प्रयोजकाप्रयुक्तत्वादित्यर्थः । एकसामग्र्याएव ज्ञानविषयभासकतया यथाश्रुतासङ्गतेः । ...

अयंभावः । व्यवसायसामग्र्याः न ज्ञानभानप्रयोजकत्वेन घटादिरूपविषयग्राहकता । ज्ञानं गुण इत्याकारक घटज्ञानादिबोधेपि ज्ञानभानप्रयोजकसत्त्वेन घटादिभानप्रसङ्गात् । अपितु घट तत्सन्निकर्षादिघटितसमुदायत्वेनैव तथात्वमिति । ... ... ...

( विषयग्राहकताप्रयोजकस्यैवेति ) विषयभानप्रयोजकत्वावच्छिन्नस्यैवेत्यर्थः । ज्ञानग्राहकताप्रयोजकत्वात् - ज्ञानभानप्रयोजकत्वात् । विषयभासकत्वेन ज्ञानभानप्रयोजकत्वं विपरीतवत्तदा नसंभवेद्यदि विषयभानप्रयोजकसमुदायसत्त्वेपि कदाचिज्ज्ञानभानं न स्यात् , नचैवमित्याह ( सर्वस्यैवेति ) " आत्मेति " दृष्टान्तविधयोक्तम् । ...

ननु यत्र ग्रहे ज्ञानविषययोरेकभान प्रयोजकत्वेनापरभान प्रयोजकता तादृशी सामग्री विवक्षणीया, एवञ्च स्वप्रकाशकसामग्र्या विषयभासकत्वेन ज्ञानभासकत्वादेव संग्रहः । मिश्रमते घटज्ञानमिति शाब्दस्थले यथा ज्ञानभासकत्वेन न घटभासकता , घटपदासत्त्वेपि तद्भानप्रसङ्गात् । तथा घटभासकत्वेनापि न ज्ञानभासकता, ज्ञानपदासत्त्वेपि तद्भानप्रसङ्गादित्यतआह(अस्तुवेति) तथाभिधानं-स्वप्रकाशसामग्री साधारणविशेषणाभि

[ दी ] तथापि मिश्रमते दुर्वचं ज्ञानविषयग्राहकतयोरनतिप्रसक्तमेकप्रयोजकप्रयोज्यत्वं ॥ ... ... ...

किञ्च घटज्ञानवान् घटेच्छावत्त्वादित्याद्यनुमित्या तद्ग्रहात् बा

---

धानम् । ( दुर्वचमिति )यथाश्रुतस्य योग्यताज्ञानादिकमादाय घटज्ञानमिति शाब्दबोधादिगत तदुभयभान साधारणत्वात् । एक प्रयोजकत्वेनापर प्रयोजकताविवक्षणेच अनुव्यवसायसामग्रीघटक व्यवसायादेर्ज्ञानविषययोरेकतरभासकत्वेनापर भानप्रयोजकत्वे केवलज्ञानग्रहे विषयस्य, केवलविषयग्रहेच ज्ञानस्य, भानप्रसङ्गात् विनिगमनाविरहाच्च तदुपगमासंभवेन तादृशसामग्र्याएवा संग्रहात् । एकधर्मिपुरस्कारेण उभयभानप्रयोजकत्वविवक्षणेच घटज्ञानमित्यादौ योग्यताविशेषज्ञानादेः तादृशज्ञानत्वादिना उभयभानप्रयोजकतया बाधवारणमशक्यं । फलोपधानरूपप्रयोजकत्वविवक्षया एकैकहेतुसाधारण रूपेण ज्ञानादि भानप्रयोजकत्व निराकरणे अनुव्यवसायादिसामग्रीघटक व्यवसायादेरपि घटज्ञानत्वादिना घटज्ञानादिभानप्रयोजकतया व्यवसायमनस्संयुक्त समवायादिसमुदायपर्याप्तधर्मस्यैव ज्ञानविषयोभय भानप्रयोजकतावच्छेदकतया तादृशसामग्रीसंग्रहे तुल्ययुक्त्या घटज्ञानमित्यादिशाब्दबोधनिष्ठ तदुभयभानेपि घटपदज्ञानपदादि समुदायपर्याप्त धर्मावच्छिन्नस्य प्रयोजकतया न तत्सामग्रीवारणसंभव इति भावः । ... ... ...

ननु यत्र ज्ञाने विषयभानं ज्ञानभानाप्रयोजकाप्रयुक्तं तज्ज्ञानसामग्र्येव विवक्षणीया । घटज्ञानमित्यत्र ज्ञानभानाप्रयोजकं घटपदं घटभाने प्रयोजकमित्यतएव तद्व्युदासः । अनुव्यवसाये विषयभानप्रयोजको व्यवसायएव, सच न ज्ञानभानाप्रयोजक इति तत्सामग्रीसंग्रहः । स्वप्रकाशमते व्यवसायसाम्रीत्वेन व्यवसायस्य सर्वाण्येव कारणानि अविशेषेण ज्ञानभानप्रयोजकान्यतो दूषणांतरमाह ( किंचेति )

यद्यपि विषयोपरक्तज्ञानानुमितिस्थले एकस्य परामर्शादेरेव विधेयतयाज्ञानस्य विधेयतावच्छेदकतया विषयस्य भासकता । ननु व्यापकतायास्तदवच्छेदकत्वस्यच ज्ञानंविधेयतत्त्वावच्छेदकविषयकानुमितौ पृथक्कारणं । तथापि प्रयोजकभेदं विना विधेयादिविषतानां वैचित्र्यानुपपत्त्या परामर्शीयतद्विषयनिष्ठाविलक्षण विषयतानां अनुमितौ विलक्षणतत्तद्विषय

[दी] धः । नचात्रज्ञानग्राहकतायां व्यापकत्वं घटग्राहकतायां तदव च्छेदकत्वं प्रयोजकमिति नैकमुभयग्राहकताप्रयोजकं । प्रमापदे पि शक्तितदवच्छेदकत्वयोरेव ज्ञानविषयग्राहकतायां प्रयोजकत्वात् । अव्यापकस्यानुमितिविषयत्वेतिप्रसंगस्य व्यापकतावच्छेदकत्वेनेव, अशक्यस्यापि शाब्दधीविषयत्वे अतिप्रसंगस्य शक्यतावच्छेदक त्वेनैवनिराससंभवात् । शक्यतावच्छेदके शक्तिसत्वेपि नतस्यास्त द्बोध उपयोगः,... ... ... ...

---

[ग]भानप्रयोजकत्वमावश्यकमित्युक्तानुमितिसामग्रीव्यावृत्तिरित्याशंकते(न चेति)व्यापकत्वं-व्यापकत्वेन परामर्शविषयत्वम् । तदवच्छेदकत्वं-व्यापक तावच्छेदकत्वेन तद्विषयत्वम् । शक्तितदवच्छेदकत्वयोः शक्यत्वतद वच्छेदकत्वावच्छिन्न ज्ञानविषयत्वयोः । प्रयोजकत्वात् - तुल्ययुक्त्या - प्रयोजकत्वापातात् । तथाचोक्तयावत्पदव्यावृत्त्यसंगतिरितिभावः ।

ननु शक्यतावच्छेदकेपि शक्त्युपगमेन शक्यतया तद्भानमेव शा ब्दबोधे तद्भानप्रयोजकम् । शक्यतया अभातस्यापि शाब्दबुद्धौ भानोप गमे गवादिपदात् सास्नादेरपि गोत्वादिवच्छाब्दबोधे भानापत्तेरित्य तआह (अव्यापकस्येति) अव्यापकस्य - व्यापकतया अभातस्य । अनु, मितिविषयत्वे - अनुमितौ धर्मितावच्छेदकीय प्रकारताविलक्षण प्रका रत्वे । अतिप्रसङ्गस्य । व्यापकतावच्छेदकत्वेनेव- परामर्शे व्यापकतावच्छे दकतया भानस्य नियामकत्वेन यथावारणम् । अशक्यस्य–शक्यतयाऽ भातस्य । शक्यतावच्छेदकत्वेन - शक्यतावच्छेदकतया शक्तिज्ञाने भान स्य प्रयोजकतयैव । ... ... ... ...

ननु व्यापकतावच्छेदके वह्नित्वादौ धूमादिव्यापकता नास्तीति- व्यापकतावच्छेदकतया भानं विधेयतावच्छेदकतया भानप्रयोजकं । श क्यतावच्छेदकेच सर्वत्र शक्तिरस्ति । तस्य पदबोद्ध्यतया तेन रूपेण भगवदिच्छायामवश्यं भानात्, अतोनोभयत्र साम्यमित्यतआह (शक्यता वच्छेदकइति) उपयोगः नस्वीक्रियत इति शेषः । गोत्वादिविशिष्टविशे ष्यकशक्तिग्रहस्य गोत्वांशे शक्यतावगाहिनः स्वरूपतो गोत्वादिविषय कत्वानुपपत्त्या स्वरूपतो गोत्वाद्यवगाहिशाब्दबोध हेतुत्वासंभवात् तद्

[दी] विनापि लक्षणां लक्ष्यतावच्छेदकस्यैव विनापि शक्तिं तस्य बोधसंभवात्, ... ... ... ...

---

[ग] वच्छेदेन शक्यत्वग्राहिनस्तद्धर्मिता वच्छेदकज्ञानस्यैव तथात्वा दितिभावः । ... ... ... ... ...

यद्यपि पदधर्मिकगोत्वविशिष्ट वाचकताग्रहस्य स्वरूपतो गोत्वप्र कारकत्वं संभवति । तथापि गोत्वविशिष्टवाचकत्वस्य गोत्ववाचकत्व गर्भस्य गोत्वप्रकारकत्वावच्छिन्न गोविषयकत्वविशेषित बोधजनकत्वप्र कारकभगवत्संकेत विषयत्वरूपस्य धियो हेतुत्वे बोधविशेषणतापन्न गोविशेषितविषयिताविशेषणतापन्न प्रकारितांशे विशेषणतयाविषयत्व रूपस्य वाच्यत्वस्य गोत्वांशे भानं गोत्वस्य शाब्दधीप्रकारतानियामकं वाच्यम् । गोत्वावच्छेदेन वाच्यताज्ञानस्य हेतुत्वेच गोत्वांशे बोधवि शेषणतापन्नविषयिताविशेषण धर्मिविषयतावच्छेदकतारूप शक्यतावच्छे दकतया भानं तद्भाननियामकमिति तन्मते गोत्वविशिष्टगोचर शाब्द धीहेतुतायां विषयितायां गोविशेषितत्वांशनिवेशाधिक्येन गौरवम् । इतरांशस्योभयमतेपि तुल्यशरीरत्वात् । तदनिवेशेतु भवतां धर्मांशे शक्तिधियोनपेक्षणीयत्वापत्तेः । ... ... ...

ननु शाब्दबोधीयसंसर्गतान्यविषयतायाः स्वांशे वृत्तिज्ञानप्रयोज्य तानियमात्, शक्यतावच्छेदकांशेपि शक्तिज्ञानस्य प्रयोजकत्वमावश्य कमित्याशंक्य तन्नियमं निराकरोति ( विनापीति ) लक्षणां - स्वांशे लक्षणाग्रहं । शक्तिं - स्वांशे शक्तिग्रहं । तस्य शक्यतावच्छेदकस्य ।

ननु पशुत्वेन गौरस्मात्पदाद्बोद्धव्य इत्येतादृशाधुनिकसङ्केतात्पशु त्वेनैव गोबोधो भवति । नतु तादृसंकेतविषयतावच्छेदकेनापि गो- त्वेनेति नियमाद्विशेषणांशेपि संकेतविषयत्वभानं शाब्दधीविषयत्वप्रयो जकमवश्यं वाच्यम् । नच गोत्वस्य गोविशेषणतयोक्तसंकेतविषयत या तावतापि नोक्तातिप्रसंगवारणसंभव इति वाच्यम् । पदजन्यबो धविषयत्वेन विषयतारूपवाच्यत्वभानस्य प्रयोजकत्वोपगमेन तद्वारण- संभवादितिचेदस्त्वेवं । एवमपि विशेषणतया वाच्यत्वस्य विशेष्यतया वाच्यत्वविलक्षणस्य पदार्थतावच्छेदकभानप्रयोजकतया प्रमापदघटित सामग्र्या निरुक्तरूपताया दुरुपपादत्वैव । ... ...

[ दी ] भट्टमते संभवाच्च । ज्ञाततालिंगकानुमित्यापि विषयग्रहे व्यापकतावच्छेदकत्वस्यैव नियामकतया वक्ष्यमाणत्वात् । नच ज्ञाततालिंगकत्वमेव तत्प्रयोजकम् । अनुमितिसामग्र्याः साध्य ग्राहकत्वे लिंगविशेषस्य व्यभिचारेणातन्त्रत्वात् । ज्ञाततामात्रेण ज्ञानमात्रानुमानसंभवात् । विशेषस्य तथा स्वभावकल्पनायां

---

[ ग ] ननु यावत्पदादाने माभूत्प्रामाण्यस्य प्रमापदग्राह्यतया सिद्धसाधनं । तथापि विशेष्यताप्रकारतोपनायक तज्ज्ञानकालीनानुव्यवसाय सामग्रीग्राह्यतया सिद्धसाधनं दुवारमेव । तादृशसामग्र्या अपि विषयग्रहे व्यवसायातिरिक्तानपेक्षणात् । अतो नं तत्पदवैयर्थ्यमतो दूषणान्तरमाह ( भट्टेति ) असंभवात् - प्रामाण्यग्राहकतया अभिमताया अनुमितिसामग्र्या उक्तविशेषणाक्रांतत्वासंभवात् तदेवदर्शयति ( ज्ञाततेति ) ( व्यापकतावच्छेदकत्वस्येति ) विषयगर्भप्रमात्वांशे व्यापकतावच्छेदकत्वग्रहस्येत्यर्थः ( वक्ष्यमाणत्वादिति ) घटो घटत्वप्रकारकज्ञानविषयः, घटत्वप्रकारकज्ञाततावत्त्वात्, इत्यनुमानस्यैव प्रामाण्य ग्राहकतया वक्तव्यत्वात् । तत्रच ज्ञानस्य साध्यत्वाद्विषयस्यतु तदवच्छेदकत्वादितिभावः । ज्ञाततालिङ्गकत्वं - तल्लिङ्गकपरामर्शत्वावच्छिन्न जन्यत्वं । तत्प्रयोजकं - अनुमितौ विषयविशिष्टज्ञानभानप्रयोजकम् । एवकारेण व्यापकतावच्छेदकत्वभानस्य विषयभानप्रयोजकत्वव्यवच्छेदः । लिङ्गविशेषस्य लिङ्गविशेषावगाहि परामर्शजन्यत्वस्य । व्यभिचारेण- व्यभिचारादिना तल्लिंगकपरामर्शत्वेन हेतुताया असंभवेन । ज्ञाततामात्रेण- शुद्धज्ञानत्वेन व्यापकतावगाहिपरामर्शबलेन (ज्ञानमात्रेति) विषयानवच्छिन्नस्यैव ज्ञानस्यानुमितिसंभवादित्यर्थः ।... ... ...

ननु स्वव्यापकसाध्यसामानाधिकरण्य रूपव्याप्तेर्लिंगविशेष घटिततया लिङ्गभेदेन परामर्शहेतुताभेद आवश्यकः । व्यभिचारोपि कथंचिद्वारणीयः । तथाच ज्ञाततालिङ्गकपरामर्शस्य शुद्धज्ञानत्वावच्छिन्न व्याप्त्यवगाहिनोपि विषयोपरक्तज्ञानानुमितित्वमेव जन्यतावच्छेदकमुपगन्तव्यमिति तद्घटितसामग्र्यां ज्ञानभानप्रयोजकमात्र प्रयोज्यविषयग्राहकताकत्वमक्षतमेवेत्यतआह ( विशेषस्येति ) शुद्धज्ञानव्याप्यतया ज्ञाततारूपलिङ्गविशेषावगाहि परामर्शस्येत्यर्थः । तथा स्वभावकल्पनायां-

[दी]मानाभावाच्च।ज्ञाततांविशेषत्वेन ज्ञानविशेषजन्यत्वानुमानश्च घटेच्छा त्वेन घटज्ञानजन्यत्वानुमानेन समानयोगक्षेमम् । तदादिपदेन प्रकरणात्पदान्तरेणवा लक्षणयाधुनिकसङ्केतेनवा घटविषय कज्ञानोपस्थापकेन प्रामाण्याग्रहाद्बाधाच्च । ... ...

---

[ग]विषयविशिष्टज्ञानविषयकत्वावच्छिन्न जनकत्वकल्पनायां (मानाभावा दिति ) व्यवसायानन्तरं द्वित्रक्षणमध्यएव विषयोपरक्तज्ञानभानस्य - आनुभाविकतया कालान्तरे शुद्धज्ञानव्याप्यतया ज्ञाततावगाहिपराम र्शात् शुद्धज्ञानानुमिति निर्वाहाय तादृशपरामर्शस्य पृथक्कारणताया आ वश्यकत्वे विषयोपरक्तज्ञानानुमितौ तस्य हेतुत्वान्तरकल्पनं कालविशे षस्य तत्सहकारिताया अतिप्रसङ्गभङ्गाय कल्पनं चापेक्ष्य ज्ञानस्यैन्द्रिय कताया एव कल्पयितुं युक्तत्वादितिभावः । ... ...

ननु घटवृत्तिघटत्वप्रकारक ज्ञाततायास्तादृश ज्ञाततात्वेन घटवि शेष्यक घटत्वप्रकारकत्वविशिष्ट ज्ञानजन्यत्वरूपसाध्यानुमापकत्वात्, तत्रच व्यापकतावच्छेदकत्वमेव उभयभानप्रयोजकमिति न ज्ञानभानाप्र योजकं विषयभानप्रयोजकमित्याशङ्कां निरस्यति ( ज्ञाततविशेषत्वेनेति ) ( समानयोगक्षेममिति ) अत्राप्यनुमानेविषयस्येव ज्ञानस्यापि साध्यता वच्छेदकत्वात् , अवच्छेदकताया विशेषादरेच्च ज्ञाततालिङ्गकानुमानेपि तद्विशेषसत्त्वादेक सामग्रीसंगृहेन्यवारणश्चाशक्यमिति भावः । प्रमाप दस्थले एकेनपदेन ज्ञानविषयोभयगृहा त्सिद्धसाधनस्य यावत्पदेन वा रणमित्युक्तं , तदनुसारेण प्रमात्वाग्राहकमपि तादृशं पदमस्ति तद- ग्राह्यतया बाधस्यदुर्वारतामाह ( तदादीति ) तदादेर्बुद्धिस्थत्वेनैव बो. धकता, ननु घटज्ञानत्वादिनेति भ्रमं निराकर्तुमाह ( प्रकरणादिति ) विशेषरूपेण बोधौपयिक प्रकरणसहकारादित्यर्थः। प्रकरणश्च प्रकृत त्वम् , विशेषरूपेण वक्तुर्बुद्धिस्थत्वमिति यावत् । सामान्यतोवक्तृबु द्धिस्थत्वेन शक्तमपि सर्वनाम विशेषरूपेण बोधयति , सहकारिविश षापेक्षयातिप्रसंगनिरासंभवादिति भावः। विवेचितंचेदमधिकमन्यत्र । पदान्तरेण- सर्वनामातिरिक्तेनापि घटादिपदेन। तादृशपदस्य तद्रूपाव च्छिन्नावाचकस्य कया वृत्त्या तद्रूपावच्छिन्नबोधकत्व मित्याकांक्षायामा ह ( लक्षणया आधुनिकसङ्केतेनवेति ) लक्ष्यार्थप्रकारेण लक्षणाग्रहस्या

[दी] एतेन यादृशसामग्र्या विषयग्राहकत्वव्याप्तं ज्ञानग्राहकत्वम्, तादृशयावद्ग्राह्यत्वमपि प्रत्युक्तम् । ... ...

अत्रवदन्ति - तज्ज्ञानप्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेनच यद्भट्टमतसिद्धं तद्भिन्नार्थकमग्राहकान्तम् ।

---

[ग]नपेक्षितत्वेपि तत्र तदग्रहस्यानपेक्षितत्वात् न विषयभानेधिकापेक्षेति-भावः ।... ... ... ... ...

नच तत्र लक्ष्यतावच्छेदकत्वग्रहस्यापेक्षया बिषयग्रहेधिकस्य अपेक्षणीयतेतिवाच्यम् । लक्षणाग्रहस्य प्रकारतयैव तीरत्वादीनां गङ्गापदजन्यधीप्रकारतोपपत्तेस्तत्र शक्यप्रवाहादि संबद्धतावच्छेदकत्व ग्रहस्यानुपयोगात् । पश्वादिपदादभ्रान्तपुरुषस्य शक्त्या गोत्वादिप्रकारकबोधानुदयाल्लक्षणाप्रतिसन्धानं विना तद्रूपविशिष्टप्रत्यायनेच्छया तत्पदाप्रयोगाच्च । शक्त्यधीनविशिष्टविषयकबोधे परं विशेषणांशे शक्तेः शक्यतावच्छेदकतायावा ग्रहस्योपयोगित्वोपगमात् । अभ्युपेत्यैकवृत्तेरुभयग्रहप्रयोजकतामभ्युपपादयितुं संकेतानुधावनम् । ... ...

एतावता विषयग्रहे अधिकानपेक्षाविवक्षामपि निराकरोति (एतेनेति) एकसङ्केतेनोभयबोधक पदघटितसामग्रीव्यावृत्त्यसंभवेन घटेच्छालिङ्गकघटज्ञानानुमान ज्ञाततालिङ्गकप्रामाण्यविशिष्ट ज्ञानानुमानयो र्विशेषविरहेणचेत्यर्थः (यादृशसामग्र्याइति) ज्ञानग्राहकताप्रयुक्तेत्यत्र प्रयुक्तत्वस्य व्यापकतारूपत्वाद्यथाश्रुत ग्रन्थलभ्यमेवैतदित्यवधेयम् । तादृशयावद्ग्राह्यत्वं - तज्जन्ययावद्ग्रह विषयत्वम् । मनस्संयुक्तसमवायस्य व्यवसायविषय घटादिभानाप्रयोजकत्वे मिश्रमतापरिग्रहोप्यत्र बोद्ध्यः । (तज्ज्ञानेति) घटज्ञानमित्यादिशाब्दबोधसामग्र्या इच्छादिलिङ्गकज्ञानानुमितिसामग्र्याश्च भट्टैर्ज्ञानग्राहकतया प्रामाण्याग्राहकतयाचाभ्युपगमात् तद्व्युदासः । अनुव्यवसायस्य ज्ञानविषकलौकिक प्रत्यक्षात्मकस्य ज्ञानातीन्द्रियतावादिना भट्टेनानुपगमान्मन स्संयुक्तसमवायादिघटिततत्सामग्री न ज्ञानग्राहकत्वेन तन्मतसिद्धा । व्यवसायसामग्री च घटादिग्राहकत्वेन तदुपगतापि न ज्ञानग्राहकत्वेन तदुपगता,गुरुभिरेव तस्याःज्ञानग्राहकत्वोपगमात् । ज्ञाततालिङ्गकानुमिति सामग्री ज्ञान

[ग]ग्राहकत्वेन भट्टमतसिद्धानि तैस्तस्याः प्रामाण्यग्राहकत्वोपगमात् प्रामाण्याग्राहकत्वेन न तन्मतसिद्धेति तत्तन्मते प्रामाण्यग्राहकत्वेन अभिमतानां सामग्रीणां संग्रहः । गुरुमते घटत्ववतीत्यादिप्रामाण्यग्राहिकाणां ज्ञानविषयोघट इत्यादिशाब्दानुमिति सामग्रीणां प्रामाण्याग्राहकतया - ज्ञानग्राहकतयाच भट्टाभ्युपगतानामसंग्रहेपि नक्षतिः । अयं घट इत्येतादृशप्रत्यक्षसामग्र्याः प्रामाण्यग्राहकताविचारएवेदृशविप्रतिपत्त्यादरात् । भट्टमते ज्ञाततालिंगकानुमिति सामग्र्याः संग्रहाय "तज्ज्ञानप्रामाण्याग्राहकत्वेनेति" । पटज्ञानं प्रमा घटज्ञानं गुणइत्येतादृश समूहालंबनशाब्दसामग्र्या पटज्ञानप्रामाण्याग्राहकत्वेन भट्टमतासिद्धया घटत्ववतीत्यादिप्रामाण्या ग्रहाद्बाधवारणाय "तज्ज्ञानेति" प्रकृत प्रामाण्यस्य विशेषतोनिवेशसूचकम् । प्रामाण्याग्राहकत्वंच प्रामाण्यग्रहानुपधायकत्वं, तेन घटज्ञानमित्यादि शाब्दसामग्र्याः घटज्ञानं प्रमेत्यादि प्रामाण्यविषयक शाब्दादिस्वरूपयोग्यत्वेपि न क्षतिः । एवं ज्ञानग्राहकत्वमपि ज्ञानग्रहोपधायकत्वं गुरुणा प्रामाण्यग्राहकत्वेन सिसाधयिषिताया अयं घट इति प्रत्यक्षादि सामग्र्या अप्युपनीतभानांगीकर्तृभट्टेन ज्ञानविषयोघटइत्युपनीत भानादिस्वरूपयोग्यतयोपगमात् । ... ...

नच ज्ञानविषयकत्वघटितधर्मावच्छिन्न निरूपितयोग्यतानिवेशेपि - नायं दोष इति वाच्यम् । तथा सत्यात्ममनोयोगादीनां ज्ञानविषयकत्वावच्छिन्नाजनकत्वा तद्घटिततया वारणीयानां सामग्रीणामपि ज्ञानग्राहकतया भट्टमतसिद्धत्वानुपपत्तेः । ... ... ...

अथैवं भवन्मतेप्यात्मशरीरादीनां भट्टमतेन्यत्र प्रामाण्यग्राहकतया तद्घटितानां वारणीयसामग्रीणां प्रामाण्याग्राहकतया न भट्टमतसिद्धत्वम् । ... ... ... ...

यदिचात्मादीनां तथात्वेन भट्टमतसिद्धत्वविरहेपि वारणीयसामग्रीघटकपदज्ञानपरामर्शादीनां प्रामाण्यग्रहानुपधायकत्वेन भट्टमतसिद्धतया तद्घटितसमुदायस्य तथात्वेन भट्टमतसिद्धभिन्नत्वानुपपत्त्या तद्वारणं सुघटमित्युच्यते । ... ... ... ...

तदैतन्मतेप्युक्तरीत्या निर्वाहइतिचेत्सत्यं, एवंसति पदाजन्ययोग्यताज्ञानघटित योग्यताविषयक शाब्दसामग्रीविशेषेण गुरुमते प्रामाण्या

[ग] ग्रहाद्धायस्य शङ्काया ग्रन्थकृतोऽसंगतिः । तादृशयोग्यताज्ञानस्य ज्ञानग्राहकतया भट्टाभ्युपगतभिन्नत्वेपि कारणान्तरस्य तथात्वेन भट्टमतासिद्धस्य तत्र सत्वात्तद्घटित समुदायात्मकसामग्र्यास्तथात्वेन भट्टमतसिद्धभिन्नत्वानुपपत्तेः । अतः प्रामाण्यग्रहफलोपधान प्रयोजकतानवच्छेदकतया-ज्ञानग्राहकतावच्छेदकतया भट्टाभ्युपगतं यादृशं रूपं तदन्यज्ञानग्रहोपधानप्रयोजकतावच्छेदक रूपावच्छिन्नसामग्रीग्राह्यत्वं साध्यमेतदभिमतम् । तथाच कारणसमुदायपर्याप्तस्य ज्ञानग्रहोपधान प्रयोजकतावच्छेदकधर्मस्य स्वरूपयोग्यतानवच्छेदकत्वा त्तदवच्छेदकतया भट्टमतसिद्धभिन्नत्वावश्यकत्वात् ज्ञानग्रहोपधान निवेशनमावश्यकम् । तादृशसाध्यानुसरणं निष्प्रयोजनमिति न शंक्यम् , कारणीयसामग्रीघटक ज्ञानभासकानां सर्वेषां प्रत्येकं मिळितानाञ्च यत्र ज्ञायमानलिंगादिविधया प्रामाण्यविषयकानुमित्युपधायकता तादृशसामग्र्याः प्रामाण्याग्राहकत्वेन भट्टमतसिद्धभिन्नतया तज्जन्यप्रामाण्याविषयक ज्ञानमादाय बाधस्यदुर्वारतया यथाश्रुतस्य सामग्र्यां प्रामाण्याग्राहकतया भट्टमतसिद्धान्यत्वविशेषणघटितसाध्यस्य विवक्षणासंभवात् । उक्तसाध्यादरेतु प्रामाण्याविषयकज्ञानग्रहोपधान प्रयोजकतावच्छेदकस्य तज्ज्ञानग्रहोपधायक समुदायपर्याप्तधर्मस्य प्रामाण्याविषयक तत्तत्कारणलिंगक किंचित्साध्यकानुमित्युपधान प्रयोजकतानवच्छेदकत्वेन तादृशसामग्रीजन्य प्रामाण्याविषयकग्रहस्य साध्याघटकत्वेन बाधवारणसंभवात । ... ...

वस्तुतस्तु प्रामाण्यग्रहानुपधायकत्वेन भट्टमतसिद्धत्वं न पृथङ्निवेश्यते । अपितु ज्ञानग्राहकान्तर्गतो ग्रहएव प्रामाण्याविषयकत्वेन विशेष्यते लाघवात् । एवंच प्रामाण्याविषयकज्ञानग्रहजनकत्वेनभट्टमतासिद्धत्वानिवेशेऽव्यवसायादिसामग्री घटकात्मादेर्भट्टमतेपि प्रामाण्याविषयक ज्ञानग्रहजनकतया तादृशज्ञानानुमितौ लिंगविधया ज्ञानभानेपि प्रयोजकतयाऽनुव्यवसायजनकव्यवसायस्य प्रामाण्यविषयकेपि स्वान्वयबोधे तन्मतेज्ञायमानपदार्थविधया कारणस्य स्वात्मकज्ञानभासकतया अभिमतसामग्र्या नोक्तप्रकारेण भट्टमतासिद्धत्वम् , अतः फलोपधायकावच्छेदकधर्मएव तादृशज्ञानग्रह फलोपधायकावच्छेदकतया भट्टमतसिद्धभिन्नत्वं निवेश्यमित्यग्रिमग्रन्थ संगतिः । " ज्ञानग्राहकत्वेन " त्यस्य प्रयोजनं

[दी]अयंघट इत्यादिज्ञानजनक-सामग्र्याः प्रामाण्याग्राहकत्वेन भट्टांगी कृतत्वात्, गुरुमतसाधारण्यसंपादनाय ज्ञानग्राहकत्वेनेति ।

---

[ग] स्वयमाह (अयंघटइत्यादीति) (भट्टांगीकृतत्वादिति) ...

नच तादृशसामग्र्यन्तर्गतस्य घटत्वादिग्राहकसंयुक्तसमवायस्य समवायानंगीकर्तृ भट्टमतसिद्धत्वाभावान्न तादृशसामग्र्या भट्टमतसिद्धत्वमितिवाच्यम् । समवायत्वेन तदनंगीकारेपि घटत्वादि संबन्धत्वेन-तदभ्युपगमात् । घटादौ समवायस्यैव वस्तुतो घटत्वादिसंबंधत्वात् ॥

ननु प्रामाण्याग्राहक परोक्षसामग्रीभिन्नत्वं निवेश्यते तावतैव गुरुमते व्यवसायात्मक ज्ञानप्रत्यक्षसामग्र्या मिश्रमतेनुव्यवसायसामग्र्याः-परोक्षसामग्रीभिन्नत्वेन भट्टमतेच ज्ञाततालिंगकानुमिति सामग्र्याः परोक्षसामग्रीत्वेपि प्रामाण्यग्राहकभिन्नत्वेन विशिष्टभेदस्याक्षततया मतत्रयसाधारण्योपपत्तेः । प्रामाण्याग्राहकशाब्दानुमितिसामग्र्योश्च तादृशभेदासत्त्वेन व्यावृत्तिसंभवादितिचेन्न ॥

ज्ञाततालिंगकानुमितिसामग्र्याः प्रामाण्यग्राहकत्वासिद्धिकाले तज्जन्यानुमितेः साध्यघटकयावद्ग्रहांतर्गतत्वासिद्ध्या उक्तसाध्यसिद्धावपि तादृशानुमितेः प्रामाण्यावगाहिताया असिद्ध्याभट्टस्योद्देश्यासिद्धेः । प्रामाण्यग्राहकतयोभयवादिसिद्धानुमित्यादिसामग्री ग्राह्यतामादायापि साध्यपर्यवसानात् नैय्यायिकमतासिद्धत्वोक्त्या वनुव्यवसायसामग्र्यसंग्रहः । गुरुमतासिद्धत्वं मिश्रमतासिद्धत्वं वा यदि निवेश्यते, तदा व्यवसायसामग्र्या गुरुमतेऽनुव्यवसायसामग्र्याश्च मिश्रमते प्रामाण्यग्राहकतया विशिष्टभेदसत्त्वेऽप्युपनीतघटज्ञानादिविषयकस्य ज्ञानजन्यज्ञाततावान् घट इत्यादि प्रत्यक्षस्य सामग्र्या गुरुमिश्रमतासिद्धतया घटज्ञानादिप्रामाण्याग्रहात् भट्टमते बाधस्स्यादिति भट्टमतसिद्धभिन्नत्वोपादानम् ।

यत्तु 'पश्यतश्श्वेतिमारूप'मित्यादिन्यायेन पदजन्योपस्थितिविषयपदार्थान्वयबोधस्य ज्ञानावगाहिनः सामग्र्या मिश्रादिमतासिद्धतया घटज्ञानादिप्रामाण्याग्रहात् भट्टमतेपि बाधस्स्यादिति मिश्रादिमतसिद्धत्वोपेक्षाबीजवर्णनम्, तदसत् - भट्टमतसिद्धभिन्नत्वनिवेशेपि ज्ञानविषयो घट इत्यादि मानसोपनीतभानसामग्र्या मिश्रमते प्रामाण्याग्रहेण बाधस्य

[ग] दुर्वारत्वात्। भट्टेनोपनीतभानांगीकारेपि बहिर्विशेष्यकज्ञाने मनसो-सामर्थ्येन घटादिविशेष्यकमानसोपनीतभानानंगीकारात्। तत्र पदार्थकरणकान्वबोधस्यैवो पपत्तौताद्दशमानसोपनीत भानसामग्र्या भट्टमतासिद्धत्वात्॥ ... ... ... ...

यदिच ताद्दज्ञानमुभयसिद्धमेव, तस्य मानसप्रत्यक्षरूपतैव भट्टेन नोपयते। किंतु पदार्थकरणकान्वयबोधरूपतैवेत्यसंसर्गाग्रहपदार्थोपस्थितिरूपा तत्सामग्र्यप्युभयसिद्धैवेति तद्वारणमिति मन्यते, तदा मिश्रमतभिन्नत्वनिवेशेपि तुल्यरीत्या भट्टमते उक्तबाधस्य वारणसंभवात्।

अथ भट्टमतसिद्धभिन्नत्वनिवेशे उपनीतघटज्ञानविषयक पटज्ञानानुव्यवसायेन घटज्ञानप्रामाण्याग्रहात् मिश्रमते बाधः, ताद्दशस्यापि पटज्ञानानुव्यवसायस्य भट्टानभ्युपगतत्वात्, तत्सामग्र्याः पटज्ञानादिघटितायास्तथात्वात्॥ ... ... ... ...

नच तत्र घटज्ञानपटज्ञानयोर्भासकं सामग्रीद्वयं तत्संवलनादुभयविषयकमेकं ज्ञानं, एवञ्च तत्र घटज्ञानग्राहिका तज्ज्ञानादिरूपा सामग्री भट्टेनान्वयबोधसामग्रीत्वेनोपेयत एवेति वाच्यम्। यतस्समूहालंबनस्थलएव ग्राहकसामग्रीभेदः, यत्र चोपनीतघटज्ञानसमानाधिकरणपटज्ञानत्वादिना ताद्दशघटज्ञानविशिष्टे आत्मनि पटज्ञानत्वेनैववा पटज्ञानानुव्यवसायस्तत्र ताद्दशविशिष्टविषयकानुव्यवसायसामग्र्या विशिष्टघटकतया घटज्ञानग्राहिकायाभट्टमतासिद्धाया घटज्ञानप्रामाण्याग्राहकत्वात् बाधएव। एवमुपनीतघटज्ञानरूपविषयोपरक्त तद्विषयकशाब्दबोधाद्यनुव्यवसायसामग्र्या घटज्ञानग्राहिकया तदीयप्रामाण्याग्रहादपि बाधो दुर्वारः। ...

नच घटज्ञानं जानामीत्यादि शाब्दबोधाद्यनुव्यवसाये घटत्ववती त्यादिप्रामाण्यमपि भासते, तद्विषयभूते घटज्ञानमित्यादिव्यवसायेपि तत्प्रामाण्यसत्त्वादिति वाच्यम्। पुरोवर्तिज्ञानत्वादिना घटज्ञानविषयकव्यवसाये ताद्दशप्रामाण्यासत्त्वेन तदनुव्यवसाये ताद्दशप्रामाण्याभानादितिचेन्न। ज्ञानांतरविशेष्यतानापन्नात्मनिष्ठविशेष्यतानिरूपित स्वाश्रयप्रकारताशालि ग्रह सामग्र्या एव ज्ञानग्राकसामग्रीपदेन विवक्षिणीयत्वात् उक्तघटज्ञानोपनीतभानेषु घटज्ञानांशे ताद्दशात्मनिष्ठविशेष्यतानिरूपितप्रकारताविरहेणैव तत्सामग्र्याः साध्याघटकत्वा

[ग] बाधानवकाशात् ॥ ... ... ...

नचात्मनो लौकिकप्रत्यक्षे पटादिज्ञानस्येच्छादेर्वा विशेषगुणस्य विद्यमानस्य भानावश्यकतया लौकिकप्रत्यक्षविषयात्मांशेऽ विद्यमानघटज्ञानोपनीतभाने यापटादिज्ञानीयलौकिकभानांशे धर्मितावच्छेदकतया-घटज्ञानप्रकारता तस्या निरुक्तात्मविशेष्यतानिरूपितत्व विरहेपि , एवमुपनीतघटज्ञानावच्छिन्नआत्मनि यदिच्छादेर्लौकिकं प्रत्यक्षं तत्सामग्र्या भट्टमतसिद्धत्वेपि , घटज्ञानवदात्मत्वेन परात्मोपनीत भानरूपेपटज्ञानानुव्यवसाये तादृशपरात्मविशेष्यतानिरूपित घटज्ञानप्रकारतासत्त्वात् तादृशानुव्यवसायेन घटज्ञानप्रामाण्याग्रहात् बाधोदुर्वारएवेति वाच्यम् ।

उपनीतस्य परात्मनो मुख्यविशेष्यतयानुव्यवसायविषयत्वे तज्ज्ञानस्य समूहालंबनरूपतया सामग्रीभेदेन तत्र घटज्ञानभासकसामग्र्या अन्वयबोधसामग्रीत्वेन भट्टमतसिद्धतया घटज्ञानप्रामाण्यस्य तदग्राह्यत्वेपि बाधानवकाशात् । तादृशात्मनः स्वात्माद्यंशे कथंचित्प्रकारत्वेच्चात्मनो मुख्यविशेष्यताया निवेशनीयतया बाधवारणसंभवात् । ...

नचैवमोदनकामकर्तव्यता बोधविषयः पाकइत्यादि वाक्यजन्यशाब्दबोधे पाकविशेषणतया ओदनसाधनताज्ञानस्य अन्वयप्रयोजकरूपात्मकस्य भानेपि आत्मविशेषणतया तज्ज्ञानाभानात्तादृशशाब्दबोधेन तज्ज्ञानप्रामाण्याग्रहेपि न बाधप्रसक्तिरित्यग्रिम तादृशबाधशंकाया असंगतिरितिवाच्यम् । यथाश्रुताभिप्रायेण तदाशंकाया स्संगमनीयत्वात् । यथाविवक्षणेतु आत्मांशएव यत्र इच्छाश्रयत्वाद्यन्वयिता वच्छेदकतया ज्ञानस्य भानं, तत्र तादृशज्ञानप्रामाण्याभानेन बाधप्रसक्त्या अन्वयितावच्छेदकरूपस्य शाब्दबोधे भानानभ्युपगमेन समाधानस्य संगमनीयत्वात् । ... ... ... ... ...

यद्यपि ज्ञानजन्यज्ञाततावान् घट इत्यादिप्रत्यक्षेण प्रामाण्याग्रहेनभट्टमते बाधस्य मिश्रादिमतसिद्धभिन्नत्व निवेशेपि उक्तविवक्षायामप्रसक्तिः । ... ... ... ...

तथापि ज्ञाततालिंगकशुद्धज्ञानादि साध्यकात्मादिपक्षकानुमितिसामग्र्या मिश्राद्यनभ्युपगतया प्रामाण्याग्रहेण बाधस्यवारणाय यथाश्रुतानुसारेणवा भट्टमतसिद्धत्वोक्तिः । आत्मपक्षकज्ञातता लिंगकप्रामाण्य

[ग]विशिष्टज्ञान साध्यकानुमिति सामग्रीमादायैव भट्टमते प्रामाण्यस्य यथोक्तसाध्यवत्त्वानिर्वाहः । ननु ज्ञाततापक्षकानुमिति सामग्रीमादाय, आत्मपक्षकानुमितेरेवानुव्यवसाय समानविशेष्यकतया तादृशानुमितेरेव तैरभ्युपगन्तव्यत्वात् । अन्यथा अनुभववैषम्यापत्तेः । ... ...

अथैवमभ्युपनीता प्रामाण्यविषयक घटादिज्ञानानुव्यवसायेन तदीयप्रामाण्याग्रहात् तादृशसामग्र्या अपि भट्टमतासिद्धत्वान्मिश्रमते बाधस्य दुर्वारतेतिचेन्न । ... ... ...

प्रामाण्यभासकसामग्र्या विषयनिरूप्यत्व मर्यादोपबृंहिताया अप्यप्रामाण्यभासक सामग्र्यपेक्षया बलवत्त्वेनानु व्यवसायेऽप्रामाण्यस्य व्यवसायांशे भानासंभवात् प्रामाण्यभानस्यावश्यकत्वात् । तथाविधसामग्र्या अबलवत्त्वे घटत्वप्रकारकत्वादिना व्यवसायभाने तत्र तदभावादेरपि भानप्रसंगइत्यग्रे वक्ष्यमाणत्वात् । ...

यदिचोक्तप्रामाण्यभान सामग्र्या बलवत्त्वोपगमेऽनभ्यास दशापन्न ज्ञाने प्रामाण्यसंशयानुपपत्तिरिति मीमांसकैरप्रामाण्योपस्थिति दशायां तादृशदोषवशादनु व्यवसायेऽप्रामाण्यभान मवश्यमेवोपगन्तव्यम् । तथाच तादृशानुव्यवसायसामग्र्या ज्ञानग्राहकत्वेन भट्टानभ्युपगततया प्रामाण्याग्रहान्मिश्रमते बाधोदुर्वारएवेत्युच्यते । तदाऽप्रामाण्याग्राहकत्वमपि स्वातन्त्र्येण सामग्रीविशेषणं देयम् । ... ...

वस्तुतस्तु अप्रामाण्योपस्थिते रनुव्यवसायपूर्वं सत्त्वे तुल्यबल-सामग्रीभ्यां प्रामाण्याप्रामाण्योभय संशयरूपएवानुव्यवसाय स्तत्र जन्यते । धर्मिज्ञानस्य संशयहेतुताया मीमांसकैरनभ्युपगमात् । तथाच तादृशानुव्यवसायसामग्र्यापि प्रामाण्यग्रहान्न बाधः । ...

नच यत्रानुव्यवसायपूर्वं नाप्रामाण्यमुपस्थितं तत्राप्यनभ्यासदशापन्नज्ञान प्रामाण्यसंशया त्तदनुरोधेना ननुगतदोषात्तत्र प्रामाण्याग्रहस्तैरवश्यमंगीकार्यः । तथाच तत्स्थलीयसामग्र्या प्रामाण्याग्रहाद्बाधोदुर्वारएवेतिवाच्यम् । अप्रामाण्याग्राहकत्व विशेषणेनापि तादृशबाधवारणासंभवात् । तद्वारणाय तत्रानुव्यवसायः प्रामाण्यं गृह्णात्येव, तादृशानुव्यवसाये विनष्टे सत्येवच तज्जनितसंस्कारात् प्रामाण्याविषयक ज्ञानरूप धर्मिस्मरणे तदुपनीततद्धर्मिविषयकः प्रामाण्यसंशय इत्येव स्वकरणी

[ दी ] विशिष्टव्यतिरेकस्य तत्रापि सत्त्वा ददोषः । ज्ञातता प्रत्यक्षजनकसामग्रीवारणाय ज्ञानग्राहकेति ।

---

[ ग ] यत्वात् । ... ... ... ...

एतेन स्वातन्त्र्येणा प्रामाण्याग्राहकत्वविशेषणदानेऽग्राहकान्तस्य निरुक्तार्थकत्वविरोध इति निरस्तम् । ... ... ...

यत्तु व्यवसायोल्लिखित प्रकारविशिष्टधर्मिविशेष्यकत्वमेवा नुव्यवसायेन गृह्यते, नतु धर्मान्तरविशिष्टविशेष्यकत्वमिति नानुव्यवसाये तदभाववद्विशेष्यकत्वघटिताप्रामाण्यावगाहितेति समाधानम् । तत्तुच्छं -धर्मांतरविशिष्ट विशेष्यकत्वस्य लौकिकविषयतायाएवा नभ्युपगमेनोपनीतभ्रमत्वस्य प्रमात्वाभावस्यचा नुव्यवसायेनावगाहने ऽविरोधात् । पित्तादिदोषाद्यथा शङ्खादावपीतत्वादेरग्रहे पीतिमाद्यारोप स्तथा दोषविशेषाद्यत्रानुव्यवसायेऽप्रामाण्य मात्रभानं तत्सामग्रीमादाय बाध इत्यपि नशक्यम् । अनुभवानुरोधेन क्वचित्तथा दोषकल्पनेपि प्रकृते तथाविधदोषकल्पकानुभवविरहात् । ... ... ...

अथ यत्र घटएव अघटोयं घटइत्याहार्यं, तत्र तदनुव्यवसायस्य घटत्वाभाववति घटत्वप्रकारकत्वेन तज्ज्ञानविषयकस्य घटत्ववतीत्य । प्रामाण्याग्राहकत्वात् भट्टमतासिद्धतत्सामग्रीमादाय बाधइतिचेन्न । प्रकारविरुद्धधर्मावच्छिन्न विशेष्यत्वाघटित प्रामाण्यस्यैव पक्षत्वोपगमात् तादृशप्रामाण्याश्रय ग्राहकसामग्र्याएव साध्यघटकत्वात् । अयं घट इत्यादि ज्ञाननिष्ठमनस्सन्निकर्षघटितसामग्र्या ग्राहकत्वेन भट्टमत सिद्धभिन्नत्वोक्त्यापि संग्रहसंभवात् ज्ञानग्राहकत्वपर्यन्त निवेशप्रयोजनं गुरुमते व्यवसायसामग्र्युपग्रह एवेत्याशयेन मिश्रमतानुपन्यासः । विशिष्टव्यतिरेकस्य- प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेनच यद्भट्टमतासिद्धं तद्भेदस्य । तत्र- तादृशसामग्र्यां । एवं प्रतियोगिकोटौ ज्ञानग्राहकत्वानिवेशे भेदविशेष्य सामग्र्यामपि तद्विशेषणं व्यर्थस्यात्तन्निवेशस्यावश्यकत्वेच विशेष्ये तद्विशेषणस्यापि सार्थक्यमिति सूचयितुं भट्टमते तद्व्यावृत्तिंदर्शयति ( ज्ञातताप्रत्यक्षजनकेति ) घटादिसामग्र्यामपि विशिष्टभेदसत्त्वात्तज्ज्ञानग्राहकत्वस्य सामग्रीविशेषणत्वाभावे तत्सा

मग्रोपरिग्रहेऽपि केवलग्राहकत्वनिवेशेनापि तद्व्यावृत्तिसंभवात्सामग्रीजन्यग्रहएव यावत्त्वविशेषणे तज्जन्यग्रहाप्रसिद्ध्याचनबाधसंभव इति सानोपात्ता ॥ ... ... ... ...

यद्यपि घटादिग्राहकसामग्रीमादाय दर्शितव्यावृत्तिसंभवात् ज्ञाततामत्यक्षसामग्रीपर्यंतनिवेशनमफलं, तथापि मिश्रादिमत सिद्धत्वंपरित्यज्य भट्टमतसिद्धत्वपर्यन्त निवेशव्यावृत्तिर्ज्ञाततामत्यक्षमादायैवसंभवतीति ज्ञाततामत्यक्षपर्यन्तानुधावनं । ज्ञानविशेषित ज्ञातताविषयकानुमित्यादे मिश्रादिभि रपि ज्ञानविषयतागोचरानुमितित्वेन स्वीकारा त्तत्सामग्र्या अपि ज्ञानग्राहकसामग्रीत्वेन तन्मतसिद्धता । ज्ञानजन्य ज्ञाततावानित्यनुमित्यादिसामग्र्या गुरुणा अनंगीकारेपि साप्यन्यथाख्यातिवादिनामिश्रेणोपगतैवेतितादृशसामग्रीमादायभट्टमतसिद्ध-भिन्नत्वनिवेशव्यावृत्त्यसंगतिरितिमत्यक्षोपादानम् ।

यद्यपिज्ञाततामत्यक्ष मपिज्ञानविषयत्वोपनीतभानरूपतयामिश्रानुमतम , तथापिज्ञाततारूपविषयघटिततत्सामग्री ज्ञानग्राहकत्वेन नतन्मतसिद्धेतितामादायव्यावृत्तिसंगतिः । ज्ञानग्राहकत्वेनेत्यत्र ज्ञानपदंप्रकृतप्रामाण्याश्रयपरम् अन्यथापटादिज्ञानविषयकघटादिशाब्दबोधादिसामग्र्यागुरुमते घटादिज्ञानप्रामाण्यग्राहिकाया असंग्रहात् । तथाचानुयोगिविशेषणमपि प्रकृतप्रामाण्याश्रयग्राहकत्वम्बोध्यं । अन्यथापटादिज्ञानग्राहक सामग्र्याघटादिज्ञान प्रामाण्याग्रहेणबाधप्रसंगात् ॥

एतेन ग्राहकसामग्रीमात्रस्यैव गुरुमते ज्ञानग्राहकतयातन्मतेज्ञानपदवैयर्थ्यमितिपरास्तं, प्रकृतप्रामाण्याश्रयपरतयातत्सार्थक्यात् ।

अथ प्रामाण्यघटकघटत्वादिप्रकारकत्वाश्रयग्राहकसामग्रीनिवेशेनैवोपपत्तौप्रामाण्याश्रयग्राहकसामग्रीनिवेशनमनर्थकम् । नचैवं ज्ञाततायाअपिघटत्वादिप्रकारकत्वाश्रयत्वात्तद्ग्राहकसामग्रीमादायबाधइतिवाच्यम् । ज्ञानग्राहकत्वेनेत्यत्रापि घटत्वादिप्रकारकत्वाश्रयग्राहकताया एवविवक्षणीयतया घटत्वादिप्रकारकज्ञाततामत्यक्षसामग्र्या भेदप्रतियोगिकोटौनिवेशनीयत्वादितिचेन्न, प्रामाण्यपर्यंतानिवेशेघटत्वादिप्रकारकभ्रमानुव्यवसायसामग्र्या वास्तवघटत्वाद्याश्रयविशेष्यकत्वघटितस्य प्रामाण्यस्याग्रहेणबाधस्यदुर्वारत्वात् । ... ... ...

[दी]नच विषयबाधभ्रमकालीनानुव्यवसायेन प्रामाण्याग्रहान्मिश्रमते बाधः । तदापि तद्ग्रहोपगमात् । बाधग्रहाभावेन विशेषणाद्वा । रीतिरुक्तैव ।

---

[ग] ( विषयबाधभ्रमकालीनेति ) नायंघटइत्यादिभ्रमाव्यवहितोत्तरोत्पन्नेत्यर्थः ॥ ... ...

नच तदानीमयंघटइत्यादिव्यवसायएव नसंभवतीति कथमनुव्यवसायोदयइतिवाच्यम् । भिन्नेन्द्रियादिजन्यबाधभ्रमोत्तरंलौकिकसन्निकर्षजन्यव्यवसायसंभवेनानुव्यवसायोपपत्तेः । गुरुमते तादृशव्यवसायात्मकज्ञानग्रहे विशेष्येघटत्वादिमत्तयालौकिकसन्निकर्षाद्भाने तादृशबाधभ्रमोनविरोधीति प्रामाण्यभानसंभवइतिमिश्रमतानुसरणम् । बाधस्यभ्रमात्वेव्यवसायस्य प्रामाण्याश्रयत्वासंभवाद्बाधभ्रमेत्युक्तम् । समाधत्ते (तदापीति) तद्ग्रहोपगमात - विषयस्य तद्वत्त्वांशेनिर्द्धर्मितावच्छेदकक प्रामाण्यग्रहोपगमादित्यर्थः । समानविशेष्यकस्यापि ज्ञानस्यविशेष्यांशे समानप्रकारकस्यैवविरोधिज्ञानस्य प्रतिबंधकत्वादितिभावः । समानविशेष्यतामात्रेणविरोधित्वेप्रकारधर्मिकावृत्तित्वज्ञानस्यतत्प्रकारकज्ञानसामान्यंप्रति विरोधित्वेना पुनराह(बाधग्रहाभावेनेति)धर्मिणिप्रकारवत्त्वग्रह प्रतिबन्धकाभावेनेत्यर्थः॥

अथैवमपि विशेष्यतांशे घटत्वादिना घटादेर्बाधग्रहे विशेष्यतात्वावच्छिन्नांशे घटत्वादिविशेषित घटीयत्वादिघटित प्रामाण्यभानासंभवाद्बाधोदुर्वार एव , बाधग्रहपदेन प्रामाण्यभानप्रतिबन्धक मात्रविवक्षणे " तदापि तद्ग्रहोपगमादि " त्यनेनैतत्समाधानस्य वैकल्पिकताविरोध इति चेन्न । विशेष्यितात्वस्य घटादिधर्मितावच्छेदकतया न प्रामाण्यघटकता, अपित्वेकत्र द्वयमिति रीत्या विशेष्यताविशेषणत्वेनोभयोस्तथात्वमित्याशयेन विकल्पसंगतेः । अतएव ज्ञाने विषयितांशेच विषयबाधग्रहदशायामुत्पन्नव्यवसाये ज्ञानभानासंभवेन स्वप्रकाशतानुपपत्तिरित्यपि समाहितं । ननु बाधभ्रमोगुरुमते ज्ञानद्वयरूपः, मिश्रमते विशिष्टविषयकैक ज्ञानरूपः , तयोः कथमनुगतरूपेण प्रवेश इत्यत आह ( रीतिरुक्तैवेति ) तत्तद्धर्मिनिरूपित तत्तद्धर्मनिष्ठ विशेषणताकत्वेन प्रामाण्यग्रह प्रतिबन्धकत्वेनचानुगमसंभव इति भावः ।

[दी] अथ गुरुनये घटेन जलमाहरेत्यादौ छिद्रेतरत्वादेरिव ओदन कामकर्तव्यताबोधविषयः पाक इत्यादौ शब्दादनुपस्थितस्याप्यन्वय प्रयोजकस्य ओदनादिसाधनताज्ञानस्यापि शब्देन ग्रहात्तत्प्रामाण्या ग्रहाच्च बाधः। भट्टेन शब्दादनुपस्थितार्थस्य शाब्दबोधप्रवेशान भ्युपगमात्। तदग्रहेपि कर्तव्यताबोधग्रहान्न ज्ञानग्राहकत्वेन भट्ट मतसिद्धभिन्नत्वमितिचेन्न।

---

[ग] तत्प्रामाण्याग्रहात् - ओदनसाधनताज्ञान प्रामाण्याग्रहात्।

नचौदनसाधनतात्वेन साधनताभाने साधनेतरावृत्तित्वादि घटित स्य साधनतात्वस्य भानेन साधनत्वेन साधनभानात्तज्ज्ञाने साधनत्व वति साधनत्वप्रकारकत्वरूपं प्रामाण्यमस्तीति तदपि तेन गृह्यतएव, गुरुमते स्ववृत्तिप्रामाण्यमात्रस्यैव ज्ञानेन ग्रहादितिवाच्यम्। साधनतात्व स्याखण्डोपाधिरूपतायाः साधनत्वानांकार्यादिभेदेन भिन्नानामनुगमा यावश्यमुपगन्तव्यतया तद्भाने साधनत्वेन साधनभानानियमात्, साधन मुख्यविशेष्यकज्ञानीय मुख्यविशेष्यताघटित प्रामाण्यस्य तादृशशाब्द बोधावृत्ते स्तादृश बोधविषयवृत्ते स्तेनगृहीतुमशक्यतया उक्तरूपसा धनतात्वभानेपि बाधस्य दुर्वारत्वाच्च। तादृशसामग्र्या ज्ञानग्राहकत्वे न भट्टमतासिद्धत्वं दर्शयति ( भट्टेनेति ) ( शाब्दबोध प्रवेशानभ्युप गमादिति ) तथाच घटज्ञानविषयो घट इत्यादिशाब्दाद्यात्मक व्यवसा यसामग्र्या गुरुमते संग्रहानुरोधेन ज्ञानग्राहकत्वेनेत्यत्र ज्ञानपदस्य प्र कृतप्रामाण्याश्रय ज्ञानपरताया उक्तत्वात्, उक्तसामग्र्याः प्रकृतप्रामा ण्याश्रयौदनसाधनत्व ज्ञानग्राहकत्वेन भट्टमतसिद्धभिन्नत्व मव्याहतमे-वेति न तादृशसामग्री व्यावृत्तिरिति भावः। गुरुमतेपि घटत्वप्रकार कज्ञानविषयो घट इत्यादि व्यवसायसामग्रीव दुक्तव्यवसायसामग्र्य परिग्रहेपि न क्षतिरिति सामान्यतो ज्ञानग्राहकत्वमेव निवेशनीय मतोनोक्तक्रमेण बाध इत्याशयेन शंकते ( तदग्रहेपीति ) तदग्रहे - ओद नसाधनताज्ञानाग्रहे।

यद्यपि सामान्यतो ज्ञानग्राहकतानिवेशेनो क्तबाध वारणेपि घटत्वप्रकारकेच्छाविषयोयमित्यादौ शब्दानुपस्थितस्य योग्यतात्मकघ टत्वादिप्रकारक ज्ञानस्य शब्देन ग्रहात्तत्प्रामाण्याग्रहात् बाधो दुर्वार एव। ज्ञानग्राहकत्वेनेत्यत्र सविषयकग्राहकत्व विवक्षणे इच्छादिविषयक

[ दी ] शब्दाजन्यकाम्यसाधनता ज्ञानघटितायाश्शाब्दसामग्र्या भट्टे नानभ्युपगमात् ।

---

[ग] ज्ञानप्रामाण्य पक्षकस्थले सिद्धसाधनं, तादृशप्रामाण्यग्राहिकाया व्यवसायसामग्र्याः प्रामाण्याग्राहकत्वेन इच्छारूपसविषयक ग्राहकत्वेन भट्टाभ्युपगतत्वात्तद्भिन्नप्रामाण्यानुमित्यादि सामग्रीग्राह्यत्वस्य प्रामाण्ये सत्त्वात् । अस्तुवा ज्ञानमित्यादि शाब्दबोधाद्यात्मक व्यवसायप्रामाण्यवत्तदपि प्रामाण्यं पक्षबहिर्भूतम् , अस्तु च ज्ञानपदं सविषयपरमेव, तथापि कंबुग्रीवादिमानित्यादौ घटत्वादिप्रकारक ज्ञानविषयत्वस्यापि पदानुपस्थितस्याऽ न्वयितावच्छेदकतया भानात्तादृशज्ञान प्रामाण्यस्यव तत्राभानात् बाधस्य दुर्वारतैव। तथापि सामान्यतो ज्ञानग्राहकत्वनिवेशमभ्युपेत्य संभवाभिप्रायेणोक्तस्थलएव प्रकारान्तरेण बाधं संगमयति ( शब्दाजन्येति ) शब्दाजन्य काम्यसाधनता ज्ञानोपस्थिति घटित समुदायपर्याप्त सामग्रीत्वस्य ज्ञानग्रहोपधायकता वच्छेदकतया भट्ट मतासिद्धत्वादित्यर्थः ।

नच तत्र शाब्दबोधस्यानुभाविकत्वे तज्जनक काम्यसाधनताज्ञानोपस्थितेः पदजन्यत्वमेव भट्टेन कल्पनीयम् । तथाच तत्साधारणसामग्रीत्वमपि तादृशशाब्दबोधोपधायक समुदायपर्याप्तत्वादि प्रकारेण प्रामाण्याविषयक ज्ञानग्रहोपधायकतावच्छेदकतया भट्टाभिमतमिति वाच्यम् । यत्कालीनकाम्यसाधनता ज्ञानोपस्थितौ पदजन्यत्वविरहो भट्टेनापि निश्चितः, तत्कालीन शाब्दबोध जनक तज्जन्यज्ञानोपस्थितेः-शाब्दबोधानुपधायकत्वेन भट्टाभिमतायाः शाब्दबोधोपधायकत्वेन भट्टेनाज्ञानात् तत्साधारणसमुदायत्वस्योक्तप्रकारेण तदीयाभ्युपगमेऽभानात्तत्कालीनसामग्रीमादाय बाधस्य दुर्वारत्वात् ।

यदिचोक्तविशेषदर्शन दशायां तत्कालीन काम्यसाधनता ज्ञानोपस्थितित्वादिरूप विशेषधर्मपुरस्कारेण तादृशोपस्थितेः शाब्दबोधोपधायकतया भट्टज्ञानविषयत्वासंभवेपि तादृशविशेषदर्शन शून्यतादशायामुक्तविशेष धर्मप्रकारेण ज्ञानदशायामपि उपस्थितित्वादि सामान्यधर्मप्रकारेण तदीयज्ञानविषयत्वसंभवा दुक्तरूपेण तदुपस्थितिसाधारण सामग्रीत्वं भट्टाभ्युपगमविषय एवेत्युच्यते, तदा चक्षुस्संयोगादिघटित-

व्यवसायसामग्र्या अपि सामान्यतोज्ञानग्रहोपधायकत्वेन भट्टाभ्युपगम विषयत्वे बाधकाभावात्तन्निष्ठसमुदायत्वमपि दुस्संग्रहंस्यात् ॥

नच प्रामाण्याविषयकज्ञानग्रहोपधायकतावच्छेदकतया भट्टमतसिद्धभिन्नत्वं वक्तव्यं, व्यवसायसामग्र्यां प्रामाण्याग्राहकत्वसहितज्ञानग्राहकत्वप्रकारकं भट्टज्ञानं गुरुमते न्यायमतेच नप्रमा, गुरुमते तस्याः प्रामाण्याग्राहकत्वस्य न्यायमते ज्ञानग्राहकत्वस्य बाधादितिवाच्यं । एवं सत्यनुव्यवसायसामग्र्याः सामान्यतोज्ञानग्राहकत्वप्रकारकभट्टज्ञानस्य प्रामाण्यग्राहकत्वविषयकत्वेपि नैय्यायिकमते उभयांशएव प्रमात्वात्प्रामाण्यानुमित्यादिसामग्रीणामेव साध्यघटकतया निषेधसाधने बाधात । तस्माद्येन रूपेण स्वाश्रयग्रहोपधायकतावच्छेदकता सामग्रीपर्याप्तधर्मस्य तादृशरूपे प्रामाण्यग्राहकतावच्छेदकत्व विशिष्टज्ञानग्राहकतावच्छेदकत्वप्रकारकभट्टाभ्युपगमविषयतानवच्छेदकत्वं विवक्षणीयं । चक्षुस्संयोगादितत्कारणसमुदायपर्याप्तधर्मत्वेनच व्यवसायादिसामग्रीपर्याप्तधर्मस्य स्वाश्रयग्रहोपधायकतावच्छेदकता,तादृशधर्मत्वस्य न निरुक्त भट्टाभ्युपगमविषयतावच्छेदकत्वमिति गुरुमतादिसंग्रहः । उक्तशाब्दबोधसामग्रीपर्याप्तधर्मस्य पदजन्यकाम्यसाधनता ज्ञानोपस्थिति मनिवेश्य पाकविशेष्यक तादृशज्ञानविषयत्वरूप योग्यताज्ञानादिरूप तत्तत्कारणपर्याप्तधर्मत्वेन तादृशज्ञानग्राहकतावच्छेदकता, पदजन्यकाम्यसाधनता ज्ञानोपस्थित्यादि पर्याप्तधर्मत्वेनच निरुक्तभट्टाभ्युपगम विषयतेति, बाधो दुर्वारएव ।

नच तादृशयोग्यताज्ञानस्य भट्टमतेपि शाब्दधीहेतुतया तन्मतेपि तस्य सामग्रीशरीरे निवेशनमावश्यकं, तथाचाधिक पदजन्यतादृशयोग्यताज्ञानोपस्थितिनिवेशेपि * दर्शितसामग्र्याभट्टमतसिद्धत्वमस्त्येवेतिवाच्यम् । एवमपिपदजन्ययोग्यताज्ञानविरहकालीन दर्शितशाब्दसामग्रीमादायबाधस्यदुर्वारत्वात् ।( * येन रूपेण गुरुमते सामग्रीपर्याप्तधर्मस्यज्ञानग्राहकतावच्छेदकता तद्रूपस्य निरुक्तभट्टाभ्युपगम विषयतावच्छेदककोटिप्रवेशोव्याहत एवेति वाच्यम् । अधिकान्तर्भावेन पर्याप्तिघटित धर्मस्य विलक्षणया न्यूनपर्याप्तयाऽघटितत्वात् । पाठान्तरम् । )

योग्यताज्ञानस्य शाब्दधीहेतुत्वेपि पदानुपस्थितयोग्यतायाः शाब्द

[दी] मैवम् । शाब्दबोधेहि योग्यताज्ञानं कारणं। साच तेषामन्वय-प्रयोजकरूपवत्त्वं । तेन तज्ज्ञानं प्रथमं गृग्यते । नच शाब्द बोधे तदनुप्रवेशोपि नियतो मानाभावात् । नहि उपस्थितत्वा देव शाब्दबोधे भानं । उपस्थितावाधितयावत्पदार्थानामेव त-थाभानप्रसंगात् । नियोज्यान्वयेपि काम्यसाधनताज्ञानस्य प्रथ-मज्ञानं । नतु शाब्दबोधेपि तद्भानमित्यपूर्ववक्ष्यते । क्वचिच्छि द्रेतरत्वादेरपिभानं, एकविशेषबाधे शाब्दबोधसामान्यसामग्र्या विशेषांतरप्रकारकबोधजननस्वाभाव्यात् ॥

---

[ग]बोधविषयत्वानभ्युपगमात् नोक्तसामग्रीकाम्यसाधनताधी ग्राहिकेतित यातत्प्रामाण्याग्रेहेपिनक्षतिरितिसमाधत्ते(मैवमित्यादिना)पदजन्योपस्थित्या दिसत्वे योग्यतायाश्शाब्दबोधप्रवेशे बाधकाभाव इत्यतो''नियत''इत्युक्तं ।

नन्वेवं स्वर्गकामोयजेतेत्यादौ कामनाविशिष्टस्य यागेकार्यताबोधोप योगित्वरूप नियोज्यत्वेनान्वये काम्यसाधनताज्ञानोपयोगित्वरूप योग्यता याः पदानुपस्थिताया अपि अन्वयितावच्छेदकतया भानमिति तत्सि द्धान्तो भज्येतेत्यत आह (नियोज्यान्वयेपीति) (प्रथमं ज्ञानमिति) तैस्स्वीक्रियत इति शेषः । तावतैवेष्टसाधनता घटकापूर्वोपस्थित्याद्यर्थं - अपूर्ववाच्यताया आवश्यकत्वादिति भावः । (नतु शाब्दबोधेपीति) न चैवं " इष्टसाधनता विधिपक्षे स्फुटैवानुपपत्तिः, कार्यताविधिपक्षेपि अ न्वयप्रकारतया साधनत्वं शाब्दमिति फलतो न विशेष " इति मणिकार लेखनविरोध इति वाच्यं । तादृशग्रन्थस्यहि फलीभूतशाब्दबोधग-वेष्टसाधनताया अन्वयितावच्छेदकतया भाने न तात्पर्यं किन्तु स्वर्ग-साधनत्वस्यान्वयप्रकारतयान्वयप्रयोजकरूपयोग्यतात्मकतया तज्ज्ञा-नस्य फलीभूतबोधात्पूर्वमवश्यमंगीकर्तव्यतया तद्बोधकप्रमाणांतरविरहे ण शाब्दमेव ज्ञानं पूर्वमंगीकर्तव्यं, तत्रापि विधेस्तात्पर्योपगमादित्य-त्रैव । अधिकं नियोज्यान्वये वक्ष्यामः ॥

नन्वेवं घटेन जलमाहरेत्यादौ पदानुपस्थितं छिद्रेतरत्वादिकम न्वयितावच्छेदकतया भासत इति तत्सिद्धांतभंग इत्यत आह (क्व चिदिति) (एकविशेषबाधइति) नचैवं यथा छिद्रे घटे जलाह-रणसाधनताबाधाच्छिद्रेतरघटत्वावच्छिन्ने पदानुपस्थितेपि जलाहरण-

साधनतान्वयधीस्तथा काम्यसाधनताज्ञानाविषय पाके कार्यताधीवि- षयत्वबाधबलात्पदानुपस्थितेपि काम्यसाधनताधीविषयत्वविशिष्टे पा- के कार्यतान्वयधीरावश्यकीति तादृशसामग्रीमादायैव बाध इति वाच्यं । भट्टैरपीतरबाधबलेन पदानुपस्थितार्थस्य शाब्दबोधे भानोपगमात् ॥

अथैवमप्यर्थाध्याहारवादिनां गुरूणाम्मते तात्पर्यसत्त्वे पदानुप- स्थितस्यापि काम्यसाधनताज्ञानादे र्भानावश्यकतया बाधवारणमशक्य मेवेति चेन्न । यद्यद्रूपावच्छिन्न समुदायपर्याप्तत्वेन प्रामाण्याविषय कज्ञानग्राहकतावच्छेदकता भट्टाभ्युपगता तत्तद्रूपशून्यकारणान्तर्भावेन पर्याप्तत्वस्य स्वाश्रयग्राहकतावच्छेदकत्व विशेषणत्वोपगमेन साम- ञ्जस्यात् । गुरुमते व्यवसायसामग्रीघटक चक्षुस्संयोगादे र्मिश्रमतेचा नुव्यवसायसामग्रीघटक व्यवसायादेस्तत्तद्रूप शून्यत्वा त्तदन्तर्भावेनप र्याप्तस्य ज्ञानग्राहकतावच्छेदक रूपस्य संग्रहः । अध्याहृतज्ञानग्राहक- सामग्र्यां पदजन्यतदुपस्थिते रधिकाया भट्टमते निवेशेपि तन्मतासि द्धकारणस्य गुरुमतेऽ निवेशाद्गुरुमतसिद्ध तादृशसामग्री पर्याप्तज्ञानग्रा हकतावच्छेदकं रूपं न निरुक्तरूपशून्य कारणान्तर्भावेन पर्याप्तमिति तद्रूपावच्छिन्नाग्राह्यत्वेपि प्रामाण्यस्य न बाधः ।

नच तादृशपदजन्योपस्थितित्वादि शून्यपदाजन्योपस्थिति मन्तर्भा व्य गुरुमतसिद्धज्ञानगृहो पधायकता वच्छेदकरूपस्य पर्याप्तत्वान्न ता दृशधर्मव्यावृत्तिरिति वाच्यम् । पदाजन्योपस्थितेरपि विशेषणतावच्छे दकप्रकारक ज्ञानादिविधया भट्टमते तादृशशाब्दबोधहेतुत्वेन तादृश विशेषणतावच्छेदक प्रकारकज्ञानत्वादि धर्मवत्त्वेन निरुक्तरूपशून्यता विरहात् ।

वस्तुतो गुरुमतेपि पदाजन्यार्थोपस्थिते स्तत्तदर्थोपस्थितित्वेन शा ब्दसामग्रीघटकत्वं नोपेयते, तात्पर्यादिज्ञानस्य तत्तदर्थविषयतानियमे न तन्निवेशेनैवोपपत्तेः । तथाच गुरुमतसिद्धसामग्रीघटक निखिलका रणानां भट्टमतेप्युक्तसामग्रीघटकत्वं निर्विवादमेवेत्युक्तरीत्या सामञ्ज- स्यम् । ज्ञातताऌिङ्गकानुमिति सामग्रीघटक सिद्ध्यभावबाधविशेषाभा वादीनां प्रामाण्याविषयक ज्ञानगृहोपधायक भट्टमतसिद्ध सामग्र्या मनन्तर्भावात् तादृशसामग्र्यास्तन्मते परिगृहः । अतोज्ञातताऌिङ्गक

परामर्शस्य ज्ञानत्वप्रकारकोपस्थितित्वादिना प्रामाण्याविषयक ज्ञानग्रहो पधायकपदाजन्योपस्थिति घटितान्वयबोधसामग्री घटकत्वेपि नक्षतिः। एवञ्च पदानुपस्थितताया अन्वयप्रयोजकरूपात्मक योग्यताया योग्यता ज्ञानबलादेव शाब्दबोधे भानस्वीकारेपि तादृशयोग्यताज्ञानस्य भट्टम तेपि शाब्दबोधहेतुतया तत्सामग्रीघटकत्वेन तादृशयोग्यताघटकानां प दजन्योपस्थितेर्भट्टमतेऽधिकायास्तादृश योग्यताविषयक शाब्दबोधेऽपेक्षित त्वेपि उक्तरीत्या तादृशसामग्र्या वारणसंभवात्, शाब्दबोधे तात्प र्यासत्त्वे योग्यताज्ञानबलाद्योग्यताभानं निर्युक्तिकमिति वस्तुगत्यनुरोधेन ग्रन्थकृता तन्निराकृतम् । ... ... ...

अथैवमपि सामग्र्यघटिते प्रामाण्याविषयकत्वेन ज्ञानविषयकत्वेन यद्भट्टमतसिद्धं तदन्ययावज्ज्ञानग्राह्यत्वरूपसाध्येऽध्याहृत ज्ञानविषयकज्ञा नवानात्मेत्याद्याकारक शाब्दबोधाविषयतया प्रामाण्यस्य गुरुमते बा धो निराबाध एवेति चेत् तत्कल्पे शाब्दान्यत्वेन तादृशज्ञानस्य विशेषणी यत्वात् । ... ... ... ...

यत्तु तादृशशाब्दबोधस्यानुभाविकत्वे भट्टेनापि पदाध्याहारकल्पन या तादृबोध उपपादनीय इति स शाब्दबोध उक्तरूपेण भट्टमतसिद्धोपी- ति समाधानं, तदसत्–यत्र पदजन्याया ज्ञानोपस्थितेरभाव उभयवादिसि द्ध स्तत्रत्यबोधे ज्ञानविषयताया भट्टानभ्युपगतत्वात् तद्ग्राह्यत्वमादा य बाधस्य दुर्वारत्वात्, ज्ञानभासकसामग्र्यनंतरोत्पन्नं ज्ञानं ज्ञानविषयक- मिति सामान्यतोभ्युपगमः अयं घट इत्याकारकस्वप्रकाशात्मकव्यव- सायमपि विषयीकरोतीति तादृशाभ्युपगमव्यावृत्तरूपेणैवाभ्युपगमस्य निवेश्यत्वात् ॥ ... ... ... ...

वस्तुतस्तु यत्रात्मादेः पदार्थांतरस्य पदादुपस्थितिः ज्ञानस्य चा- न्यत उपस्थितिस्तत्राप्युपनीतभानस्वरूपो ज्ञानान्वयबोधो भट्टाभ्युपगतः, परन्त्वसौ गुरुमते तात्पर्यादिज्ञानघटितसामग्रीजन्यः शाब्दत्वेनानुव्यव- सायाविषयः, भट्टमतेत्वसंसर्गाग्रहपदार्थोपस्थित्यात्मकसामग्रीजन्यत्वेन उ- क्तानुव्यवसायविषयः, एतावतैवञ्च शब्दादनुपस्थितस्यार्थस्य शाब्दबो- धेऽप्रवेशइति भट्टमतसिद्धांतस्योपपत्तिरिति कथिताध्याहृतार्थविषयक- शाब्दबोधः प्रामाण्याविषयकत्वेन ज्ञानविषयकत्वेन च भट्टमतसिद्धएवेति ।

[दी] नन्च स्वर्गकामकर्तव्यताबोधविषयो यागविषयकं कार्यमिति- वेदजन्यं ज्ञानं गुणोः ज्ञानत्वादित्यनुमानादिना ग्राह्यज्ञानप्रामाण्या ग्रहाद्बाधः। वेदजन्यतादृशज्ञानस्य भट्टनये शशविषाणकल्पतया तद्ग्राहकसामग्र्या भट्टेनानभ्युपगमादिति वाच्यम् । अन्यथाख्या तिवादिनस्तस्य शशविषाणं द्रव्यं विषाणत्वादित्यनुमानादौ वि रोधाभावात् । भट्टमतासिद्धज्ञानग्राहकताक शाब्दानुमितिस्मृतिसा मग्रीभिन्नत्वेन सामग्रीविशेषणीयेत्यपि कश्चित् । ... ...

---

[ग] अनुमानादिनेत्यादिनातादृशशाब्दबोधस्मृतिसामग्रीपरिग्रहः। (ग्राह्यज्ञानेति) तादृशवेदजन्यज्ञानेत्यर्थः (बाधइति) गुरुमतइत्यादिः ॥

इदमुपलक्षणं मनस्संयुक्तसमवायजन्यं घटमहं जानामीति ज्ञानं गुणो ज्ञानत्वादित्यनुमानादिना ग्राह्यज्ञानप्रामाण्याग्रहात् मिश्रमते बाध इत्यपि द्रष्टव्यम् । ... ... ...

( वेदजन्यतादृशज्ञानस्येति ) मनस्संयुक्तसमवायजन्यस्यो- क्तज्ञानस्यापि तथात्वं बोध्यम् ( तद्ग्राहकेति ) तादृशज्ञानग्राहकेत्य र्थः ( भट्टेनानभ्युपगमादिति ) तथाच तादृशसामग्र्या निरुक्तरूपेण भ ट्टमतसिद्धा या सामग्री तद्भिन्नत्वेन तज्जन्यग्रहस्य साध्यघटकयावद्ग्रहा न्तर्गतत्वादिति भावः ( इत्यनुमानादौ विरोधाभावादिति ) तथाच य था प्रसिद्धविषाणे शशीयत्वावगाहिन्याः शशविषाणं द्रव्यमित्याका रकानुमितेर्भट्टमतसिद्धतया तत्सामग्र्यपि तन्मतसिद्धा, तथा स्वर्गका मनियोज्यकं यागविषयकं कार्यमित्याद्याकारक सामग्र्यन्तरजन्यबोध- स्य वेदजन्यत्वाद्यंशे भ्रमरूपतया भट्टाभ्युपगतायाः उक्तानुमित्यादेस्सा मग्र्यपि प्रामाण्याविषयक ज्ञानग्रहजनकतया भट्टमतसिद्धैवेति तद्ग्रा ह्यत्वेपि तादृशज्ञानप्रामाण्यस्य न बाधइति भावः। उक्तानुमित्यादिसा मग्र्या भट्टानभ्युपगतत्वाभिमानिनो विशेषणान्तरप्रवेशेनोक्त बाधसमा धानमुपन्यस्यति ( भट्टमतासिद्धेति ) उक्तानुमित्यादि सामग्र्या भट्टम तासिद्धज्ञानग्राहकताकतया व्यावृत्तिः। ज्ञाततालिंगकानुमिति सामग्र्या भट्टमते संग्रहाय ग्राहकताकान्तं सामग्रीविशेषणं । तस्याश्च ज्ञानग्राहकता न भट्टमतासिद्धेति तत्संग्रहः । भट्टमतासिद्धसामग्र्यास्तन्मतेऽप्रसिद्ध्या

तन्मतसंग्रहाय भट्टमतासिद्धत्वं सामग्रीविशेषणमुपेक्ष्य भट्टमतासिद्ध-ज्ञानग्राहकताकत्वपर्यन्तं तद्विशेषणमुपात्तं । तादृशीच सामग्री तन्मते घटाद्यनुमितिसामग्र्येव प्रसिद्धा । ज्ञानग्राहकतया भट्टमतसिद्धं यत्तदन्यत्वस्य तत्र भट्टमतेपि सत्त्वात् । भट्टमतासिद्धज्ञानग्राहकताक सामग्रीसामान्य भेद निवेशे गुरुमिश्रमतासंग्रहः । व्यवसा यानुव्यवसायसामग्र्योर्ज्ञान ग्राहकतया भट्टमतासिद्धत्वादिति शाब्दा नुमितिस्मृतीनामुपादानं । तासांच प्रत्यक्षान्यत्वेनैव निवेशः । नतु वि शिष्य । तेनानुमितौ ग्राहकान्तविशेषणेनैव भट्टमतसंग्रहे शाब्दादिसा मग्रीसामान्यभेदनिवेशेपि क्षतिविरहात्तत्सामग्र्यां तादृशविशेषणवैय र्थ्यमित्यपि समाहितम् । अतीन्द्रियगुरुत्वादि विषयघटितप्रामाण्यं पक्षाद्ब हिर्भावनीयम् । तेन गुरुमते तादृशप्रामाण्याश्रयव्यवसायसामग्र्या भ ट्टमतासिद्धज्ञानग्राहकताक परोक्षसामग्रीत्वनियमेपि गुरुमते न बाधः ।

अथवा ज्ञानांशे परोक्षस्य सामग्री विवक्षणीया । ज्ञानांशे परोक्ष-त्वंच ज्ञानविषयकज्ञानजन्यत्वं । गुरुत्वादिप्रकारकव्यवसायस्यापि ज्ञा नविषयकज्ञानाजन्यतया तत्सामग्र्याअपि गुरुमते संग्रहः । एवंच दर्शि ताकारानुव्यवसायविषयकोपनीत भानसामग्र्या ग्राह्यज्ञानप्रामाण्याग्र हेपि न मिश्रमते बाधः । तादृशोपनीतभानेपि उक्तानुमित्यादिवन्निरु क्तस्य ज्ञानांशे परोक्षत्वस्य सत्त्वात्तत्सामग्र्या उक्तविशेषणेन व्यावृ-त्तेः । एतन्मते दर्शितपदाजन्यज्ञानोपस्थिति घटितशाब्दसामग्र्या अप्य नेनैव विशेषणेन व्यावृत्तेस्तद्वारणाय दर्शितप्रयासो नास्तीतिबोध्यं ।

एवं घटज्ञानकालीन पटज्ञानवानहमित्याद्याकारक घटज्ञानांशोप-नीतभानात्मक पटज्ञानानुव्यवसायसामग्र्या घटज्ञानाद्यभावग्राहक सा मग्र्याच भट्टमतासिद्ध्या घटज्ञानप्रामाण्याग्रहेण मिश्रमते बाधोनेनापि विशे षणेन शक्यवारणः । उक्तानुमित्यादिसामग्र्या दर्शितरीत्यैव वारणसंभवा त् , तद्वारणायाधिकविशेषणप्रवेशो व्यर्थइत्यस्वरससूचनाय " कश्चि दिति " । अत्र ज्ञानग्रहत्वेन ज्ञानग्राहकसामग्रीजन्यग्रह निवेशसंभवे - तादृशसामग्रीजन्यग्रहत्वेन तन्निवेशः शिरोवेष्टनेन नासिकास्पर्शनमनु धावतीति ज्ञानग्रहत्वेन ग्रहं निवेश्य तद्विषयत्वकोटिकविप्रतिपत्त्यकथ नेन मूलस्य न्यूनता, एवं प्रथमविप्रतिपत्तावपि ज्ञानपदस्य स्वाश्र

[ दी ] तत्प्रामाण्याविषयकत्वेन ज्ञानाविषयकत्वेन योभट्टमतासि द्धस्तदन्योयावान् विशिष्टोऽ विशिष्टोज्ञानग्रहः - तद्विषयोनवेति निष्कृष्टमर्थं वक्ष्यति स्वाश्रयेत्यादिना । ... ...

---

[ ग ] यार्थकताया उक्तत्वात्तृतीयविप्रतिपत्तौ ग्राहकपदस्य ग्राहकसामग्री परत्वेतस्यास्ततोनभेदः । ... ... ...

नचाप्रामाण्याग्राहकत्व विशेषणप्रवेशादेव विशेषः, पक्षसंकोचे नैव अप्रामाण्यग्राहक सामग्रीग्राह्याश्रयकप्रामाण्ये बाधवारणसंभवादिति मिश्रमतं सम्यक् । तथासति यादृशज्ञानेप्रामाण्य संशयस्तत्प्रामाण्यस्य पक्षबहिर्भावेन तत्र मीमांसकैः स्वतस्त्वासाधनात , प्रामाण्यसंशयानुपपत्तिरूपवक्ष्यमाणदूषणासंगतेः । एकस्यैव ज्ञानप्रामाण्यमिति पक्षवाचकपदस्य प्रथमविप्रतिपत्त्यनुरोधा दप्रामाण्यग्राहक सामग्रीग्राह्याश्रयकपरत्वं, तृतीयविप्रतिपत्त्यनुरोधेनच तदितरप्रामाण्यपरत्वमिति विरोधाच्च । एवं ज्ञानं गुण इत्यादि शाब्दबोधसामग्रीवारणाय प्रामाण्याग्राहकत्वेनेत्यादिरूपाप्रामाण्याग्राहकत्वस्य तृतीयविप्रतिपत्ताव प्यवश्यं विवक्षणीयतया दुर्वारणोभयाविशेषः । यश्च स्वाश्रये ज्ञानत्वप्रवेशाप्रवेशाभ्यां मिश्राभिहितो विशेषः, सोप्यसंगतः। प्रयोजनसत्त्वे उभयत्रैव तत्प्रवेशावश्यकत्वात्तदसत्त्वे उभयत्रैव तदप्रवेशादित्यालोच्य तृतीयविप्रतिपत्तौ ग्राहकपदस्य गृह्णाति - विषयीकरोतीति व्युत्पत्त्याग्रहपरत्वं गृह्यत इत्यस्यच विषयीक्रियत इत्यर्थपरत्वमभिसन्धाय तृतीयविप्रतिपत्तेरेव सामग्र्यघटितसाध्यपरत्वमाह ( तत्प्रामाण्येति ) विशिष्टो विशिष्टोवेत्यस्य विषयबाधग्रहाभावेनेत्यादिः । पूर्ववन्मतभेदेन विकल्पः।

ननु तत्र यावत्पदाश्रवणात् कुतोज्ञानग्रहे यावत्त्वलाभः । नचैवकारादेव तल्लाभः । एवकारस्य यावत्पदसमानार्थकत्व विरहात् । न च विशेषणसंगतैवकारस्य अयोगव्यवच्छेदार्थकतया शङ्खः पाण्डर एवेत्यादौ यथा यावच्छङ्खे पाण्डरत्वबोधः, तथात्रापि यावद्ग्रहे प्रामाण्य ग्राहकत्वबोधनिर्वाह इति वाच्यम् । शङ्खः पाण्डर एवेत्यादौ पाण्डरत्वस्य शङ्खविशेषणतया पाण्डरत्वे शङ्खनिष्ठाभावाप्रतियोगित्ववत्प्रामाण्यविशेषणग्राह्यताबोधक पदसमभिव्याहृतैवकारात प्रकृते स्वाश्रयग्रहविष

[ दी ] यथाच तस्मादयमर्थो लभ्यते तथैवकारार्थविवेचने-प्रपंचितमस्माभिः । केचित्तु तत्र ग्राहकं यावत्त्वेनविशेषणीयं, एवकारश्च प्रामाण्यमात्रस्य तथात्वलाभायेत्याहुः । ...

---

[ग]यतायामेव प्रामाण्यत्वव्यापकता लाभसंभवेन विवक्षितस्य प्रामाण्यग्राहकत्वे स्वाश्रयग्रहत्वव्यापकत्वस्या लाभात् । सरोजेन नीलेन भूयत एवेत्यादौ क्रियासंगतैवकारेणात्यन्तायोगव्यवच्छेदस्यैव प्रत्यायनात्प्रकृतेप्येवकारस्य क्रियासंगततयाऽयोगव्यवच्छेदबोधकत्वासंभवा च्चेत्याशंकां परिहरति ( यथाचेति ) ( एवकारार्थविवेचने प्रपञ्चितमस्माभिरिति ) ज्ञानमर्थं गृह्णात्येवेतिवत् ज्ञानं रजतं गृह्णात्येवेत्यप्रयोगात् ग्रहणादिरूपार्थवाचक धातु समभिव्याहृतेनाप्येवकारेणायोगव्यवच्छेद एव प्रत्याय्यते । ज्ञानमर्थं गृह्णात्येवेत्यादौ कर्तृप्रत्ययस्थले कर्तरिज्ञाने यथा क्रियाकर्तृत्वायोगव्यवच्छेदः प्रतीयते, तथा ज्ञानेनार्थो गृह्यत एवेत्यादौ कर्मप्रत्ययस्थले विशेषणविशेष्यभाववैपरीत्येपि विशेषणीभूतेपि कर्तरि अविशेषणस्यापि क्रियाकर्तृत्वस्यायोगव्यवच्छेदः प्रतीयते, न तु विशेष्यकर्मणि विशेषणीभूततत्तत्कर्तृक क्रियाकर्मत्वायोग व्यवच्छेदः । ज्ञानग्राह्यत्वायोगस्याप्रसिद्धेः । विशेषणे विशेष्यनिष्ठाभावप्रतियोगित्वव्यवच्छेदस्यायोगव्यवच्छेदरूपत्वेऽप्रसिद्धिविरहेपि उक्तस्थले तद्बोधस्वीकारे ज्ञानग्राह्यत्वे रजतत्वव्यापकताया अबाधेन ज्ञानेन रजतं गृह्यत एवेत्यादि प्रयोगापत्तेर्दुर्वारत्वात् । एतज्ज्ञानग्राह्यत्वेर्थत्वव्यापकताविरहेण एतज्ज्ञानेनार्थो गृह्यतएवेत्यादि प्रयोगानुपपत्तेश्च । एवं च प्रकृतेपि प्रामाण्यग्राहकत्वे स्वाश्रयग्रहत्वव्यापकत्वं प्रत्येतव्यमिति विवक्षितार्थलाभः । तद्बोधो यथाकथञ्चिदुपपादनीय इति भावः ।

अत्रापि विशेष्यतावच्छेदकावच्छेदेन विशेषणायोगव्यवच्छेद एवकारेण प्रत्याय्यत इत्यभिमानिनां यावत्पदपूरणेन सिद्धसाधनं वारयतां - मिश्राणां मतमुपन्यस्यति ( केचित्त्विति ) ( यावत्त्वेन विशेषणीयमिति ) नन्वेवमेवकारवैयर्थ्यमत आह(एवकारश्चेति) प्रामाण्यमात्रस्य तथात्वलाभाय - पक्षतावच्छेदकप्रमापदप्रवृत्तिनिमित्तत्वावच्छेदेन साध्यवत्त्वलाभाय । तत्सामानाधिकरण्यमात्रेण साध्यसाधने योगिज्ञानादिमात्रवृत्तिप्रामाण्यविशेषे अंशतस्सिद्धसाधनापत्तिरिति भावः । ... ...

[ दी ] अन्येतु तत्प्रामाण्याग्राहकत्वेन यदुभयवादिसिद्धं - तद्भिन्नत्वमग्राहकान्तार्थः । यदा ययोर्विवादस्तदा तात्पर्यवशात्तदुभयपरमुभयपदम् , अतो नाननुगमोदोषाय- ... ...

---

[ ग ] अत्रच प्रमापदप्रवृत्तिनिमित्तत्वेन पक्षत्वे साध्यस्य स्वत्वघटितत्वेना ननुगमेनांशतोबाधः । उपदर्शितैवकारव्युत्पत्त्यैव ग्राहकस्य यावत्त्वलाभे यावत्पदपूरणं चानुचितमित्यस्वरसः । ... ...

ज्ञानं गुण इति शाब्दबोधादिना प्रामाण्याग्रहात् बाधस्य वारणाय, ओदनकामकर्तव्यताबोधविषयः पाक इत्यादि शाब्दबोधे पदानुपस्थितस्यौदनसाधनत्वादिज्ञानस्य योग्यताबलात् अन्वयितावच्छेदकतया भाने तादृशशाब्दबोधे तज्ज्ञानप्रामाण्याग्रहात् बाधस्यच वारणायावलंबितम्मतमन्येषामुपन्यस्यति ( अन्येत्विति )तत्प्रामाण्याग्राहकत्वेन तत्प्रामाण्यग्रहाजनकत्वेन । उभयवादिसिद्धं - नैय्यायिकमीमांसकोभयवादिसिद्धं । अग्राहकान्तार्थः, सामग्र्यां विशेषणमितिशेषः । व्यवसायानुव्यवसायसामग्र्योः प्रामाण्याग्राहकत्वेन नैय्यायिकसिद्धतया तत्संग्रहायोभयसिद्धत्वनिवेशः । गुरुमतसिद्धाया दर्शितकाम्यसाधनताज्ञानादिविषयकसामग्र्याः प्रामाण्याग्राहकतयागुरुनैय्यायिकोभयसिद्धतया न तत्संग्रहः । ... ... ... ...

नच शब्दाजन्यतादृशज्ञानोपस्थितेः नैय्यायिकमते शाब्दसामग्र्यप्रविष्टतया तद्घटितशाब्दसामग्री न नैय्यायिकसिद्धेति कथं तद्वारणमिति वाच्यम् । तादृशोपस्थितिघटितकारणस्तोमस्य शाब्दसामग्रीत्वेन नैय्यायिकासिद्धत्वेपि प्रामाण्याग्राहकत्वेन तत्सिद्धत्वात् । ...

नन्वत्र मीमांसकसामान्यं यः कश्चन वा निवेश्यते, आद्ये व्यवसायानुव्यवसायसामग्र्योर्गुरुमिश्रमतेसंग्रहानुपपत्तिः । प्रथमायाः प्रामाण्याग्राहकतया मिश्रभट्टानुमततया द्वितीयायाश्च तथात्वेन गुरुमतसम्मततया मीमांसकसिद्धत्वावच्छिन्नभेदाभावात् । द्वितीयेच सप्तमपदार्थरूपबाधाद्यभावघटित ज्ञानानुमित्यादिविशेषसामग्र्याः प्रामाण्याग्राहकत्वेन गुरुमतसिद्धभिन्नतया प्रामाण्यस्य तया अग्रहेण भट्टमते बाध इत्यत आह (यदाययोरिति) अतः-तात्पयभेदात् । अननु गमः - अनुगतरू

[दी] नैयायिकासिद्धयाज्ञातताघटित तत्प्रत्यक्षजनकसामग्र्या प्रामाण्याग्रहात् ज्ञानग्राहकेति । नच ज्ञानं द्रव्यमित्यन्यथाख्यातिसामग्र्या प्रामाण्याग्राहादुक्तयावत्सामग्री ग्राह्यत्वाभावरूप परतस्त्वसाधने सिद्धसाधनमिति वाच्यम् । ... ... ...

---

[ग] पेण मीमांसकानुपादानं । न दोषायेत्यन्वयः । विवादभेदेन साध्यभेद-स्वीकारे क्षतिविरहात् । शब्दैक्यमात्रस्यानपेक्षितत्वात् । सामग्रीपदार्थानुगमेनार्थभेदस्य दुष्परिहरत्वादिति भावः । ज्ञानग्राहकत्वरूपाविशेष्यांशसार्थक्योपपत्तये नैय्यायिकोपादानमिति दर्शयति (नैयायिकेति) ज्ञाततया भट्टमतसिद्धत्वेपि नैयायिकासिद्धतया उभयासिद्धत्वमाविष्कर्तुं नैय्यायिकासिद्धत्वाभिधानं । तादृशज्ञातताघटितत्वेन तत्प्रत्यक्षसामग्र्या उभयवाद्यसिद्धत्वलाभः (प्रामाण्याग्रहादिति) बाधवारणाये तिशेषः । भट्टेन समं विवादे प्रामाण्याग्राहकत्वेन तन्मतमात्रासिद्धत्वनिवेशे बाधाप्रसक्त्या ज्ञानग्राहकत्वोपादानमनर्थकमापद्येतेति भावः । (अन्यथाख्यातिसामग्र्येति)गुरुमतासिद्धत्वेन उभयमतसिद्धभिन्नयेतिशेषः। सिद्धसाधनं - अर्थान्तरं । नैय्यायिकसिद्धतादृशान्यथाख्यातिसामग्र्याः प्रामाण्याग्राहकतयैव तन्मते उक्तपरतस्त्वसत्त्वेन चरितार्थतया गुरुणासमंविवादे तस्याः प्रामाण्याग्राहकत्वासिद्धिरिति यावत् । ननु सिद्धसाधनं यथाश्रुतमेव । गुरुणा प्रामाण्याविषयकग्रहत्वेन तादृशपरतस्त्वाभ्युपगमासंभवात् । ... ... ... ...

अथैवमपि अनुव्यवसायसामग्र्या गुरुमतासिद्धया प्रामाण्याग्रहादर्थान्तरस्य वक्ष्यमाणविशेषणेनापि वारणासंभवादसंगतिः । यदिचानुव्यवसायस्य ज्ञानप्रत्यक्षत्वेन तत्सामग्र्याः तत्प्रत्यक्षसामग्रीत्वेन गुरुमतसिद्धत्वमस्त्येवेति मन्यते । तदा तादृशसामग्रीत्वेन तस्याः प्रामाण्यग्राहकत्वमपि गुरोरनुमतमिति प्रामाण्याग्राहकत्वेन तन्मतासिद्धत्वं दुरुपपादमेव । यदिच मनस्संयुक्तसमवायादिसमुदायत्वेन प्रामाण्याग्राहकत्वं तस्यां गुरुणा स्वीक्रियत इति न तादृशानुव्यवसायसामग्र्याः प्रामाण्याग्राहकत्वेन गुरुमतासिद्धत्वमित्युच्यते, तदा उक्तान्यथाख्यातिसामग्र्या दोषादिरूपाया ज्ञानसामग्रीत्वादिना गुरुमतासिद्धत्वेपि दोषादिघटित समुदायत्वादिना प्रामाण्याग्राहकत्वं तस्या गुरुमतासिद्धमेवेति

[ दी ] व्यधिकरणप्रकारकाजनकत्वेन सामग्रीविशेषणात् । पूर्वोक्तदिशात्रापि निष्कर्षोबोध्य इत्याहुः - इतिप्रथमाविप्रतिपत्तिः ॥

---

[ग]कथमियमाशंका। यद्यपि व्यवसायसामग्र्या अपि प्रामाण्यान्विषयकज्ञान जनकसामग्रीत्वादिना प्रामाण्याग्राहकत्वस्य गुर्वादिमतसिद्धतया तज्ज्ञान व्यक्त्युत्पादकसामग्रीत्वेन प्रामाण्याग्राहकत्वाभ्युपगमविषयभिन्नत्वमवश्यं विवक्षणीयमिति शंकासंगतिः, अन्यथाख्यातिजनकसामग्र्या दोषादि घटितायास्तेन रूपेण गुरुणानभ्युपगमेन तद्धारणासंभवात् , नैय्यायि कसिद्धधर्मिज्ञानतदनन्तरजातबोध्यस्मरणरूपज्ञानद्वयोत्तरान्यथाख्यातिस्थ ले तादृशज्ञानद्वयस्यैव गुरुणा भ्रमत्वस्वीकारात् , एकतरव्यक्तिसाम ग्रीत्वस्य न्यायमतसिद्धान्यथाख्यातिकारणकलापे असत्त्वात् तादृश कारणकलापस्य न्यायमते गुरोस्तादृशाभ्युपगमाविषयत्वाभावादित्युच्य ते। तदानुव्यवसायसामग्र्या अपि व्यवसायरूपतया स्वीकृतज्ञानग्रह व्यक्तिसामग्रीत्वेन प्रामाण्यग्राहकरूपाया एव गुरुणाङ्गीकारात् तद्ग्राह्यत यार्थान्तरेण व्यवसायसामग्र्याः प्रामाण्याग्राहकत्वासिद्धिर्दुर्वारैवेति ।

नैवं- अनुव्यवसायसामग्र्याः प्रामाण्याग्राहकत्वसिद्धावपि ज्ञानस्य स्वप्रकाशतानिराकर्तॄणां नैय्यायिकानां प्राथमिकज्ञानग्राह्यत्वरूपस्वत- स्त्वस्य प्रामाण्ये निराकरणेन उद्देश्यासिद्धेः। अन्यथा व्यवसायसाम ग्र्या न्यायमते ज्ञानग्राहकत्वरूपविशेषणानाक्रान्ततया तन्यायसाध्यावच्छेदक त्वेन तद्ग्राह्यतायाः कथञ्चिदपि निराकरणायोगेन समीहितासिद्धेर्व ज्रलेपायितत्वात् । ( व्यधिकरणप्रकारकाजनकत्वेनेति ) व्यधिकरणप्रका रकमिच्छादिकं प्रसिद्धमेव तन्मते । ... ... ...

नचैवं ज्ञानमिच्छामीति विशिष्टज्ञानसामग्र्या गुरुमतासिद्धतया तद्ग्राह्यतामादाय परतस्त्वसाधने सिद्धसाधनं दुर्वारमिति वाच्यं, त स्यापि दोषस्यैतन्मतेऽस्वरसबीजत्वात् ( अत्रापि निष्कर्षइति ) सामग्री निवेशस्यानतिप्रयोजनत्वात् प्रामाण्याविषयत्वेन मतद्वयसिद्धभिन्नव्यधि करणधर्मप्रकारकान्यसकलज्ञानग्रहविषयत्वरूप निष्कृष्टसाध्योपादानमि त्यर्थः। अत्रकल्पे ज्ञानजन्याज्ञाततेति प्रत्यक्षसामग्र्यग्राह्यतया भट्टमते बाधः। मतत्रये एकरूपेण साध्यत्वानिर्वाहः। ... ...

नच मतान्तरसामग्र्यननुगमानुयोगस्तुल्यः, फलोत्पत्तिप्रयोजकतावच्छेदकावच्छिन्नत्वेन तदनुगमात् । ... ...

नच प्रत्येकं मीमांसकेन विवादेन्यमतासंग्रहोन दोषाय, त्रिभिरेकदा विवादे मीमांसकत्रयस्यैवोपादाने साधारण्यसंभव इति वाच्यं । त्रिभिरेकदा विवादे मीमांसकत्वेन त्रयोपादाने गुर्वादिमते प्रामाण्यग्राहकतया मिश्रादिमतसिद्धव्यवसायादिसामग्र्यसंग्रहस्योक्तस्य दुर्वारत्वात् । मीमांसकत्रयत्वेन निवेशे सप्तमपदार्थरूपाभावघटितज्ञानग्राहकसामग्रीविशेषानां तत्तद्ग्रहजनकत्वेन गुरुमतसिद्धप्रामाण्याग्राहकताक्रत्वेन पूर्वोक्तदोषवारणेपि ज्ञानमतीन्द्रियमित्याद्यनुमितेरन्यथाख्यातिमनङ्गीकुर्वाणेन गुरुणानंगीकारात्तत्सामग्र्या मतत्रयसिद्धभिन्नतया भट्टमते व्यधिकरणप्रकाराजनिकया प्रामाण्याग्रहात्तन्मते बाध इत्यादिकमस्वरसबीजं बोध्यम् । इति प्रथमा विप्रतिपत्तिः । ...

इति गदाधरभट्टाचार्यविरचिते

प्रामाण्यवादे

## ॥ प्रथमाविप्रतिपत्तिः ॥

॥ अथ द्वितीयविप्रतिपत्तिः ॥

[ म ] तज्ज्ञानविषयकज्ञानाजन्यज्ञानग्राह्यं नवा । ...

---

[दी ] ( तज्ज्ञानविषयकेति ) तज्ज्ञानसमानाधिकरणत्वेनोत्तरज्ञाने विशेषणीये । ईश्वरज्ञानञ्च न तत्समानाधिकरणम् । अतोनाप्रसिद्धिं निषेधकोटेः । ... ... ...

---

[ग] मूले द्वितीयविप्रतिपत्तौ तज्ज्ञानपदं प्रकृतप्रामाण्याश्रय तत्तद्व्यक्तिपरं । ज्ञानसामान्यनिवेशे यथाश्रुते भट्टमतापरिग्रहप्रसंगात् । ज्ञानरूपविषयघटितप्रामाण्ये बाधापत्तेश्च । ग्राह्यपदेन तज्ज्ञानांशे ग्राह्यत्वं विवक्षणीयम् । अन्यथाज्ञानव्यक्तिभेदेनप्रामाण्यभेदानुपगमे घटत्वादिप्रकारकैतज्ज्ञानविषयकज्ञानाजन्य तादृशज्ञानान्तरपक्षक प्रामाण्यानुमितिविषयतयासिद्धसाधनापत्तेः । तत्र तज्ज्ञानविषयकज्ञानाजन्यमीश्वरज्ञानं तद्विषयत्वस्य केवलान्वयितया निषेधसाधने साध्याप्रसिद्धिः । विधिसाधनेच सिद्धसाधनम् । चरमज्ञाने तज्ज्ञानसमानाधिकरणत्वनिवेशेपि तज्ज्ञानसमानाधिकरणज्ञानमात्रस्यैव तज्ज्ञानविषयकेश्वरज्ञानजन्यतया तज्ज्ञानविषयकज्ञानाजन्य तत्समानाधिकरण ज्ञानाप्रसिद्ध्या तदभावाप्रसिद्धितादवस्थ्यं अतस्तज्ज्ञानविषयकज्ञाने तदजन्यज्ञानेच तज्ज्ञानसामानाधिकरण्यं विशेषणं पूरयति ( तज्ज्ञानसमानाधिकरणेति ) व्यापके नञर्थविशेषणत्वं दोषइति विधौ द्वितीयसामानाधिकरण्यविशेषणस्या खण्डाभावांतरावटकत्वेपि नक्षतिः, ( नतत्समानाधिकरणमिति ) तज्ज्ञानपदेन यस्मिन् ज्ञाने प्रामाण्यं ग्राह्यं तादृशस्य अस्मदादिज्ञानस्योपादेयत्वादिति भावः ( अतइति ) तज्ज्ञानविषयकज्ञानाजन्यज्ञानत्वेन । तज्ज्ञानविषयकज्ञानत्वेनच ईश्वरज्ञानस्यानिवेशादिति शेषः । शेषज्ञाने समानाधिकरणत्वनिवेशे पूर्वज्ञाने तद्विशेषणासत्त्वेपि विधौ सिद्धसाधनाप्रसक्तेः उभयत्र तद्विशेषणव्यावर्त्यतया निषेधाप्रसिद्धिरेवाभिहितेति । ...

यद्यपि तज्ज्ञानांशे ग्राह्यत्वपर्यन्तस्य विवक्षणीयतया तज्ज्ञानावृत्तिपदार्थएव निषेधप्रसिद्धिः संभवति, ईश्वरज्ञानस्य तज्ज्ञानांशे तदवृ

[ दी ] तज्ज्ञानविषयकज्ञानप्रागभावाप्रयुक्तप्रागभावप्रतियोग्यर्थंक मजन्यान्तम् । कारणाभावप्रयुक्तश्च कार्याभावइत्यपिकेचित् । त च्चिन्त्यम् । ... ... ...

---

[ग] त्तिप्रकारकत्वे भ्रमत्वापत्तेः । तथापि तादृशज्ञानप्रकारत्वमात्रं साध्य मिति विवक्षान्तरानुसरणेन अप्रसिद्धिरभिहिता । तज्ज्ञानांशे ग्राह्यत्वस्यसा ध्यत्वे निषेधसाधने बाधोबोध्यः । मिश्रमतमाह ( तज्ज्ञानेति ) अन्यप दस्य तद्व्यतिरेकप्रयुक्त व्यतिरेकप्रतियोग्यर्थकतया अजन्यपदेन यद्य पि तत्प्रागभावप्रयुक्तप्रागभावाप्रतियोगित्वं बोध्यते, तथापि तावता ईश्व रज्ञानव्यावृत्त्यसंभवान्नजर्थोन्तराप्रवेशितः । एवंच परमेश्वरज्ञानस्य प्रा गभावप्रतियोगिताविरहेण तज्ज्ञानविषयकज्ञानप्रागभावाप्रयुक्तप्रागभाव प्रतियोगित्वविरहान्नचरमज्ञानपदेन तदुपादानसंभवो नवा मध्यमज्ञा नपदेनेति पूर्वोक्तदोषोद्धारः । ईश्वरज्ञानस्य प्रामाण्यानुमितेश्चेतराभावा प्रयुक्तात्यन्तान्योन्याभावप्रतियोगित्वा दभावसामान्यप्रतियोगित्वमुपेक्ष्य प्रागभावप्रतियोगित्वं निवेशितम् । प्रथमं प्राक्पदं संपातायातम् , वि षयतासंबन्धेन जन्यमात्रहेतोरीश्वरज्ञानस्य तादृशसंबन्धावच्छिन्नप्रति-योगिताकाभावाप्रसिद्ध्या अन्यसंबन्धावच्छिन्नाभावस्य प्रसिद्धा वपि कार्याभावाप्रयोजकतया तज्ज्ञानविषयकज्ञानस्याभावसामान्यनिवे शेपि क्षतिविरहात् । प्रामाण्याश्रयज्ञानविषयकपरामर्शादिजन्यप्रामाण्या नुमित्यादिप्रागभावः परामर्शादिप्रागभावप्रयुक्ततयैव व्यावर्तयितुंश क्यते नतु तदीयाभावान्तरप्रयुक्तत्वेन, ध्वंसप्रागभावयोरत्यन्ताभाव विरोधितया तदधिकरणे परामर्शादेरत्यन्ताभावासत्त्वात् । कारणध्वंस स्य कार्याभावाप्रयोजकत्वादिति सूचनार्थंवा तत् । तत्प्रयुक्तत्वंच तद धीनसत्ताकत्वं । अधीनत्वंच स्वरूपसंबन्धविशेषः । कारणस्य प्रागभा वरूपव्यतिरेकेस्वप्रागभावविरोधिकार्यं नोत्पद्यतइतिकार्यप्रागभावसत्त्वं कारणप्रागभावाधीनमिति तस्यतत्प्रयुक्तत्वमित्याह ( कारणेति )

केचित्तु तदुत्तरसत्त्वसहितं तद्व्यतिरेकोत्तरं नियमतोऽसत्त्वं तत्प्र युक्तत्वम् । प्रामाण्यानुमितिप्रागभावश्च तज्जनकपरामर्शप्रागभावव्यक्ते रुत्तरस्मिन्परामर्शोत्पत्तिक्षणेऽस्ति , तादृशप्रागभावव्यतिरेकरूपस्य परा-

[ग] मर्शस्य चोत्तरस्मिन्परामर्शे द्वितीयक्षणादौ नियमतो नतिष्ठति । परामर्शाद्द्वितीयक्षणे तृतीयक्षणेवानुमितेरुत्पत्तेरिति तत्प्रयुक्त एव । प्रथमदळप्रवेशात् संग्राह्यस्यानुव्यवसायादिप्रागभावस्य तज्ज्ञानविषयक-स्वात्मकज्ञान तादृशस्वोत्तरज्ञानान्तरप्रागभावनाशोत्तरं नियमेनासत्त्वे-पि न तादृशप्रागभावप्रयुक्तत्वं । चरमदळप्रवेशात्तदनुव्यवसायादिपूर्वं किंचित्कालजातव्यवसायविषयकानुमित्यादिप्रागभावोत्तरकाले सतोप्यनुव्यवसायादिप्रागभावस्य न तादृशानुमित्यादिप्रागभावप्रयुक्तत्वं । तादृशानुमित्यादिप्रागभावनाशोत्तरमपि तादृशानुव्यवसायादिप्रागभावसत्त्वेन तद्व्यतिरेकस्य तादृशातीतानुमित्यादिप्रागभावव्यतिरेकोत्तरकाले नियतासत्त्वाभावात् । यादृशानुव्यवसायादेरव्यवहितपूर्वकाले तद्गतःपुंसोन्यस्यवा कस्यचिद्व्यवसायविषयकमनुमित्यादिरूपं योगजप्रत्यक्षरूपंवा ज्ञानं जातं तत्प्रागभावस्य तत्प्रागभावप्रयुक्तत्वेपि नक्षतिः । सर्वस्यैवानुव्यवसायस्य अव्यवहितपूर्वं व्यवसायविषयकतादृशज्ञानोत्पत्तौ-प्रमानाभावेन तादृशानुव्यवसायमादायैव प्रामाण्ये साध्यसत्त्वस्य परैरुपपादनीयत्वात् । अत्रचाभावस्य गुरुमतेधिकरणरूपतया ज्ञानप्रागभावस्य चात्मरूपस्य व्यतिरेककालाप्रसिद्ध्या गुरुमते ज्ञानप्रागभावप्रयुक्तत्वानसिद्धिश्चिन्ताबीजमेवेत्याहुः । ... ...

स्वरूपसंबन्धरूपाधीनत्वघटितप्रयुक्तत्वनिवेशेपि व्यवसायजनकात्ममनोयोगप्रागभावस्य आत्मनिष्ठस्य तन्निष्ठतद्विषयकज्ञानप्रागभावात्मकतदात्मस्वरूपतया तत्प्रयुक्तगुरुमतसंग्राह्यव्यवसायप्रागभावस्य तज्ज्ञानविषयकज्ञानप्रागभावाप्रयुक्तत्वं तन्मते दुर्घटमिति चिन्ताबीजम् ।

तज्ज्ञानविषयकज्ञानप्रागभावत्वेन प्रयोजकताविवक्षणे स्वरूपसंबन्धरूपाधीनत्वस्याप्रामाणिकता तद्बीजम् । मतान्तरे तज्ज्ञानविषयकतत्तज्ज्ञानव्यक्तिप्रागभावत्व विशिष्टाधिकरणकालोत्तरं यद्धर्मविशिष्टस्य सत्त्वं तादृशप्रागभावत्वविशिष्टानधिकरणकालोत्तरंच नियमेनासत्त्वं-तद्धर्मभिन्नप्रागभावत्वरूपानुयोगितानिरूपकत्वस्य अजन्यान्तार्थत्वे आत्मस्वरूपप्रागभावानधिकरणकालाप्रसिद्धेरुद्धारसंभवेपि पूर्वोत्पन्नासि-द्ध्यादिवशेन यत्र परामर्शाद्तृतीयक्षणएव प्रामाण्यानुमित्यादिकमुत्पन्नं तत्परामर्शादिप्रागभावत्वविशिष्टानधिकरणतत्परामर्शाव्युत्पादक्षणोत्तरमपि

[दी ] ननु यथार्थघटेच्छासंस्कारतत्त्वादिहेतुकया पक्षधर्मताबलादुष्टप्रमात्वविशिष्टापूर्वव्यक्तिग्राहिण्या अनुमित्या ग्राह्यत्वात्सिद्धसाधनम् । ... ... ...

---

[ ग ] तदनुमित्यादिप्रागभावत्वविशिष्टसत्त्वेन तादृशानुमितिनिरूपितप्रागभावत्वस्य निरुक्तधर्मभिन्नत्वेन तादृशानुमितिग्राह्यतया सिद्धसाधनमित्यादिकं चिन्तावीजमवसेयं ( यथार्थघटेच्छेति ) याथार्थ्यं घटे घटत्वप्रकारकत्वं, तच्च संस्कारादावप्यन्वेति । तद्धेतुका घटत्वप्रकारकप्रमानुमितिश्च समवायेन तादृशप्रमासाध्यका आत्मपक्षका, जन्यतासंबन्धेन तत्साध्यका तज्जन्यत्वसाध्यकावातादृशेच्छादिपक्षिकाच, आत्मनि पक्षे-समवायेन हेतुता । अन्त्येच तादात्म्येनेति बोध्यम् । घटप्रमात्वं घटे घटत्वप्रकारकत्वं । तद्विशिष्टा या अपूर्वा - तदनुमितिजनकपरामर्शाविषयोव्यक्तिः तद्ग्राहिण्या, मीमांसकमते सामान्यस्याप्रत्यासत्तितया विशेषणज्ञानस्य विशिष्टबुद्धावहेतुत्वेन प्रमात्वेन व्यक्त्यन्तरविषयकपरामर्शादपि अज्ञातव्यक्तिप्रकारकानुमितेस्संभवादितिभावः । सिद्धसाधनं - अर्थान्तरं । मीमांसकमते तादृशानुमितिग्राह्यतयैव विधिप्रसिद्धेश्चरितार्थतयोद्देश्यप्रत्यक्षादिविशेषग्राह्यत्वासिद्धिरिति यावत् । न तु यथाश्रुतं सिद्धसाधनं । विशेषणधीहेतुतावादिभिर्नैय्यायिकैः पूर्वागृहीतव्यक्तिप्रकारकानुमित्यनुपगमेन तन्मतेनुमितिमादायोक्तसाध्यसत्त्वानिर्वाहात् । ... ... ...

अथ ज्ञानपदं यदि तज्ज्ञानव्यक्तिपरमुच्यते, तदाऽपूर्वव्यक्तिविषयकज्ञानाजन्ययोक्तानुमित्या तद्व्यक्तौ ग्राह्यतामादायार्थान्तरप्रसक्तिः, तज्ज्ञानपदस्य घटत्ववतीत्यादिप्रामाण्याश्रयपरत्वे घटत्वादिप्रकारकत्वाश्रयपरत्वेवा नायं दोषः, उक्तस्थले परामर्शेन प्रमात्वपुरस्कारेण तदाश्रयव्यक्त्यन्तरावगाहनात्तादृशानुमितेस्तन्मतेपि तदाश्रयविषयकज्ञानाजन्यत्वानिर्वाहात् । ... ... ...

नचैवमपि यत्र घटत्वादिमात्रप्रकारकमेव ज्ञानं घटत्ववतीत्यादि प्रामाण्यप्रकारेण परामर्शेनावगाढं, तत्रत्यानुमितिर्नैवमपि वारयितुं शक्यत इति मिश्रभट्टमते तद्ग्राह्यतामादायैव पर्यवसानं कथं नस्यादिति

[ दी ] अथ तज्ज्ञानपदेन तस्य - प्रामाण्यस्य तद्घटकस्य तत्प्रका रकत्वादेर्वा आश्रयमात्रस्याभिधानाददोषः, इतिचेन्न — भट्टमताप रिग्रहप्रसंगात् । ... ... ...

---

[ ग ] वाच्यम् । व्यधिकरणप्रकारकाजन्यत्वविशेषणेन तादृशानुमितेरपि वारणसंभवात् । एवं ज्ञानत्वेन पटादिज्ञानविषयकपरामर्शाद्यत्र घटत्ववति घटत्वप्रकारकत्वे लाघवमिति लाघवज्ञाना त्तेन रूपेण घटज्ञानानुमितिः सापि कथञ्चिद्वारणीयेत्याशंकते ( अथेति ) लाघवमनुसृत्याह ( तद्घट- केति ) आदिना तद्वद्विशेष्यकत्वस्य विकल्पेन परिग्रहः । ज्ञानत्वनिवेशे पि प्रयोजनविरहात्तन्निवेशव्यवच्छेदाय मात्रपदम् । सामान्यपरंवा । तेन यत्किञ्चित्तदाश्रयविषयकज्ञानजन्यतया तादृशज्ञानजन्यत्वसामान्याभाव वत्त्वविरहात् उक्तानुमितिव्यावर्तनंस्पष्टीकृतं । उत्तरज्ञाने चैत्रादिनिष्ठ त्वेन विशेष्ये, नतुप्रामाण्याश्रयसमानाधिकरणत्वेन, ईश्वरज्ञानस्यापि प्रा माण्याश्रयतया तस्यापिच तत्समानाधिकरणतया तद्व्यावृत्त्यनुपपत्तेः । ( भट्टमतापरिग्रहेति )तन्मते प्रमात्वमपुरस्कृत्य ज्ञानत्वेन, व्यापकत्वज्ञानात् प्रमात्वेनानुमितेर्मिश्रमतखण्डनावसरे निराकृतत्वात् प्रमात्वावच्छिन्न- व्यापकताज्ञानस्यच प्रकृतप्रामाण्याश्रयविषयकत्वनियमाद्भट्टमते संग्राह्या या ज्ञाततालिंगकानुमितेरुक्तरूपानाक्रांतत्वादितिभावः ॥ ...

अथैतद्भवीयप्राथमिकघटादिज्ञानात्पूर्वं तदीय्यप्रामाण्यस्यानुप - स्थित्या तेन रूपेण व्यापकताज्ञानासंभवात् ज्ञाततालिंगकानुमित्या त- दीय्यप्रामाण्यं न गृहीतुं शक्यत इति पटत्वादिकमादाय या यद्धर्मवन्निष्ठा यत्प्रकारिका ज्ञातता सा तद्वति तत्प्रकारकज्ञानजन्येत्यादि सामान्य व्याप्तिग्रहात् पक्षधर्मताबलेन घटत्वादिघटितप्रामाण्यविशिष्टज्ञानानुमितिः भट्टैरंगीकार्या, साच घटत्वादिप्रकारकज्ञानज्ञानमंतरेणापि भवंती न घ टत्वादिप्रकारकत्वघटितप्रामाण्याश्रयविषयकज्ञानजन्येति न भट्टमतापरि ग्रहः । ... ... ... ...

नच यत्तदर्थाननुगमात् घटत्ववतीत्यादि प्रामाण्यप्रकारकानुमि- त्यौपयिक घटत्वादीतरतद्धर्मघटित प्रामाण्यावच्छिन्ननिरूपितव्याप्ती- ना मानंत्या दसर्वज्ञदुर्ज्ञेयतया प्रामाण्यप्रकारकानुमितिर्न संभवन्ति, य

[ दी ] यत्तद्भ्यां सामान्यतो व्याप्त्या प्रामाण्यविशेषलाभ स्तु प्रकृतेपि दुर्वारः । यत्र एतादृशानुमानावतारस्तस्य ¦ पक्षबहिर्भावेतु सर्वज्ञाएव तदवताराभाजनंप्रामाण्यं प्रष्टव्याः । ...

---

[ग] र्तिकञ्चिदेकधर्मघटितसाध्यसाधनव्याप्तिज्ञानादेवप्रकृतधर्मघटितहेतौ पक्षधर्मताज्ञाना तद्घटितसाध्यसिद्ध्युपगमे प्रकृतधर्मघटितहेतौ तद्घटितसाध्यस्य व्यभिचारज्ञानदशायामपि यत्तत्पदार्थांतरघटित किंचित्साध्यसाधनव्याप्तिज्ञाना त्प्रकृतानुमित्यापत्तिः । यद्यदर्थघटितसाध्यसाधनोभयं यदोपस्थितं तदानींतनानुमितौ तत्साध्यसाधनोभयव्याप्तीनां ज्ञानस्य हेतुतास्वीकारे तदानीमप्रसिद्धसाध्यस्यैव तदीयव्याप्तिज्ञाननिरपेक्षानुमितिस्वीकारेपिच नोक्तातिप्रसंगवारणसंभवः । तत्साध्याप्रसिद्धिस्थलीयाः नुमितिसामग्र्याः तत्साध्यस्य तद्धेतौ व्यभिचारज्ञानदशायामपि सत्त्वात् । तत्कालस्यापि तत्र हेतुतया अतिप्रसंगवारणे व्याप्तिज्ञानहेतुतावैयर्थ्या दिति वाच्यम् । तत्तदर्थघटित साध्यसाधनोभयव्याप्तिज्ञानविरहविशिष्ट तत्तदर्थघटितसाध्यसाधनोभयोपस्थितेः प्रतिबन्धकतां यत्किंचिदेकार्थघटितसाध्यसाधनोभयव्याप्तिज्ञानस्यच हेतुतांस्वीकृत्यातिप्रसंगस्यवारणीयत्वात् । तत्तदर्थघटितहेतौ पक्षधर्मताज्ञानमेव पक्षे तत्तदर्थघटितसाध्यसिद्धौ नियामकमास्थेयं । सामान्यमुखीयव्याप्तिर्यत्रानुमितिप्रयोजिका तत्र व्याप्तिविशिष्टपक्षधर्मताज्ञानानपेक्षायामपि नक्षतिः, विलक्षणाया स्सामग्र्या स्तत्रोपादेयत्वादित्यभिप्रायिकामाशंकां निराकरोति ( यत्तद्भ्यामिति ) प्रकृतेपि-इच्छादिलिंगकप्रमानुमितिस्थलेपि । या यद्धर्मवद्विशेष्यिका यद्धर्मप्रकारिकेच्छा सा तद्वद्विशेष्यकतत्प्रकारकज्ञानसाध्येत्याद्याकारक पटादिज्ञानविषयक व्याप्तिज्ञानात् पक्षधर्मताबलेन घटादिप्रमात्वविशिष्टलाभो दुर्वार एवेत्यर्थः । तथाच प्रकृतप्रामाण्याश्रयविषयकज्ञानाजन्यत्वनिवेशेपि तादृशानुमितिग्राह्यतया सिद्धसाधनं दुर्वारमिति भावः । ननु सर्वत्रैतादृशानुमानानियमेन यादृशप्रामाण्यं स्वाश्रयविषयकज्ञानाजन्यानुमितेर्नविषयः तदेव पक्षीकर्तव्यमिति नासिद्धसाधनावकाश इत्यत आह (सर्वज्ञाएवेति) तदवताराभाजनं-स्वाश्रयविषकज्ञानाजन्यसामान्यव्याप्त्यधीनानुमित्यविषयं ग्राह्यं(प्रामाण्यंप्रष्टव्याइति)

[दी] अत्राहुः—तादृशज्ञानजन्यत्वेन यन्नैयायिकसिद्धं तद्भिन्नत्वमजन्यान्तेन विवक्षितम् । नैयायिकनये ज्ञाततायाश्शशविषाणकल्पत्वात्तत्पक्षकादिकमपि ज्ञानमसत्कल्पमेव ।

---

[ ग ] तथाच कालस्यानन्त्यविकतया आत्मनां चानंत्येन सर्वत्रैव प्रामाण्ये किञ्चित्पुरुषीय किञ्चित्कालीन तादृशानुमितिविषयत्वसंभावनया विशिष्य पक्षस्यैव दुष्प्रतिपत्तिकतया विचारासंभव इति भावः ( तादृशज्ञानजन्यत्वेनेति ) प्रकृतप्रामाण्याश्रयविपयक चैत्रादिज्ञानजन्यत्वेनेत्यर्थः । ( तद्भिन्नमजन्यान्तेनाविवक्षितमिति ) तथाच विशिष्टबुद्धौ विशेषणज्ञानहेतुतावादिनां नैय्यायिकाना मज्ञातप्रमाया अनुमितावपि अप्रकारतया उक्तप्रमासाध्यकानुमिति स्तत्तत्प्रमारूपविशेषणज्ञानजन्यतया नैय्यायिकसिद्धैवेति न तद्भाद्यतया कथितसिद्धसाधनावकाश इति भावः । भट्टोद्देश्यप्रामाण्यग्राहकताक सिद्धविपयानुमिते रुक्तरूपेण नैय्यायिकसिद्धं यत्तदन्यत्वमुपपादयति ( नैय्यायिकनयइति ) असत्कल्पमिति ) ... ... ... ...

यद्यपि व्यवसायानन्तरं द्वित्रतुरादिक्षणाभ्यन्तरजातं ज्ञानं भट्टैर्ज्ञाततालिंगकानुमितित्वेन स्वीकृतमपि साक्षात्कारित्वेनैव नैय्यायिकसिद्धं, तथाप्यात्मभिन्नाविशेष्यकज्ञानग्रहएव तथा, नतु ज्ञातताविशेष्यकोज्ञानजन्यत्वग्रहो विषयविशेष्यको ज्ञानाविषयत्वग्रहोवा, तादृशोनुमितिग्राह्यत्वमादायैव भट्टमते पक्षे साध्यवत्त्वमुपपादनीयम् । ...

नच ज्ञातताविशेष्यकानुमितित्वेन भट्टाभ्युपगतस्यापि प्राथमिकज्ञानग्रहस्य नैय्यायिकैरात्मविशेष्यकज्ञानग्रहत्वेन स्वीकारात्तस्य नैय्यायिकासिद्धत्वमिति वाच्यम् । एवमपि व्यवसायरूपविशेषणज्ञानजन्यत्वेन तस्य नैय्यायिकासिद्धत्वा त्प्राथमिकज्ञानग्रहस्य नैय्यायिकैर्ज्ञानविशेष्यकत्वेनैव स्वीकरणीयत्वात । पूर्वं विशेषणज्ञानाभावेन तन्मते तस्य विशेषणत्वासंभवा त्तादृशज्ञानस्यैव भट्टैरनुमितित्वस्य ज्ञातताज्ञानोत्तरत्वस्यच स्वीकारा त्तद्भाद्यतामादाय भट्टानां साध्यवत्त्वोपपत्तेः । एवंचासत्कल्पमित्यस्य तज्ज्ञानविषयकज्ञानजन्यत्वाभ्युपगमबीजानुमितित्वाभ्युपगमाविषयएवेत्यर्थः । ज्ञानविशेषणकानुव्यवसायस्य-

[ दी ] व्यवसायानन्तरोत्पन्नमेवच ज्ञानं मिश्राणां प्रामाण्यग्राहकं । ज्ञानत्वादिविशिष्टविषयकं वक्तव्यमित्यपिकश्चित् । ...

---

[ ग] व्यवसायविषयकज्ञानजन्यतया नैय्यायिकसिद्धतया तमादाय न मिश्रमते साध्यवत्वनिर्वाह इत्याशंकां परिहरति ( व्यवसायानन्तरोत्पन्नमेवचेति ) ( मिश्राणांप्रामाण्यग्राहकमिति ) तथाच विशेषणज्ञानहेतुत्वमनंगीकुर्वाणेन मुरारिमिश्रेण प्राथमिकज्ञानज्ञानं तद्विशेषणकत्वेन स्वीकृतमपि नैय्यायिकैर्ज्ञानविशेष्यकतयैव स्वीक्रियतेऽतस्तज्ज्ञानविषयकज्ञानजन्यत्वेन नैय्यायिकासिद्ध तद्ग्राह्यत्वमादाय मिश्राणां पक्षे साध्यवत्वोपपत्तिरिति भावः । नैय्यायिकैर्ज्ञानप्रकारकतया स्वीकृतमप्यनुव्यवसायं प्रकारान्तरेण संगृह्णतः कस्यचिन्मतमाह ( ज्ञानत्वादीति ) एतच्च स्वरूपकथनम् । किंचिद्विशिष्टविषयकत्वमेव विवक्षितं । वक्तव्यं - ज्ञानविषयकेत्यनेन विवक्षणीयम् । तथाच जानामीत्याकारकोऽनुव्यवसायो व्यवसायरूपविशेषणज्ञानजन्यत्वेन न्यायमतासिद्धोऽपि न ज्ञानत्वादिविशिष्टविषयकज्ञानजन्यत्वेन तन्मतासिद्धः, निर्विकल्पकरूप विशेषणज्ञानविषयकज्ञानादेव विशेष्येविशेषणमित्यादिरीत्या तदुत्पादस्य तैरुपगमादिति तत्संग्रहः । ... ...

कश्चिदित्यस्वरससूचनं, तद्बीजन्तु प्राथमिकज्ञानग्रहस्यापि न्यायमते उपस्थितविषयविशिष्टज्ञानविषयकत्वे बाधकाभावात्तदंशे निर्विकल्पकत्वासंभवः, ज्ञानत्वविशिष्टविषयकत्वविवक्षणे प्राथमिकज्ञानग्रहस्य ज्ञानत्वांशे निर्विकल्पकतया जानामीत्याकारकतज्जन्यानुव्यवसायसंग्रहेऽपि स्वतस्त्वविवादविषय याथार्थ्यमात्रस्य पक्षत्वे तस्य ज्ञानत्वविशिष्टविषयकज्ञानजन्यया घटत्ववतिघटत्वप्रकारकवानयमित्येतादृशानुमित्यादिबुद्ध्या ग्रहात्सिद्धसाधनं दुर्वारं, एवमुक्तरीत्यैव निर्वाहे धिकविवक्षाप्यकिञ्चित्करीत्यादिकं । ... ...

तज्ज्ञानपदस्य तत्तद्व्यक्तिपरत्वे सामान्यलक्षणाजन्यप्रमात्वविशिष्टापूर्वव्यक्तिविषयकज्ञानग्राह्यतया सिद्धसाधनस्य दुर्वारतया तस्य

[ दी ] तज्ज्ञानार्थस्तु पूर्वोक्तो ग्राह्यः । तेन प्रमात्वरूपसामान्यलक्षणयाऽपूर्वव्यक्तौ प्रमात्वग्रहेपि न क्षतिः । तादृशज्ञानग्राह्यत्वंतु तस्मिन् ज्ञाने तादृशज्ञानग्राह्यत्वं । ... ...

---

[ ग ] प्रकृतप्रामाण्याश्रयपरत्वं तद्घटकघटत्वादिप्रकारकत्वाद्याश्रयपरत्वं वेत्याह ( तज्ज्ञानार्थस्त्विति ) नक्षतिः – नसिद्धसाधनम् । ...

अथैवमपि तज्ज्ञानविषयकज्ञानाजन्ये प्रथमानुव्यवसाये प्रामाण्यघटकप्रकारिताद्युपनायकज्ञानवशात्प्रामाण्यस्य भानसंभवा त्तद्ग्राह्यतामादाय सिद्धसाधनं दुर्वारमेव । ... ...

नच घटत्वादिप्रकारितायाः प्राथमिकज्ञानं लौकिकप्रत्यक्षरूपम्, तदाश्रयघटितसन्निकर्षाधीनमिति नियमतस्तदाश्रयविषयकमेव, तथा च प्रयोज्यत्वरूपजन्यत्वविवक्षया तदाश्रयविषयकज्ञानप्रयोज्य तदुपनीतभानमादाय न सिद्धसाधनावसर इति वाच्यम् । घटत्वादिप्रकारितायास्तदाश्रयाविषयकस्यापि प्रकारितात्वादिसामान्यलक्षणया प्राथमिकप्रत्यक्षस्य संभवात्तन्मूलकोपनीतभानग्राह्यतया सिद्धसाधनस्य दुर्वारत्वात् । ... ... ...

नच ज्ञाननिष्ठं प्रकारित्वादिकंहि ज्ञानस्वरूपमेव, तथाच तज्ज्ञानमेव तदाश्रयज्ञानमिति न तज्जन्यतदुपनीतभानग्राह्यतया सिद्धसाधनमिति वाच्यम् । एवंसति यज्ज्ञानांशे ग्राह्यत्वं यदीयप्रामाण्ये ग्राह्यत्वं तज्ज्ञानव्यक्ते स्तज्ज्ञानार्थत्वेपि नोक्तसामान्यलक्षणाजन्यज्ञानग्राह्यत्वेन सिद्धसाधनमिति तज्ज्ञानार्थस्त्वित्यादि विरोधादिति चेन्न । यत्र पूर्वं यद्गृहीतं तत्रैव तस्योपनीतभानमिति प्राचीननियमानुसारेणेयं विप्रतिपत्तिरिति दर्शितोपनीतभानमादाय सिद्धसाधनस्यानवकाशात्, तादृशनियमानभ्युपगमेतु तज्ज्ञानविषयकज्ञानस्थले प्रकृतप्रामाण्यघटकप्रकारितविषयकज्ञानं निवेश्य सामान्यलक्षणाजन्योक्तप्रत्यक्षमुपनीतभानात्मकप्रत्यक्षञ्चादाय सिद्धसाधनस्य वारणीयत्वात् । ग्राह्यत्वस्य विषयतामात्रात्मकत्वे दोषस्य वक्तव्यतया तन्निर्वक्ति ( तादृशेति ) तस्मिन्ज्ञाने तादृशज्ञानग्राह्यत्वं – तज्ज्ञानविशेष्यतानिरूपिततज्ज्ञानविषयकज्ञानाजन्यज्ञानीयप्रकारत्वम् । ज्ञानाजन्येत्यस्योक्तोर्थः । प्रामाण्यस्य

[ दी ] तादृशज्ञानप्रकारत्वं वा । तेन घटभिन्नत्वादिना प्रामाण्यग्रहेऽपि न दोषः, नवा निषेधस्याप्रसिद्धिः । तस्मिन्नेव ज्ञाने सुलभत्वात् ।

---

[ ग ] तत्तज्ज्ञाननिष्ठप्रकारिताविशेषरूपस्य तत्तज्ज्ञानव्यक्तिस्वरूपतामते प्रामाण्याश्रयतत्तज्ज्ञानं तत्तद्व्यक्तित्वेनैवोपादेयं, प्रमात्वसामान्यलक्षणाजन्यज्ञानमादाय सिद्धसाधनानवकाशादित्याशयेन तस्मिन् ज्ञान इत्युक्तम् । तदंशमनुपादाय तादृशज्ञानप्रकारतामात्रनिवेशे घटत्ववति घटत्वप्रकारकत्वत्वादिना पक्षतायां तज्ज्ञानव्यक्तिभिन्नघटत्वादिप्रकारकज्ञाननिष्ठतादृशज्ञानप्रामाण्ये तज्ज्ञानविषयकज्ञानाजन्यज्ञानान्तरपक्षकानुमित्यादिग्राह्यतया सिद्धसाधनप्रसङ्गा त्प्राचीनैः पक्षतावच्छेदकैक्येऽपि अंशतस्सिद्धसाधनस्य दोषतोपगमात् , तददोषत्वेपि अंशतो बाधेन नैय्यायिकाना मुद्देश्याया घटत्ववतिघटत्वप्रकारकत्वत्वावच्छेदेन स्वतस्त्वाभावसिद्धेर निर्वाहात । ... ... ...

यदिच प्रकारिता ज्ञानस्वरूपातिरिक्ता, तदा प्रमात्वसामान्यलक्षणाजन्यतद्विशिष्टापूर्वव्यक्तिप्रत्यक्षग्राह्यतया सिद्धसाधनवारणाय तज्ज्ञानपदस्य प्रमात्वाद्याश्रयपरत्वेनोक्तदोषावकाश इत्याशयेन तस्मिन्नेव ज्ञान इति परित्यजति ( तादृशेति ) नदोषः -- नसिद्धसाधनम् । घटभिन्नत्वादिसामान्यजन्यप्रामाण्यप्रत्यक्षे तस्य विषयत्वेपि प्रकारत्वाभावादिति भावः । घटत्वप्रकारकत्वत्वादिसामान्यज्ञानं घटत्वप्रकारकत्वाद्याश्रयज्ञानमन्तरेण न संभवति, प्रकारितात्वादिरखण्डधर्मश्च सिद्धान्तविरुद्धइतितादृशसामान्योपेक्षा। प्रामाण्यत्वरूपपक्षतावच्छेदकावच्छेदेन तादृशज्ञानविषयत्वसाधने नेदं सिद्धसाधनं, घटभिन्नत्वादिप्रकारकप्रामाण्यग्रहविषयतायाः प्रामाण्यत्वानवच्छिन्नत्वा दत उक्तविवक्षायाः प्रयोजनान्तरमाह ( नवेति) निषेधस्य-तादृशज्ञानग्राह्यत्वाभावरूपनैयायिकसाध्यस्य। (अप्रसिद्धिरिति) वस्तुमात्रस्यैव सामान्यलक्षणादिजन्यप्रमाविषयकज्ञानाजन्यज्ञानविषयत्वेन तादृशज्ञानविषयत्वस्य केवलान्वयित्वादितिभावः। प्रकारतापर्यन्तनिवेशे निषेधाप्रसिद्धिमुद्धरति ( तस्मिन्नेवेति ) द्वितीयकल्पाभिप्रायेणेदम् । प्रथमकल्पे तज्ज्ञानांशेऽग्राह्यत्वस्यान्यत्रापि प्रसिद्धेः (सुलभत्वादिति)। तज्ज्ञानस्य तज्ज्ञानरूपविशेषणज्ञा

[दी ] तज्ज्ञानघटितविशिष्टान्तरे तत्प्रसिद्धिरित्यपि केचित् ।
विधिप्रसिद्धिस्तु घटत्वप्रकारकत्वादौ,

---

[ग] नजन्यतया नैयायिकसिद्धएव ज्ञाने प्रकारतया तद्भिन्नज्ञान प्रकारत्वाभावस्य तत्र संभवादितिभावः । ... ...

नच प्राथमिकतज्ज्ञानप्रत्यक्षादावपि मीमांसकमते तज्ज्ञानस्य प्रकारतया तादृशज्ञानस्यच ज्ञानविषयकज्ञानजन्यत्वेन नैय्यायिकसिद्ध द्वितीयानुव्यवसायादिभिन्नतया मीमांसकमते द्वितीयकल्पे निषेधप्रसिद्धिर्दुर्वारैवेतिवाच्यम् । स्वरूपसंबन्धावच्छिन्नप्रकारताया द्वितीयकल्पे साध्यघटकतोपगमेन स्वरूपसंबन्धेनावृत्तौ तज्ज्ञाने द्रव्यत्वादावपि परमते निषेधस्य प्रसिद्धेः संपादनीयत्वात् । मिश्रादिमते स्वरूपसंबन्धेनावृत्तावपि तेन संबन्धेन अन्यथाख्यातिप्रकारत्वस्य सत्वेपि तादृशावृत्तेः सर्वस्य तादृशभ्रमे मानाभावात् , कचित्तदभावप्रसिद्धिसंभवात् । तज्ज्ञानपर्यन्तानुधावनंच प्रकारतावच्छेदकसंबन्धविशेषाप्रवेशेपि स्वमते तत्रप्रसिद्धिःसंभवतीत्यभिप्रायात् । मतान्तरमाह ( तज्ज्ञानघटितेति ) विशेषणतया तज्ज्ञानं यद्घटकं तादृशविशिष्टे इत्यर्थः । तादृशविशिष्टस्य न्यायमते तज्ज्ञानविषयकज्ञानजन्यज्ञानएव विषयत्वात् । एवंच-विषयतामात्रस्य साध्यघटकत्वेपि निर्वाहो बोध्यः । कश्चिदित्यनेनास्वरसस्सूचितः। केवले विशेष्ये तादृशज्ञानाजन्यज्ञानविषयत्वसत्वेन विशिष्टेपि विशेष्ये तदभावस्य दुर्लभत्वमिति तद्बीजम् । प्रथमकल्पे विधिप्रसिद्धिस्थलमाह ( विधीति ) ( घटत्वप्रकारकत्वादाविति ) अभावत्वप्रतियोगित्वयोरिव न्यायमते प्रकारित्वादेरनुपस्थितस्य प्रकारत्वात् । व्यवसायानन्तरक्षणोत्पन्नानुव्यवसाये व्यवसायविषयकज्ञानजन्यत्वेन नैय्यायिकसिद्धभिन्नव्यवसायज्ञानात्मकविशेष्यनिरूपितप्रकारतया घटत्वप्रकारकत्वादौ सत्वादिति भावः । ... ...

यद्यप्येवं प्रामाण्ये निषेधरूपनैय्यायिकसाध्यस्य बाधो दुर्वारः । प्रामाण्यस्यैव घटत्वप्रकारकत्वत्वादिमात्रपुरस्कारेण तन्मतेपि ज्ञानविषयकज्ञानाजन्यज्ञानविषयत्वेन तत्र तदभावस्य दुर्घटत्वात् । तथापि विषयेपि विषयतानवच्छेदकरूपावच्छेदेन विषयत्वाभावमभ्युपेत्यैतदभि-

[दी] घटादौ वा । भट्टानां ज्ञातता लिंगकानुमितौ तस्य प्रकारत्वसंभवेतु तस्यामपि —

---

[ग] धानम् । अन्यथा प्रकारितादावित्यप्यनुपस्थितं न प्रकार इति मतमव लम्ब्य बाधः परिहरणीयः । ज्ञानांशे विषयितासंबन्धेन प्रथमानुव्यवसाये प्रकारीभूतविषयएव व्यवसायकालीनोपस्थितिवशा त्तदनन्तरत त्प्रत्यक्षएव तत्प्रकारीभूतज्ञानत्वादौच तज्ज्ञानरूपघटत्वप्रकारकत्वाद्या-श्रयविषयकज्ञानाजन्यज्ञानप्रकारकत्वप्रसिद्धिः । आदिपदादेवच तत्परि-ग्रहः । द्वितीयकल्पे ज्ञानावृत्तावपि वस्त्वन्तरे प्रसिद्धिर्लभ्यमित्याह (घटादौवेति) स्वरूपसंबन्धावच्छिन्नप्रकारताया द्वितीयकल्पे विवक्षि तत्वे अन्यथाख्यात्यनंगीकर्तृ गुरुमते तादृशसंबन्धेनावर्तमानघटादौ ता दृशप्रकारिता नसंभवतीत्याशयेन आदिपदं, तादृशसंबन्धेन वृत्तिमता मभावादीनां परिग्राहकम् । विशेष्यभूतनैय्यायिकसिद्धभेदेन तादृश-ज्ञानजन्यतया नैय्यायिकसिद्धभिन्नं ज्ञानमादायापि भट्टमतमात्रसिद्धप्र सिद्धिस्थलमाह (भट्टानामिति) (प्रकारत्वसंभवेत्विति) ज्ञानरूपसाध्यांशे समानकालीनत्वसंबन्धेन प्रकारत्व इत्यर्थः । तस्यामपि–ज्ञाततायामपि । ज्ञानांशे ग्राह्यत्वघटितसाध्यप्रसिद्धिरित्यर्थः । लिंगस्य साध्यवि शेषणतयानुमितौ भानं संदिग्धमित्यत "संभवे" त्वित्यभिहितं । द्वितीयकल्पे घटादिविशेष्यकज्ञाततात्प्रत्यक्षप्रकारतामादायापि तेषां स्व मते साध्यप्रसिद्धि र्द्रष्टव्या । ... ...

यद्यपि ज्ञाततालिंगकानुमितिग्राह्यतामादायापि ज्ञानत्वादावपि प्र सिद्धिसंभवः । तथापि तत्रोभयमतएव तत्प्रसिद्धेः तस्य घटत्वप्रकार त्वादावित्यादिपदेन प्रागुपादानात ज्ञाततापर्यन्तानुधावनम् । ज्ञाततात्वे ज्ञानांशे ग्राह्यत्वरूपसाध्यवत्त्वाभावात्तदुपेक्षितं । ...

ननु नैय्यायिकसिद्ध संवादिप्रवृत्तिजनकत्वादि लिंगकानुमित्या प्रामाण्यप्रकारेण ज्ञानावगाहनेऽसतिसाध्यप्रसिद्धौ तन्मूलकज्ञाततालिं-गकानुमित्या प्रामाण्यग्रहेणैव भट्टमते दर्शितसाध्यनिर्वाहा दनुव्यवसाय स्थलीयपूर्वाप्रतीततत्तज्ज्ञानविषयकज्ञाताप्रमुखव्याप्तयधीन ज्ञाततालिंग कानुमितेः न प्रामाण्यावगाहिता तन्मते सिध्यति, नवा तावतैव तेषां स्वतस्त्वसिद्धिः, प्रामाण्ये तादृशप्रामाण्यभासकसामग्र्या यथार्थेच्छा

[ दी ] तादृशज्ञानविषयकसमानाधिकरणज्ञानाजन्यसमानाधिकरणत्वेनास्तिमं ज्ञानं विशेष्यम् । ... ...

केचित्तु तादृशज्ञानाजन्यत्वेन यन्नैयायिकासिद्धं तद्ग्राह्यत्वं वाच्यम् । व्यवसायानन्तरत्रिचतुरक्षणाभ्यन्तरोत्पन्नं ज्ञानं भट्टैर्ज्ञाततालिंगकानुमितित्वेन स्वीकृतं ... ...

---

[ग] दिलिंगकप्रामाण्यविशिष्टानुमितिसामग्रीतोऽविशेषात् । नैयायिकासिद्धज्ञाततालिंगकत्वेन विशेषस्य स्वतस्त्वसंपादकत्वोपगमे परिभाषामात्रोपगमेन स्वतः परतोवेति विवादपर्यवसानात्, ज्ञातताऽरूपपदार्थान्तरतदभाव एव विवादविश्रामादित्याशंक्य उक्तानुमितिव्यावर्तनाय विशेषणान्तरं प्रवेशयति ( तादृशज्ञानेति ) प्रकृतप्रामाण्याश्रयज्ञानेत्यर्थः। सामानाधिकरण्यञ्चयं तन्निरूपितम् । एतच्च विशेषणं यथाश्रुतमूललभ्यमेव। एतद्विशेषणेनच पूर्वोपदर्शितयथार्थसंस्कारादिलिंगकसामान्यव्याप्तचुपष्टम्भानुमितिग्राह्यतया अर्थान्तरवारणासंभवस्य दर्शितत्वा त्तादृशज्ञानजन्यतया नैय्यायिकसिद्धभिन्नत्वरूपोक्तविशेषणोपादान मित्यवधेयम् । ... ... ...

दर्शितज्ञाततालिंगकानुमित्या अर्थान्तरवारणाय तादृशज्ञानजन्यत्वेन नैय्यायिकसिद्धभिन्नत्वमुपेक्ष्य तादृशज्ञानजन्यभिन्नत्वेन नैय्यायिकसिद्धत्वं केचिन्निवेशयन्ति विशेषणं, उक्तज्ञाततालिंगकानुमिते स्तादृशज्ञानजन्यतया नैय्यायिकसिद्धभिन्नत्वेपि न तदजन्यतया नैय्यायिकसिद्धत्व मतस्तद्ग्राह्यतया न सिद्धसाधनमिति वदन्ति, तन्मतमुपन्यस्यति ( केचित्विति ) नन्वेवमनुव्यवसायस्थानीयज्ञाततालिंगकानुमितेरपि भट्टमतेऽसंग्रहः, तस्या नैय्यायिकासिद्धत्वादित्यत आह ( व्यवसायेति ) व्यवसायानन्तरं ज्ञाततोत्पत्त्यधिकरणव्यवसायद्वितीयक्षणमादाय क्षणत्रयस्य क्षणचतुष्टयस्यवा मध्ये जायमानमित्यर्थः । ज्ञातताद्वितीयक्षणे ज्ञाततायाः प्रत्यक्षव्याप्तिस्मरणयोः भट्टमते युगपदुत्पादसंभवा द्विशिष्टपरामर्शपर्यन्तस्यानुमितावनपेक्षायां तत्तृतीयक्षण एव ज्ञानानुमिते स्संभवः, विशिष्टपरामर्शापेक्षायां तदा विशिष्टपरामर्शोत्पत्त्या

[ दी ] नैयायिकैस्साक्षात्कारित्वेनैवाभ्युपगम्यत इति न तन्मतापरिग्रह इत्याहुः । ... ... ...

ननु योगिनां तादृशाश्रयमप्रतीत्यापि ज्ञाने ऽपूर्वप्रामाण्यग्रहा न्निषेधसाधने बाधः । ... ... ...

---

[ग] चतुर्थक्षणेऽनुमितिरित्याशयेन " त्रिचतुरे " त्युक्तं ( नैय्यायिकैस्साक्षात्कारित्वेनैवेति ) साक्षात्कारित्वव्यवसायानन्तरक्षणोत्पन्नत्वाभ्यामेवेत्यर्थः । व्यवसायानन्तरक्षणोत्पन्नतया स्वीकृतत्वेन व्यवसायविषयकज्ञानाजन्यतयास्वीकृतत्वलाभः । व्यवसायानन्तरक्षणोत्पन्नतास्वीकारे अनुमितित्वोपगमो न संभवतीति तद्धेतुतयासाक्षात्कारित्वोपगमाभिधानम् । एवकारेणानुमितित्वव्यवसायतृतीयक्षणोत्पन्नत्वादिस्वीकारव्यवच्छेदः । नतन्मतापरिग्रहः – नभट्टमतसिद्धज्ञाततालिंगकानुमित्यपरिग्रहः । तस्याज्ञाततालिंगकानुमितित्वेन न्यायमतासिद्धत्वेपि तज्ज्ञानविषयकज्ञानाजन्यज्ञानप्रत्यक्षत्वेन तन्मतासिद्धतयैव तत्संग्रहसंभवादिति भावः । तादृशाश्रयं - प्रकृतप्रामाण्याश्रयम् । अपूर्वप्रामाण्यग्रहात् – पूर्वाप्रतीतज्ञानवृत्तिप्रामाण्यस्य योगजधर्मबलेन तज्ज्ञानांशे ग्रहात् । ( निषेधसाधने बाध इति ) तन्मते योगिनामभावेन तद्व्यवस्थापनं विना सिद्धसाधनाव्यवस्थितेरिति तन्नोक्तम् ।

नच प्रामाण्यज्ञानं विना प्रामाण्यस्य प्रकारत्वासंभवान्नायं दोषः, योगजधर्मादेव प्रथमं प्रामाण्यग्रहेण विशेषणज्ञाननिर्वाहे तज्ज्ञानेपि निखिलवस्तुभाने बाधकाभावात तादृशज्ञानजन्यतयैव प्रामाण्यप्रकारकज्ञानस्य तदाश्रयविषयकज्ञानाजन्यत्वम् दुर्घटं, प्रामाण्यस्य तद्वतितत्प्रकारकत्वविशिष्टज्ञानत्वरूपत्वे तद्भानान्तर्गतमेव वैशिष्ट्यघटकतज्ज्ञानभानमितिवाच्यम् । प्रमाज्ञानं विनापि प्रमापदप्रवृत्तिनिमित्तत्वादिना प्रकृतप्रामाण्यरूपविशेषणस्मरणादिसहकृता त्प्रामाण्यघटकप्रकारित्वादिस्मरणसहकृताद्वा योगजधर्मा त्तत्प्रकारकप्रत्यक्षसंभवात ।

नचैवं वक्ष्यमाणरीत्या योगिज्ञानवारणेपि उपदर्शितस्मरणादिजन्यप्रामाण्योपनीतभानं ज्ञानांशे लौकिकंप्रामाण्याश्रयविषयकज्ञानाजन्यमपि संभवतीति निषेधे बाधो दुरुद्धर एवेति वाच्यम् । उपनीतभा

[ दी ] अत्र केचित – तत्प्रामाण्यस्याश्रयो न वक्तव्यः, अपितु-स्वग्राह्यप्रामाण्यस्य । तथाच तज्ज्ञानसमानाधिकरण स्वग्राह्यप्रामाण्याश्रयज्ञानविषयकज्ञानजन्यं यत् तद्भिन्नतज्ज्ञानसमानाधिकरणज्ञानग्राह्यं नवेत्यर्थः । ... .. ...

---

[ ग ] नत्थले दर्शितनियमसत्त्वे प्रामाण्याश्रयज्ञाने प्रामाण्यभानं विना तदंशे प्रामाण्योपनीतभानासंभवात् तज्ज्ञानांशे ग्राह्यत्वविरहस्य बाधासंभवात्। प्रमानद प्रवृत्तिनिमित्तत्व...नोपस्थितप्रकृतप्रामाण्यरूपसामान्यप्रत्यासत्तिजन्य तत्प्रकारकप्रत्यक्षनादाय...न बाधः, तत्संबन्धेन सामान्यप्रकारमेव ज्ञानं तत्संबन्धेन सामान्याश्रयभ.सकमिति मतस्यावलंबनीयत्वात्, तादृशज्ञानस्यच प्रमारूपस्य प्रमाविशेष्यकत्वात् । व्यधिकरणप्रकारकाजन्यत्वेन अ.ति मज्ञानेविशे.ष्यात्प्रमाविशेष्यकप्रामाण्यरूपसामान्यप्रत्यासत्तिजन्यग्रहस्य वारणीयत्वात् । तावतैवच तज्ज्ञानविशेष्यतानिरूपितत्वाविशेषित तत्प्रकारतामात्रस्य ग्राह्यतास्वरूपत्वकल्पे भ्रमरूपं पक्षं व्याप्यत्वघटकतयापि प्रमात्वरूपसाध्याश्रयत्वेन भ्रममवगाहमानेन परामर्शेन जनितांप्रामाण्यानुमितिमादाय निषेधस्य बाधवारणं संभवतीति ध्येयम् ।

तदाश्रयपदेन तदाश्रयत्वग्रहविषयार्थकतया भ्रमजन्यज्ञानव्यावृत्तिरित्यपिकेचित् ।

मिश्रानुसारेण समाधातुमुपक्रमते ( केचित्त्विति ) नवक्तव्यः – नतज्ज्ञानपदेन विवक्षणीयः । स्वपदस्याजन्यज्ञानरूपानुयोगिपरत्वे च रमज्ञानपदेनानुव्यवसायादीनां न्यायमतेनोपादानसंभवः, तन्मते प्रामाण्यस्य तदग्राह्यत्वादिति प्रामाण्यग्राहकंच ज्ञानं तन्मते स्वग्राह्यप्रामाण्याश्रयज्ञानजन्यमेवेति स्वपदार्थाप्रसिद्धिरतः प्रतियोगिनि स्वत्वमन्तर्भाव्य भेदकूटं निवेशयति ( तथाचेति ) ( तज्ज्ञानसमानाधिकरणेति ) तज्ज्ञानसमानाधिकरणंच यत्स्वग्राह्यप्रामाण्याश्रयतज्ज्ञानविषयकं ज्ञानं तज्जन्यत्वेन नैयायिकसिद्धं यद्यत्स्वं तत्तदन्यं यत्तज्ज्ञानसमानाधिकरणं ज्ञानं तद्ग्राह्यं नवेत्यर्थः । प्रथमसमानाधिकरणान्तानुपादाने यद्यपि स्वग्राह्यप्रामाण्याश्रयविषयकत्वेन परमेश्वरज्ञाननिवेशेपि न्यायमते तदजन्यास्मदादि ज्ञानाप्रसिद्धेः, प्रामाण्यविषयकानु – मित्यादेरेव स्वपदेनोपादानात् दन्त्यव रूपाजन्यान्तार्थस्य –

[ग]प्रामाण्याविषयकज्ञान एव प्रसिद्धेः, प्रामाण्याविषयकश्च ज्ञानं न्यायमते प्रामाण्यविषयकत्वेन मीमांसकमतसिद्धमनुव्यवसायादिकमपीति निषेध्ये साध्ये घटत्ववतीत्यादिप्रामाण्यस्य तद्ग्राह्यत्वसिद्धेः स्पष्टत्वरूहतया तत्पक्षकविप्रतिपत्तौ नकाचिदनुपपत्तिः । प्रामाण्यघटितप्रामाण्यपक्षकस्थले विषयीभूतप्रामाण्यविषयकस्येदं प्रमेत्यादिज्ञानानुव्यवसायादे न्यायमते स्वग्राह्यप्रामाण्याश्रय घटादिज्ञानविषयकेश्वरज्ञानजन्यतया तदजन्यज्ञानाग्राह्यत्वस्यैव तन्मते साध्यतयाऽनुव्यवसायादेः प्रामाण्याग्राहकत्वासिद्ध्या उद्देश्यासिद्धिस्तु प्रथमसमानाधिकरणान्तोपादानेपि तादृशानुव्यवसायादेः स्वग्राह्यविषयीभूतप्रामाण्याश्रयघटादिज्ञानविषयकेन तद्धर्मिकप्रामाण्यप्रकारकोक्तव्यवसायरूपतज्ज्ञानसमानाधिकरणज्ञानेन जनितत्वादसंग्रहेण समानैव । तादृशप्रामाण्यस्य पक्षबहिर्भावेन समाधिरपि समानएव । तथापि घटादिज्ञानानुव्यवसायस्य न्यायमते घटत्वादिप्रकारकत्वेन तत्प्रामाण्यावगाहितया स्वग्राह्यप्रामाण्याश्रयव्यवहा यविषयकपरमेश्वरज्ञानजन्यतया प्रामाण्यत्वेन ग्राह्यतापर्यन्तस्य च्चाविवक्षितत्वा त्कथितं यद्यत्स्वं तदन्यत्वं दुर्घटम् । एवं पुरुषान्तरीयप्रमाविषयकान्यपुरुषीयप्रामाण्यविषयकज्ञानानुव्यवसायस्य ग्राह्यं तद्विषयीभूतप्रामाण्यं तदाश्रयपुरुषान्तरीयज्ञानाविषयके व्यवसाये तज्ज्ञानसामानाधिकरण्यासत्त्वात्प्रथमसमानाधिकरणपदोपादाने तादृशानुव्यवसायस्याजन्यान्तेनोपादानसंभवः । तदनुपादाने तादृशानुव्यवसायस्य स्वग्राह्यप्रामाण्याश्रयविषयकेणान्यपुरुषीयज्ञानेन भगवज्ज्ञानेनच जनितत्वान्न तदुपादानसंभव इति प्रथमसमानाधिकरणपदोपादानम् । एवं प्रामाण्यधर्मत्वादिप्रकारक तद्विशेष्यकज्ञानीयप्रामाण्यस्य यत्र पक्षता तत्र तादृशज्ञानानुव्यवसायस्य प्रामाण्यधर्मत्वादिप्रकारत्वावगाहिनो न्यायमतेपि प्रामाण्यग्राहकतया स्वग्राह्यप्रामाण्याश्रयविषयकेश्वरज्ञानजन्यतया प्रथमसमानाधिकरणान्तानुपादाने नसंग्रहः स्यादितितत्संग्रहायापि तदुपादानम् । द्वितीयसमानाधिकरणान्तव्यावृत्तिः पूर्ववदेव । मिश्रमते जन्यभिन्नत्वानिवेशेऽपि नक्षतिः । तन्मते स्वप्रतियोगिग्राह्यप्रामाण्याश्रयविषयकज्ञानप्रागभावप्रयुक्तं यद्यत्स्वं तदन्यप्रागभावप्रतियोगिज्ञानविषयत्वस्यैव विवक्षणीयत्वात् । उक्तविवक्षया योगि

[दी]योगिप्रत्यक्षश्च ज्ञानभिन्नत्वेनात्ममननजन्यं। वस्तुतो ज्ञानभिन्नत्वेनात्ममननं निखिलज्ञानविषयकतया सकलप्रामाण्याश्रयविषयकमेवेति। परंतु -- अनागताविषयकत्वेनान्तिमं ज्ञानं विशेष्यं ।

---

[ग] ज्ञानव्यावृत्तिं स्पष्टयति ( योगिप्रत्यक्षंचेति ) योगजधर्माधीनं प्रत्यक्षमित्यर्थः। ( ज्ञानभिन्नत्वेनात्ममननजन्यमिति )

यद्यपि तादृशमननस्य निदिध्यासनद्वारा सार्वज्ञ्यसम्पादकधर्मविशेषहेतुतया योगजधर्मजन्यप्रत्यक्षे प्रयोजकत्वमेव, नतु जनकत्वम्। तथापि जन्यपदस्य प्रयोज्यपरत्वा न्नासंगतिः । साध्येपि अजन्यत्वेन अप्रयोज्यताया एव विवक्षणीयत्वात । अतएव मिश्रोक्तनिदिध्यासनमुपेक्ष्य मननमेव तन्मूलभूतमुपात्तम् । निदिध्यासनस्यापि जनकतायाः अप्रामाणिकत्वा त्प्रयोज्यत्वघटितसाध्यस्याऽर्थ्यं विवक्षितत्वे निदिध्यासनमूलभूतमननप्रयोज्यतयापि तद्वारणं संभवतीत्याशयात्। आत्मनो नित्यत्वादिबोधकवाक्या जन्यत्वादिसामान्यधर्मावच्छिन्नभिन्नतयैवात्मनश्श्रवणमस्ति, नतु ज्ञानत्वादिरूपविशेषधर्मावच्छिन्नभिन्नतया, तादृशधर्मावच्छिन्नबोधकागमाश्रुतेरित्याशयेन श्रवणमुपेक्षितं। श्रवणे ज्ञानभानानियमात् , ज्ञानविषयकज्ञानापेक्षायामेव विषयीभूतज्ञानस्य ग्राह्यत्किञ्चित्प्रामाण्याश्रयतया सिद्धसाधनवारणसंभवात् । ज्ञानत्वावच्छिन्नभिन्नत्वेन आत्ममननश्चावश्यकं, विज्ञानवादिसत्कृथाः तज्ज्ञानाभेदवासना निवर्तकतद्भेदसाक्षात्कारनिर्वाहक तद्गोचर ध्यानधारामूलभूतज्ञानभेदवासनाबीजत्वात् । ज्ञानत्वावच्छिन्नभिन्नत्वेन आत्मनोनुमितौ भेदप्रतियोगितया सकलज्ञानभाने बाधकाभावः, सामान्यलक्षणप्रत्यासत्त्या अनुमितिजनकसाध्यप्रसिद्धौ सकलतद्भानात्। विशेषाभावकूटस्य - सामान्याभावत्वमते सामान्याभावभाने सकलप्रतियोगिभानमावश्यकमेव, सामान्यधर्मविशेषितस्वस्वप्रतियोगिप्रकारेणैव तदभावानां भानात्, अन्यथा भ्रमत्वापत्तेः। एवञ्च प्रकृतप्रामाण्याश्रयमात्रनिवेशेपि योगिप्रत्यक्षवारणसंभव इत्याशयेनाह ( वस्तुतइति ) अत्रैव समाधानेस्वनिर्भरः ( अनागतेति ) अनागतत्वं ग्राहकज्ञानाधिकरणकालापेक्षया विचारकालापेक्षयैववा ग्राह्यम् । अन्यथा जन्यमानस्यैव किञ्चि-

[दी] नोपादेयंच तत्र सामानाधिकरण्यं । अनागतज्ञानप्रामाण्यन्तु न पक्षः । पूर्ववर्तित्वादिरूपसामान्यलक्षणाजन्यज्ञानन्तु न तेन वार्यते । ... ... ...

---

[ग]त्कालापेक्षया अनागतत्वेन प्रामाण्यग्राहकत्वेनाभिमतानामनुव्यवसाया दीनां अनागतव्यवसायादिविषयकत्वेन नित्यमात्रविषयकज्ञानस्यैव अनागताविषयकतया बाधापत्तेः ।

नन्वेवं योगिज्ञानस्येव परमेश्वरज्ञानस्याप्यनागतविषयकत्वेन वारणादन्तिमज्ञाने तज्ज्ञानसामानाधिकरण्यविशेषणमनुपयुक्तमित्याशंक्य तत्परित्यजति ( नोपादेयश्चेति ) नन्वनागताविषयकत्वेन अन्तिमज्ञान-विशेषणे अनागतत्वप्रागभावासमानकालीनत्वादिप्रकारकज्ञानप्रामाण्ये बाधः, तादृशप्रामाण्यग्रहस्य तद्घटकानागतविषयकत्वनियमादित्यत आह ( अनागतेति ) अनागतविषयकज्ञानमात्रस्य प्रामाण्यं पक्षाद्बहि-र्भावनीयमित्यर्थः । घटत्ववतीत्यादिप्रामाण्यस्य अनागतघटादिघटितत्वेपि अतीतादिघटमात्रविषयकानुव्यवसायादिनापि ग्रहात् साध्यसत्त्वे न नपक्षबहिर्भावः ।

यदिच विशेष्यव्यक्तिभेदेन घटत्ववतीत्यादिकं प्रामाण्यमपि भिद्यतएव, तद्घटितत्वात्, तथाचानागतघटादिव्यक्तिघटितस्य नानागताविषयकज्ञानग्राह्यतेति बाधो दुष्परिहर एवेति मन्यते, तदा तत्कालीनविचारे तदनन्तरोत्पत्स्यमानघटादिव्यक्तिघटितंघटत्ववतीत्यादिकं पक्षाद्बहिर्भावनीयमेव, ग्राहकज्ञानापेक्षया नागतत्वनिवेशेऽनागतघटादिघटिततादृशप्रामाण्यमपि तादृशघटादिपूर्वकालेतरकालीनतज्ज्ञानानुव्यवसायादिना स्वापेक्षयानागतघटादिव्यक्त्यन्तरमनवगाहमानेन गृह्यत इति तत्र साध्यसत्त्वेन तस्य पक्षान्तर्भावोपि सम्भवति । तादृशघटादिव्यक्तिपूर्वकालीनेनैव अनुव्यवसायादिना यद्व्यक्तिघटित-प्रामाण्यं विषयीकृतं, तादृशव्यक्तेः प्रामाणिकत्वे तद्व्यक्तिघटितमेव तत्पक्षाद्बहिर्भावनीयमितिबोध्यम् । नन्वेवं घटभिन्नत्वादिसामान्यजन्यज्ञानस्य अनागताविषयकत्वविशेषणेनैव वारणे पूर्वोक्तप्रकारतानिवेशव्यावृत्त्यसंगतिरित्यत आह ( पूर्ववर्तित्वादीति ) तेन -- अनागताविषयकत्वविशेषणेन ( नवार्यत इति ) तथाच तादृशज्ञानविषयतावारकत्वेनैव

[दी] अन्येतु -- तज्ज्ञानभिन्नज्ञानाविषयकत्वेन तद्विशेष्यं । इत्थंच निषेधो ज्ञानान्तरे सुलभ इति । ... ...

अन्ये । -- तद्वति तत्प्रकारकत्वेन विशिष्टं ज्ञानत्वं प्रामाण्यम् । वैशिष्ट्यंच सामानाधिकरण्यम् । तच्चाश्रयगर्भम् । न च नैय्यायिकानां विशेषणज्ञानं विना विशिष्टज्ञानसंभवः ।

---

[ग]तादृशप्रकारताविवक्षणस्यावश्यकतेति भावः (तज्ज्ञानभिन्नेति) प्रकृप्रामाण्याश्रयभिन्नेत्यर्थः । प्रतियोगिकोटौ ज्ञानत्वप्रवेशवैय्यर्थ्यात्, अनुयोगिनि ज्ञानत्वविशेषणं अप्रसिद्धिवारकं, सविषयमात्रस्यैव ज्ञानादिभिन्नविषयत्वात् । तत-अन्तिमज्ञानं । अनेनापि विशेषणेन विश्वविषयकस्य योगिज्ञानस्येव भगवज्ज्ञानस्यापि वारणात्, तत्र सामानाधिकरण्यविशेषणमेतत्कल्पेप्यनुपादेयम् । एवञ्च प्रकारतापर्यन्तस्य स्वतोग्राह्यतारूपत्वविरहेपि ननिषेधप्रसिद्धिरित्याह ( इत्थंचेति ) ज्ञानान्तरे -- तज्ज्ञानभिन्नज्ञाने (सुलभइति ) तज्ज्ञानभिन्नज्ञानस्य तज्ज्ञानभिन्नज्ञानाविषयकज्ञानविषयत्वासंभवादिति भावः ।

एतत्कल्पे पूर्वकल्पेच ज्ञानत्वादिप्रकारकज्ञानानुव्यवसायस्य सामान्यलक्षणया यावज्ज्ञानाविषयकत्वे बाधकाभावान्नव्यायमते प्रकृतप्रामाण्याश्रयभिन्नज्ञानाविषयकत्वेन अनागताविषयकत्वेनच तत्संग्रहः । तादृशज्ञानीयप्रामाण्ये परतस्त्वसाधने सिद्धसाधनात्तस्य पक्षबहिर्भावावश्यकत्वे सामान्यतो ज्ञानविषयकज्ञानाजन्यत्वनिवेशएव सम्भवति, तादृशज्ञानजन्यतया नैय्यायिकसिद्धभिन्नत्वस्यावश्यकतया भट्टमतपरिग्रहस्यापि संभवादित्यस्वरसः ( तच्चाश्रयगर्भमिति ) तथाच प्रामाण्याश्रयज्ञानस्य प्रामाण्यघटकतया तद्विषयकज्ञानजन्यतयैव योगजधर्मजन्यप्रामाण्यप्रत्यक्षवारणं संभवतीतिभावः । आश्रयघटितत्वेपि योगिनां तज्ज्ञाने कथमाश्रयज्ञानापेक्षेत्याशंकायामाह ( नचेति ) नैय्यायिकानामित्यनेन स्वतस्त्ववादिनां मीमांसकानां विशिष्टबुद्धौ विशेषणज्ञानहेतुतानंगीकारात प्रामाण्यघटकतदाश्रयज्ञानस्य पूर्वमसत्त्वेपि प्रथमानुव्यवसायादिना तन्मते प्रामाण्यग्रहसंभवान्न बाध इति दर्शितम् । ननु योगिज्ञाने विशेषणधियो हेतुत्वे लौकिकसन्निकर्षवद्योगजधर्म-

[ग] योगजधर्मस्यच निर्विकल्पकज्ञानजनकत्वं सार्वज्ञ्यसंपादकमनु गुणमेवेति । यदि च किञ्चित्प्रामाण्यं विनाश्रयग्रहं दुर्ग्रहं, तदा तत्प क्षे नान्तर्भावनीयम् ।...                    ...                    ...

---

[ग]स्यापि निर्विकल्पकजनकत्वोपगमः स्यादित्यत्रेष्टापत्तिमाह (योगजधर्म स्येति ) ( सार्वज्ञ्यसंपादकमिति ) स्वरूपतो घटत्वादिप्रकारकस्य स घटो नवेत्यादिसंशयनिवर्तकस्य सयट इत्याद्याकारकनिखिलधर्मज्ञा नस्य सम्पादकमित्यर्थः । स्वरूपतो घटत्वादिप्रकारक बुद्धौ स्वरूप तस्तदवगाहिज्ञानस्य हेतुतायाः सामान्यलक्षणया सार्वज्ञ्य वारणाया वश्यवक्तव्यतया निर्विकल्पकं विना तादृशज्ञानासंभवादिति भावः।

नचविशिष्टबुद्धिं प्रति विशेषणधियोहेतुत्वेपि प्रामाण्यघटकविशेष णानां ज्ञानसत्त्वे ज्ञानस्याज्ञातस्यापि संसर्गतया भाने बाधकाभावः, संसर्गस्याप्रकारत्वादिति कथं योगिज्ञानं वारणीयमितिवा - च्यम् । विशिष्टविशेषणकज्ञाने विशिष्टस्यैव विशेषणस्य धि- यो हेतुतया विशिष्टप्रामाण्यप्रकारकज्ञाने विशिष्टप्रामाण्यज्ञानहे तुताया आवश्यकत्वेन विशिष्टप्रामाण्यज्ञानस्य तद्घटकाश्रयविषयकत्व- नियमेन विशिष्टप्रामाण्यप्रकारकबुद्धेस्तदाश्रयज्ञानाजन्यत्वासंभवात् । तद्व तितत्प्रकारकत्वसामानाधिकरण्यविशिष्टमेववा ज्ञानत्वंपक्षः, तद्भानेच सा मानाधिकरण्यघटकस्याश्रयस्य प्रकारतानियमात् तज्ज्ञानापेक्षा नि ष्प्रत्यूहैव ।

ननु सर्वं ज्ञानं गुण इत्यादिज्ञानीयसर्वविशेष्यतावच्छिन्नप्रामाण्यं सर्वविषयकव्यवसायाधीनेनैव अनुव्यवसायेन मिश्रमते गृह्यते, तथा च तन्मते तत्र बाधः, तादृशव्यवसायस्य तादृशप्रामाण्याश्रयविषय- कत्वनियमादित्यत आह (यदिचेति) ( विनाश्रयग्रहं दुर्ग्रहमिति) आश्रयस्यै व नियमत आश्रयग्रहरूपत्वादिति भावः ।

अत्रच ज्ञानमित्याद्याकारकज्ञानस्येव सर्वं ज्ञानमित्याकारकस्यापि सर्वज्ञानविषयकत्वानियमः ।

नच पर्याप्तिसंबन्धेन सर्वत्वप्रकारकस्य सर्वत्वपर्याप्त्यधिकरण सर्वविषयकत्वे तत्प्रमात्वमेव ननिर्वहतीति तादृशप्रमायाः सर्वज्ञानवि

[दी] केचित्तु-तज्ज्ञानविषयकेत्याद्युक्तिभंग्या नैय्यायिकसिद्धप्रामाण्यग्राहकताकभिन्नज्ञानग्राह्यत्वमेवोक्तं । निषेधप्रसिद्धिः परेषां प्रामाण्यत्वप्रामाण्याभावत्वादाविति कृतं पल्लवितेन ॥ ...

---

[ग] षयकत्वनियमइति वाच्यम् । समुदायस्य पर्याप्त्यनुयोगित्वे तदन्तःपातिन एकादेरपि तदावश्यकत्वा तन्मात्रविषयकसर्वत्वज्ञानस्यापि प्रमात्वस्य दुर्निवारत्वात् । एकोयं द्वावित्यादिबुद्धेरप्रमात्वस्य कथंचिदुपपादनीयत्वात् । तथाच सर्वत्वप्रकारकज्ञानाविषयकस्यापि सर्वं ज्ञानमिति प्रमात्मकज्ञानस्य संभवात्तदनुव्यवसायस्य दर्शितप्रामाण्याश्रयज्ञानविषयकज्ञानाजन्यत्वं संभवतीत्यालोच्य " यदि वे " त्युक्तम् । अत्रापि तद्वति तत्प्रकारकत्वमात्रं प्रवृत्त्युपयुक्तं नतु तद्विशिष्टज्ञानत्वपर्यन्तम्, इत्थं चविशिष्टे स्वतस्त्वसाधने तद्वति तत्प्रकारकत्वे स्वतस्त्वसिद्धावपि विशिष्टस्य परतस्त्वसाधने तद्वति तत्प्रकारकत्वे परतस्त्वसिद्धिरिति तन्मात्रस्य पक्षत्वमुचितं न विशिष्टस्येत्यस्वरसः (उक्तिभंग्या उक्तमिति) नैय्यायिकसिद्धप्रामाण्यग्राहकताकानुमित्यादेः प्रायशस्तदाश्रयविषयकज्ञानजन्यत्वादिति भावः । एवंच योगिज्ञानादेः प्रामाण्यग्राहकतया नैय्यायिकसिद्धतया तद्भिन्नत्वाभावेन सिद्धसाधनोद्धारः ।

अथैवमुक्तायास्तज्ज्ञाने निषेधप्रसिद्धेः अनवकाशः । नैय्यायिकमते यादृशज्ञानेन प्रामाण्यं नावगाह्यते तादृशेपि प्रत्यक्षादौ प्रामाण्याश्रयज्ञानस्योपस्थितस्य प्रकारत्वादित्याशंक्य अन्यत्र निषेधप्रसिद्धिं दर्शयति ( निषेधेति ) ( प्रामाण्यत्वेति ) प्रामाण्यस्य प्रमेतरावृत्तित्वादिघटितस्य प्रामाण्यविषयकज्ञानेनैव अवगाहनात्तत्र न्यायमतसिद्धप्रामाण्यविषयताकान्यज्ञानविषयत्वाभावस्य सुलभत्वादिति भावः।नैय्यायिकसिद्धप्रामाण्यग्राहकताकभिन्नप्रथमानुव्यवसायादिना मीमांसकमते प्रामाण्यत्वविशिष्टप्रामाण्यावगाहेन प्रामाण्यत्वेनमतद्वये साध्यप्रसिद्धिरिति नाशंकनीयम् । तद्वद्विशेष्यकत्वावच्छिन्नत्वतन्निरूपितत्वसहित प्रकारितात्वरूपाखण्डधर्मरूपप्रामाण्यत्वस्यैव मीमांसकमते अनुव्यवसायादिना ग्रहात, नतु प्रमेतरावृत्तित्वादिघटितस्य, तस्यैव प्रकृते विवक्षितत्वात् । स्पष्टार्थं स्थलान्तरं दर्शयति ( प्रामाण्याभावत्वेति )

[ग] परतः पक्षे ज्ञातएव ज्ञाने प्रामाण्यग्रहः, स्वतस्त्वे प्रामाण्यवत एव ज्ञानस्य ग्रहात् ।

---

[ ग ] अत्रच विशिष्टप्रामाण्यविषयकान्यज्ञाने प्रामाण्यत्वप्रामाण्याभावत्वादिघटकविशेष्यस्य विषयतया विशिष्टेपि विशेष्ये तदभावस्य नग्रासिद्धिसंभव इत्यस्वरसः ॥

इति श्रीमहामहोपाध्याय श्रीगदाधरभट्टाचार्यविरचिते

प्रामाण्यवादे

॥ द्वितीयविप्रतिपत्तिः ॥

अथ तृतीयाविप्रतिपत्तिः ।

[ म ] स्वाश्रयग्राहकेण गृह्यतएव न वा,

---

* मतत्रयसाधारणं लघुविप्रतिपत्त्यन्तरमाह ( स्वाश्रयेति ) स्वाश्रय ज्ञानविषयकग्रहेणैव विषयीक्रियते न वेत्येवकारव्यत्यासेन योजना एवकारश्च यावदर्थकः, स्वपदं सामान्यतः पक्षीभूतघटत्ववतीत्यादिपरं, तथाच तज्ज्ञानवृत्तिघटत्ववतिघटत्वप्रकारकत्वं स्वाश्रयज्ञानविषयकयावद्ग्रहप्रकारो न वेति फलितं । ज्ञानभेदेन घटत्ववतिघटत्वप्रकारत्वादेर्विभिन्नत्वे तु स्वाश्रयपदं पक्षीभूतप्रामाण्यव्यक्त्याश्रयपरं, तथाच तज्ज्ञानवृत्ति घटत्ववतिघटत्वप्रकारकत्वं तज्ज्ञानविषयकयावद्ग्रहप्रकारो न वेति फलितम् । इदं ज्ञानं प्रमा समर्थप्रवृत्तिजनकत्वादित्यादि नैयायिकसिद्धप्रामाण्यानुमितिमादाय विधौ सिद्धसाधनवारणाय यावदिति ग्रहविशेषणं । तदर्थश्च दीधितिकृन्मतोक्तरीत्याप्रथमविप्रतिपत्त्यनुसारेण बोध्यम् । प्रकारताच प्रथमविप्रतिपत्तौ नव्योक्तान्यतररूपाग्राह्या, नातस्तत्रोक्तार्थान्तरावकाशः । एवं इदं ज्ञानं निष्प्रकारकं, इदं ज्ञानं निर्विशेष्यकम्, इदं ज्ञानं प्रमात्वाभाववदित्यादिज्ञानलौकिकप्रत्यक्षमादाय गुरुमिश्रयोर्मते विधौ बाधवारणाय तत्प्रामाण्यग्रहप्रतिबन्धकीभूततत्प्रामाण्याश्रयविषयकग्रहाविशिष्टत्वेन ग्रहो विशेषनीयः । तत्पदं विशिष्यपक्षीभूत प्रामाण्यपरिचयाय, वैशिष्ट्यंच स्वक्षण-स्वाव्यहितोत्तरक्षणान्यतरक्षणावच्छेदेन एकात्मवृत्तित्वं । स्वपदंच ग्रहपरं । घटत्ववतिघटत्वप्रकारकत्वाश्रयज्ञान विषयकत्वंच तादृशज्ञानांशे लौकिकविषयताशून्यत्व- साक्षात्कारत्वविशिष्टविषयत्वोभया

---

* दीधितिकृता तृतीयविप्रतिपत्तेरव्याख्यातत्वात् , गदाधरभट्टाचार्यैरपि तद्व्याख्यातृभिस्तृतीयविप्रतिपत्तेरव्याख्यानाच्च , तृतीयविप्रतिपत्तेर्व्याख्यानरूपो मूलमथुरानाथीयग्रन्थएवात्र समगुद्रतेतिज्ञेयम् ।

इति - प्र . अनन्ताचार्यः ।

[मिथु]भाववत्त्वं । एवं पक्षे तज्ज्ञानविषयकत्वमपि तज्ज्ञानांशे तादृशोभयाभाववत्त्वं, तेन प्रमाण्यविषयकज्ञानस्योपनीतचाक्षुषमादाय न बाधः । भट्टमतसाधारण्याय उभयाभावानुधावनम् । नच गुरुनये तादृशविवक्षणम् व्यर्थं, तेनोपनीत चाक्षुषादेरनभ्युपगमादिति वाच्यम् । सर्वमते सर्वविवक्षासाफल्याभावेऽपि क्षतिविरहात् , यत्किञ्चिन्मते सार्थकत्वस्य कर्त्तव्यत्वात् , गुरुमतेऽप्युपनीतभानस्य लाघवेन ग्रहण-स्मरणात्मकैकज्ञानरूपतया तद्विवक्षणस्यावश्यकत्वाच्च । अतएव लौकिकविषयत्वस्यापि नाप्रसिद्धिः । सुरभि चन्दनमित्यादेः लाघवेण ग्रहण स्मरणात्मकैकज्ञानरूपतया तत्र सौरभं पश्यामीत्यनुव्यवसाय वारणाय वह्न्याद्यनुमितेरपि स्वांशेमानससाक्षात्काररूपतया तत्राभिवह्निं साक्षात्करोमीत्याद्यनुव्यवसायवारणाय तदभ्युपगमस्यावश्यकत्वात् । परन्तु तदन्मते साक्षात्कारत्वमिति परं विवादः । तादृशज्ञानांशे इत्यभावान्वयि, तेन तज्ज्ञानविषयकज्ञानस्य व्युदासः । तत्र च तादृज्ञानांशे तादृशोभयाभाववत्त्वविरहात् ।

नतु प्रथमविप्रतिपत्त्युक्तरीत्या ज्ञानपदजन्यशाब्दबोधं ज्ञानवानित्यनुमिति - स्मृत्यादिकं घटज्ञानपदादिजन्यशाब्दबोधं घटज्ञानवानित्याद्यनुमिति - स्मृत्यादिकंचादाय बाधो दुर्वारइतिचेत् । न - घटत्ववतिघटत्वप्रकारकज्ञाननिष्ठप्रामाण्याविषयकपरोक्षभिन्नत्वेन ग्रहविशेषणात् , तादृशग्रहश्च तादृशज्ञानसाक्षात्कारः तादृशज्ञानविषयकप्रामाण्यानुमित्यादिश्च । सिद्धसाधनवारणाय परोक्षेति, परोक्षत्वंच चाक्षुषादिभेदपंचकवज्ज्ञानत्वं, भट्टमतसाधारण्यायाविषयकान्तं परोक्षविशेषणं, शेषं प्रथमविप्रतिपत्तौ नव्यमतोक्तरीत्यावसेयम् ।

वस्तुतस्तु न ह्येकदा त्रिभिर्द्वाभ्यां वा विचारः, अतः प्रत्येकमतासाधारणं विप्रतिपत्तिद्वयमाह, ( स्वाश्रयग्राहकेत्यादि ) इदन्तु मिश्रमते । स्वाश्रयग्राहकेण - स्वाश्रयविषयकसाक्षात्कारेण, गृह्यतएव न वा - प्रकारीक्रियत एव न वेत्यर्थः । भिन्नक्रमस्यैवकारः स्वाश्रयविषयकसाक्षात्कारस्य यावत्त्वलाभाय । अन्यथा प्रामाण्यस्मृत्यादिकालीनानुव्यवसायेन नैय्यायिकमतेपि प्रामाण्यग्रहात् सिद्धसाधनापत्तेः, तथाच स्वाश्रयविषयकयावत्साक्षात्कारप्रकारतावत्त्वेति फलितम् । साक्षा-

त्कारश्च स्वाश्रयांशे संयुक्तसमवायजन्यत्वेन लौकिकत्वेनवा विशेषणीयः, तेन प्रामाण्याविषयकोपनीतभानमादाय नबाधः । तत्प्रामाण्यग्रहप्रतिबन्धकासमवहितत्वेन साक्षात्कारो विशेषणीयः, तेनेदं निष्प्रकारकं इत्यादिलौकिकप्रत्यक्षमादाय न बाधः । अनुव्यवसीयमानज्ञानप्रामाण्यमेव पक्षः, नातो बाधः । प्रकारता च ज्ञानत्वावच्छिन्नविशेष्यतानिरूपितत्वविशिष्ट प्रामाण्यत्वावच्छिन्नप्रकारता - घटत्वादिनिष्ठप्रकारतानिरूपितप्रकारतयोरन्यतरप्रकारतारूपा ग्राह्या । अन्यथा प्रमात्वकालीनत्वादिविषयकत्वेन कालिकादियत्किंचित्संबन्धेन प्रकारत्वत्वादियत्किंचिद्रूपेण वा प्रमात्वप्रकारकत्वेन चार्थान्तरापत्तेः । घटत्ववद्विशेष्यकत्वावच्छिन्नघटत्वप्रकारकत्वस्य केवलघटत्वप्रकारकत्वानतिरिक्ततया सिद्धसाधनापत्तेश्च । न्यायनयेप्यनुव्यवसाये घटत्वप्रकारकत्वादिभानाभ्युपगमात् इदं ज्ञानं, नवेति संशयोत्पत्त्या विधिकोटिनिराकरणानुपपत्तेश्च । यथाकथंचित् तत्सत्त्वेपि तादृशसंशयसंभवात् । एवमग्रिमविप्रतिपत्तिष्वपि बोध्यमित्येव सारम् ।

इति श्रीमथुरानाथतर्कवागीशविरचिते तत्त्वचिन्तामणिव्याख्याने प्रामाण्यवादे तृतीयविप्रतिपत्तिः ।

अथ चतुर्थविप्रतिपत्तिः ।

[म] स्वाश्रयेण गृह्यत एव नवेति प्रत्येकमेव वा ।

---

[दी] नहि त्रिभिरेकदाविवाद इत्यभिप्रेत्याह (स्वाश्रयेणेति) रीतिरु क्तैव । इति-अनेन प्रकारेण , प्रत्येकं विप्रतिपत्ति र्बोध्या । मिश्र मते स्वाश्रयानुव्यवसायेन *

---

[ग] ( नह्येकदेति ) तथाच मतत्रयसाधारणविधिकोटिप्र-यासोनर्थ इति भावः । नन्वत्र यावत्पदाभावात प्रामाण्याश्रयप्रामाण्यानुमित्यादिग्राह्यतया सिद्धसाधनं, यावत्त्वनिवेशे प्रामाण्यभानविरोधिदोषादिसमवहितस्वाश्रयेणाग्रहा द्बाध इत्यत आह ( रीतिरुक्तैवेति ) पूर्ववदेवकारबलादेव सामग्र्यां यावत्त्वलाभः, प्रामाण्यग्रहप्रतिबन्धकासमवहितत्वविवक्षयाच बाधः परिहरणीय इत्यर्थः । मिश्रमतेभट्टमतेच विप्रतिपत्तेरप्रदर्शनेन मूलस्य न्यूनतास्यादिति इति शब्दस्यैव तत्प्र दर्शकतामाह ( इति-अनेनप्रकारेणैवेति ) विशिष्य मिश्रादिमते विप्रति-पत्तिं स्वयं दर्शयति ( मिश्रेति ) ( स्वाश्रयानुव्यवसायेनेति ) ग्राह्यं न

---

* अत्रयद्यपि "स्वाश्रयग्राहकेणगृह्यत एवनवा" इतितृतीयविप्रतिपत्ति मथुरानाथेन प्रथमतोमतत्रयसाधारण विप्रतिपत्तित्वेन व्याख्यातापि तदनन्तरं 'वस्तुत' इत्यादिनामिश्रमतमात्रसाधारण विप्रतिपत्तितया व्याख्याता । उत्तरत्रच "स्वाश्रयेणगृह्यत एवनवा" इति विप्रतिपत्तिर्गुरुमतमात्रसाधारण विप्रतिपत्तित याचव्याख्यायि । अथापि "स्वाश्रयग्राहकेण" इत्यादि विप्रतिपत्ति र्मतत्रयसाधारण विप्रतिपत्तिरित्येवदीधितिकृतामभिमतम् । अतएव मूलेमिश्रमतमात्रसाधारण विप्रतिपत्तेरनभिधानात्स्वयमेव "मिश्रमतेस्वाश्रयानुव्यवसायेन यावद्भिर्वातैर्ग्राह्यं नवेति" इति तन्मतमात्रसाधारण विप्रतिपत्तिं प्रादर्शयत् । व्याख्यातञ्च गदाधरभट्टाचार्यैस्तथैव । एवञ्चतृतीयविप्रतिपत्ते र्मतत्रयसाधारणतया मतत्रयसाधारण विप्रतिपत्तौवक्तव्यांशानां प्रायशः पूर्वमेव निरूपिततया तृतीयविप्रतिपत्ते र्व्याख्यानमपि संगतंभवतीत्यवधेयम् ।

इति- प्र- अनन्ताचार्यः ।

[ग] येत्यग्रिमेणान्वयः । स्वाश्रयविषयकलौकिकप्रत्यक्षविषयो नवेत्यर्थः । उपनीतभानादिविषयत्वेन सिद्धसाधनवारणाय लौकिकप्रत्यक्षपर्यन्त-निवेशः । प्रमाविषयो घट इत्याद्युपनीतभानस्यापि घटाद्यंशे लौकिकत्वात्स्वाश्रयोपादानम् । तथासति स्वाश्रयांशे लौकिकत्वविवक्षया तद्वारणं बोध्यम् ।

नचैवमपि स्वाश्रयांशे लौकिकप्रामाण्योपनीतभानमादाय सिद्धसाधनं दुर्वारमेवेति वाच्यम् । एतदस्वरसेनैव द्वितीयकल्पानुसरणात् ।

अथवा स्वाश्रयानुव्यवसायग्राह्यत्वं - ज्ञानविषयत्वाप्रयोज्यमानसप्रकारताश्रयत्वं, प्रामाण्यांशे उपनीतभानीय तदीयविषयता उपनायकज्ञानविषयताप्रयोज्यैवेति नोक्तसिद्धसाधनम् । अभिधेयत्वादिसामान्यलक्षणाजन्यप्रत्यक्षविषयत्वेन सिद्धसाधनवारणाय प्रकारतानिवेशः । अभिधेयत्वादिना वस्त्वन्तरविषयकपरामर्शादिजन्यतद्रूपावच्छिन्नानुमित्यादिप्रकारतया तन्मते अर्थान्तरवारणाय मानसप्रवेशः । अनुपस्थितं प्रामाण्यं घटत्वप्रकारितात्वादिनापि न्यायमतेनानुव्यवसाये प्रकारः, अतो न निषेधसाध्ये बाधः । योगजज्ञानीयप्रकारितापि विशेषणज्ञानविषयताप्रयोज्यैवेति नतया सिद्धसाधनम् । तादृशप्रकारताचाभावत्वप्रतियोगित्वादौ न्यायमते प्रसिध्यति । तस्यानुपस्थितस्यैव प्रकारतायाः सिद्धान्तसिद्धत्वात् । तादृशप्रकारताविरहश्च घटादाविव सुलभः । प्रामाण्यज्ञानाजन्यप्रत्यक्षप्रकारत्वविवक्षणन्तु न साधु । परमते तद्भानासिद्धेः ।

नच प्रामाण्यं स्वपदेनोपादेयं, तथा च गुरुत्वादिप्रामाण्यादिज्ञानाजन्यप्रत्यक्षप्रकारत्वाभावस्य गुरुत्वादौ प्रसिध्या सामञ्जस्यमिति वाच्यम् । एतत्स्वपदार्थघटितविधिकोटेरेतद्घटिताभावेन सहाविरोधात् । न वा निरुक्तकोटिकोऽपि संशयः सम्भवति ।

नच स्वविषयकज्ञानाजन्यप्रत्यक्षप्रकारत्वाभाववद्वृत्तित्वं तद्भेदकूटरूपं स्वतस्त्वं पर्यवसानीयम्, तादृशस्वत्वरूपं तादृशभेदकूटाभावरूपं परतस्त्वं चास्माभिः, तच्च नानुपपत्तिरिति वाच्यं । तादृशस्वत्वेन प्रामाण्यमुपादाय तद्भेदकूटसाधने बाधात् । एतन्मते प्रामाण्यस्य

[दी] यावद्भिर्वा तैर्ग्राह्यं नवेति । शेषम्पूर्ववत् । भट्टमते प्रामाण्याविषयकत्वेन भट्टमतसिद्धं यत्तद्भिन्नयावद्विषयो नवेति । द्विधे ज्ञानत्वाशे निवेशस्यच तत्प्रामाण्याघटकधर्मान्तरे प्रसिद्धिः ।

---

[ग] स्वादिभेदोपादानासंभवाच्च । अप्रामाण्यादिभावोपादाने व सिद्ध साधनात् ।

यत्तु स्वाश्रयघटितसन्निकर्षप्रयोज्यविषयताकत्वं स्वाश्रयानुव्यवसायग्राह्यत्वमिति । तदसत् । न्यायमतेपि घटत्वप्रकारितात्वादिना प्रामाण्यस्य लौकिकसन्निकर्षाधीनभानविषयतयानिषेधसाधने बाधात्, इत्य लम्पल्लवितेन ।

( यावद्भिर्वातैरिति ) प्रामाण्यभानप्रतिबन्धकसमवधानानन्तरक्षणानुत्पन्नस्वाश्रयलौकिकप्रत्यक्षै यावद्भि ग्राह्यन्न वेत्यर्थः । उपदर्शितरीत्या सिद्धसाधनस्य वारणाय यावत्पदं । प्रामाण्यविषयकज्ञानोपनीतभानाग्राह्यतया बाधवारणाय लौकिकत्वनिवेशनं ( शेषं पूर्ववदिति ) प्रामाण्यभानप्रतिबन्धकसमवधानानन्तरक्षणानुत्पन्नत्वं निवेश्या प्रामाण्यभ्रमात्मकानुव्यवसायाग्राह्यत्वेनबाधो वारणीय इत्यर्थः ( प्रामाण्याविषयकत्वेनेति ) प्रामाण्यविषयकत्वेन भट्टमतसिद्धयावद्ग्राह्यत्वस्यसाध्यत्वे ज्ञाततालिङ्गकानुमिते नैय्यायिकासिद्धतया तन्मतसिद्धप्रामाण्यग्राहकमेव तन्मते यावदन्तर्गतं, तथाच यावद्ग्राह्यत्वाभावसाधने बाध इत्यभावद्वयगर्भता, तदुपादाने भट्टमतासिद्धानुव्यवसायस्य यावदन्तर्गततया-नाभावसाधने बाधः ।

यद्यपि प्रामाण्यविषयकानुमितित्वेन भट्टमतसिद्धो न्यायमतेनुव्यवसायोपीति निषेधद्वयानुपादानेपि सामञ्जस्यम्, तथापि व्यवसायसन्निहितज्ञानग्रहे प्रामाण्यविषयकत्वानुमितित्वभ्रमरूपता नभट्टाभ्युपगम्या, अपितूभयसिद्धकालान्तरीणानुमितौ व्यवसायसन्निहितत्वभ्रमरूपतैवेत्यस्यापि संभवात्, तथासति चानुव्यवसायस्योक्तरूपेणापि भट्टाभ्युपगतत्वासंभव इत्याशयेन निषेधद्वयनिवेशनं( ज्ञानत्वेति )ज्ञानत्वघटितप्रामाण्यमेव प्रामाण्याविषयकेति प्रामाण्यपदेन विवक्षितमित्याशयेन । याथार्थ्यमात्रविवक्षानुसारेण प्रामाण्यघटकघटत्वादिपरमादिपदम् ।

[म] यत्तु योगजमर्धसामान्यलक्षणप्रत्यासत्त्या स्वाश्रयप्रामाण्यं ते नैवगृह्यत इत्यंशतस्सिद्धसाधनमतोऽयोगजधर्माद्यजन्यत्वं विशेषण मिति । तन्न । परंप्रत्यसिद्धेः ।

---

[दी] ननु तद्वद्विशेष्यकत्वादेः प्रतिज्ञानं भिन्नत्वा त्तद्घटितप्रामाण्यस्यापि प्रतिज्ञानं भेदः । तथाच योगिज्ञानादिप्रामाण्यं तेनैवगृह्यत इति पूर्वपक्षे केषांचित्समाधानं दूषयितुमुपन्यस्यति ( यत्त्विति ) "योगजधर्माजन्ये" ति " जन्ये " ति च

---

[ ग ] वस्तुमात्रस्यैव प्रामाण्यघटकतया तदिति विशेषणम् ।

नचैवमपि मेयत्वादिमतीत्यादि प्रामाण्यं यत्र प्रकृतं तत्र तदघटकाप्रसिद्धिरिति वाच्यम् । तादृशप्रामाण्यघटकप्रमेयव्यक्तीनां भेदेन-तस्यापि भिन्नतया प्रत्येकं तदघटकस्य तत्र तत्प्रामाण्यविषयकयावद्विषयकत्वाभावस्यच्च प्रसिद्धेः ॥

ननु योगिज्ञानादिवृत्ते घटत्ववतीत्यादिप्रामाण्यस्य तदविषयक-ज्ञानान्तरेपि सत्त्वात् न यावत्स्वाश्रयग्राह्यत्वमिति सिद्धसाधनाप्रसक्त्या "यत्त्वि"त्यादिमूलासंगतिः । नच सर्वविषयकयोगिज्ञानादिमात्रविषयतदंकुरत्वादिरूपप्रकारघटितप्रामाण्येसिद्धसाधनवारणपरतया तत्सङ्गतिरिति वाच्यम् । प्रामाण्यत्वस्य सर्वप्रामाण्यसाधारणस्यैकस्याभावात् , घटत्ववति घटत्वप्रकारकत्वत्वादेरेव पक्षतावच्छेदकत्वात् , योगजधर्माद्यजन्यत्वविशेषणस्याव्यावर्तकत्वादित्याशंक्य ज्ञानव्यक्तिभेदेन प्रामाण्यभेद इति मतमालंब्य तत्संगमयति ( नन्वित्यादिना)(प्रतिज्ञानं भिन्नत्वादिति ) विशेष्यिताप्रकारितयोः स्वरूपसंबन्धात्मकत्वेन तज्ज्ञानस्वरूपत्वादितिभावः । ईश्वरज्ञानवृत्तिप्रामाण्ये तद्ग्राह्यंशतस्सिद्धसाधनं योगजधर्माद्यजन्यत्वस्य ज्ञानविशेषणतयापि दुर्वारमतोजन्यत्वरूप विशेषणान्तरमपि पूरयति ( जन्येतिचेति ) पक्षसंकोचं विना साध्य घटकस्वाश्रये उक्तविशेषणप्रवेशे योगिज्ञानवृत्तिप्रामाण्यस्य तादृशविशेषणाक्रान्तस्वाश्रयाप्रसिध्या साध्याप्रसिद्धिरिति मूलस्थविशेषणपदस्य -

[ म ] प्रामाण्यमात्रपक्षत्वे प्रामाण्यं स्वाश्रयेणगृह्यत एवेत्युद्दे श्यप्रतीतेरसिद्धेश्चनांशतस्सिद्धसाधनम् ।

---

[दी] पक्षविशेषणं बोध्यम् । स्वयं दूषणमुद्धरति (प्रामाण्येति) तद्व द्विशेष्यकत्वादेरननुगतत्वमतेपि तद्वद्विशेष्यकतात्वादिना अनुगते न पक्षत्वात्, पक्षतावच्छेदकावच्छेदेनच साध्य सिद्धेरुद्देश्यत्वान्नां शतस्सिद्धसाधनमित्यर्थः । निषेधसिद्धेः पक्षतावच्छेदकसामानाधि करण्यमात्रेणोद्देश्यत्वान्नांशतोबाधः ॥ ... ...

---

[ग] पक्षप्रविष्टज्ञानविशेषणपरत्वं स्पष्टयति ( पक्षविशेषणमिति ) प्रामाण्य मात्रेत्यादिग्रन्थस्य परकीयसिद्धसाधनप्रसक्तिदूषणपरत्वन्न सम्यक्, सामा नाधिकरण्यमात्रेण साध्यसाधनोद्देश्यतयापि तत्प्रसक्तेः, तत्पक्षावलम्बनेनैव विशेषणदानसंगतेश्च । स्वयमपि पक्षतावच्छेदकैक्येप्यंशतस्सिद्धसाधनं दोष इति प्राचीनमतानुसारेण पक्षविशेषणस्यानेकत्वोपात्तत्वादित्य तः पक्षविशेषणमनुपादाय स्वीयपूर्वपक्षसमाधानपरतया तत्संगमय ति ( स्वीयमिति ) दूषणं - सिद्धसाधनरूपं । ज्ञानव्यक्तिभेद भिन्न घटत्ववतीत्यादीनामननुगमेन पृथक्पृथक् पक्षत्वे पक्षतावच्छेदकैक्या- भावादवच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यतयापि न सिद्धसाधनपरि हार स्संभवतीत्याशंकां परिहरति ( तद्वदिति ) ( अनुगतेनेति ) वि- शेष्यितादेः ज्ञानादिस्वरूपत्वेप्यनुगतप्रतीतिनिर्वाहाय विशेष्यितात्वादी- नामनुगतानामतिरिक्तानामवश्योपगन्तव्यत्वादिति भावः । पक्षत्वात्- पक्षघटकत्वात् । पक्षतावच्छेदकैक्येपि तत्सामानाधिकरण्येन साध्य- सिद्धावेकदेशसिद्धिर्विरोधिन्येवेत्यत आह ( पक्षतावच्छेदकावच्छेदेने ति ) नांशतसिद्धसाधनं, दोष इति शेषः । ननु योगिज्ञानादिप्रमाण्य साधारणरूपेण पक्षत्वे उक्तरीत्यांशतस्सिद्धसाधनस्या दोषत्वेपि निषे धसाधने तत्रांशतोबाधात्तदनुपपत्तिरित्यत आह ( निषेधेति ) नांशतो बाधः, दूषणमिति शेषः । किञ्चिज्ज्ञानप्रामाण्यस्य परतस्त्वसिद्धौ याद्द- शकारणविरहान्न तत्र स्वतस्त्वं, ताद्दशकारणविरहादन्यत्रापि योगज

[दी] केचित्तु तद्वति तत्प्रकारकत्वस्य तदर्थभेदेन भिन्नत्वात् ,सर्वेषां विशिष्योपादानासंभवात् प्रमापदप्रवृत्तिनिमित्तत्वेन पक्षत्वं । तत्पदप्रवृत्तिनिमित्तश्च लाघवात्तद्वति तत्प्रकारकत्वमेवेति मूल एव व्यक्तं । तथाच सर्वविषयत्ववति सर्वविषयत्वप्रकारकत्व स्यस्ववृत्तेः योगिज्ञानेन ग्रहणादंशतस्सिद्धसाधनमित्याहुः ।

---

[ग ] धर्माद्यजन्यज्ञानेप्रामाण्यस्य नस्वतो ग्रहणसंभव इति सामानाधिकरण्यमात्रेण स्वतोग्राह्यत्वाभावसाधनेपि नैय्यायिकाभिमतसिद्धिरिति भावः। निश्राणां समानाकारक नानाज्ञानप्रामाण्यैक्येप्यंशतस्सिद्धसाधन प्रसंगसंगमनप्रकारमुपन्यस्यति ( केचित्त्विति ) ( सर्वेषां विशिष्यो । दानासंभवादिति ) घटत्वपटत्वादिघटितानन्तप्रामाण्यानां घटत्ववति घटत्वप्रकारकत्वत्वादिना सर्वज्ञानासंभवेन सर्व ह्येकदा स्वतस्त्वादिसाधनासंभवादित्यर्थः । ननु प्रमापदप्रवृत्तिनिमित्तत्वेन पक्षत्वेऽवच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यतया स्वयमंशतस्सिद्धसाधनपरिहरणस्य असंगतिः, विशेष्यावृत्त्यप्रकारकत्वादिरूपप्रामाण्ये स्वतोग्राह्यत्वस्यांशतोबाधादित्याशंक्य तस्य प्रमापदप्रवृत्तिनिमित्तत्वं निराकरोति ( तत्प्रवृत्तिनिमित्तश्चेति ) ( मूलएवेति ) " तद्वति तद्वैशिष्ट्यज्ञानत्वंवा प्रामाण्य " मित्याद्यग्रिमचिन्तामणिग्रन्थ एवेत्यर्थः । योगिज्ञानेन – ज्ञानमिदं सर्वविषयकमित्यादियोगिज्ञानादिनेत्यर्थः । ग्रहणात् – प्रामाण्यघटकसर्वान्तःपातित्वेन प्रकारतया विषयीकरणात् । ग्राह्यतायाः प्रकारतारूपत्वे सर्वत्ववति सर्वत्वप्रकारकत्वरूपप्रामाण्यस्य सर्वमित्याकारक स्वाश्रय यावज्ज्ञानाप्रकारतया न सिद्धसाधनप्रसक्तिरिति सर्वविषयकत्ववतीत्यादि प्रामाण्यानुसरणं ।

अत्रच साध्ये स्वपदेन विशिष्य घटत्ववतीत्यादिकमेवोपादेयम् , नतु प्रमापदप्रवृत्तिनिमित्तत्वेन । तदाश्रययावद्ग्राह्यत्वस्य क्वचिदपि प्रामाण्येऽसत्वात् । तथाचैकदा सकलप्रामाण्ये साध्यसाधनासंभव एतन्मतेप्यविशिष्टः । घटत्ववतीत्यादौ घटत्ववतीत्यादिप्रामाण्याश्रययावद्ग्राह्यत्वासत्त्वे नांशतो बाधश्च दुष्परिहारः । यत्किञ्चित्स्वाश्रयाग्राह्यं यद्यत्स्वं तत्तद्भेदकूटस्य सर्वसाधारणानुगतस्य साध्यत्वेच तादृशस्वपदेनाप्रामाण्यादिमात्रोपादाने सिद्धसाधनम्, प्रामाण्यस्याप्युपादाने बाधइत्यादिकमस्वर

सबीजम् । नच स्वयमपि घटत्ववतीत्यादिप्रामाण्यस्य ज्ञानव्यक्तिभेदेन भेदमुपगम्य योगजधर्माद्यजन्यत्वविशेषणेन परेषां सिद्धसाधनवारणस्य, घटत्ववतीत्यादिप्रामाण्यस्य अननुगतत्वमुपगम्यच पक्षतावच्छेदकैक्य-निर्वाहेण मणिकाराणां तद्वारणस्य च संगमितत्वादुक्तानुपपत्तिस्तुल्यैव, साध्येघटत्ववतीत्यादेरनुगतरूपेण निवेशे तदाश्रयग्रावद्ग्राह्यत्वस्य प्रत्येकं सर्वत्र प्रामाण्यव्यक्तौ बाधात्; तत्तद्व्यक्तित्वेन निवेशेंऽशतोबाधस्य-दुष्परिहरत्वादिति वाच्यम् । स्ववृत्तित्वग्राह्यत्वोभयसंबन्धेन ज्ञानवत्त्वस्य साध्यतया बाधानवकाशात । ज्ञानव्यक्तिभेदेनाभेदमभ्युपगच्छतां मिश्राणां मते उक्तसाध्योपगमे यत्किञ्चित्स्वाश्रयग्राह्यतया सिद्धसाधनस्य दुर्वारत्वात ।

इति श्री महामहोपाध्याय श्री गदाधरभट्टाचार्य विरचिते

प्रामाण्यवादे

## ।। चतुर्थीविप्रतिपत्तिः ।।



## ॥ अथ पंचमीविप्रतिपत्तिः ॥

### ॥ चिन्तामणिः ॥

यद्वा घटोयमिति ज्ञानप्रामाण्यम् एतज्ज्ञानग्राह्यं न वा । एतज्ज्ञानग्राहकमात्रग्राह्यं न वेति ।

---

### ॥ मथुरानाथीयम् ॥

* नन्विदमयुक्तं-यदि ज्ञानव्यक्तिभेदेन प्रामाण्यभेदः तदा साध्ये स्वपदस्य तत्तत्प्रामाण्यव्यक्तिपरत्वे कस्यापि साध्यस्य पक्षतावच्छेदकावच्छेदेनावृत्तेरंशतोबाधापत्तेः, सामान्यतो घटत्ववतिघटत्वप्रकारकत्वादिपरतायां तदाश्रयविषयकयावत्प्रत्यक्षविषयत्वस्य, कुत्राप्यभावाद्बाधापत्तिरित्यस्वरसादाह ( यद्वेति ) ( घटोयमिति ) ( ज्ञानप्रामाण्यमिति ) एतज्ज्ञानवृत्तिप्रामाण्यमित्यर्थः । ( एतज्ज्ञानग्राहकमात्रेति ) मात्रपदं कृत्स्नार्थकं, तथाचैतज्ज्ञानविषयकयावल्लौकिकप्रत्यक्षाप्रकारो न वेत्यर्थः । व्याख्याततत्त्वमेतत् ।

इति श्री मथुरानाथ तर्कवागीश विरचिते

तत्त्वचिन्तामणिव्याख्याने

प्रामाण्यवादे

॥ पंचमीविप्रतिपत्तिः ॥

---

* अत्रच शिरोमणिगदाधरभट्टाभ्या मस्या विप्रतिपत्तेरव्याख्यानान्मथुरानाथीयमेवात्रामुद्र्यतेति ज्ञेयम् ।

[ म ] तत्र: यत्रापि विशेष्यावृत्त्यप्रकारकत्वमगृहीतग्राहित्वं वा, सर्वधीयथार्थत्वपक्षे ऽनुभवत्वजातेरभावेनस्मरणान्यज्ञानत्वं विशिष्टज्ञानत्वं वा, प्रामाण्यं स्वस्य; न तेनैव नवा अनुव्यवसायेन ग्रहणयोग्यम् । विशेष्यावृत्त्यप्रकारकत्वादेर्विशेषणस्य प्रागनुपस्थितौ तद्वैशिष्ट्यस्य ज्ञातुमशक्यत्वात् ।

---

[ दी ] विशिष्टज्ञानत्वम् -- अगृहीतासंसर्गकधर्मधर्मिविषयकैकज्ञानत्वम् । प्राक्-पूर्वम् । अनुपस्थितौ-उपस्थिते स्तत्सामग्र्यावा विरहे ।

---

[ ग ] ननु -- " विशिष्टज्ञानत्वंवा प्रामाण्यं स्वस्य नतेनैव नवाऽनुव्यवसायेने " त्यादिमूलमसंगतम्, विशिष्टज्ञानत्वस्य सप्रकारकज्ञानत्वरूपस्य वैशिष्ट्यविषयकज्ञानत्वरूपस्यवा ज्ञानग्राहकसामग्र्या ग्रहे बाधकाभावात । पुरोवर्तिनि घटत्वप्रकारकत्वादे र्न्यायमतेप्यनुव्यवसायेन ग्रहणादित्याशङ्कां निरसितुं विशिष्टज्ञानत्वं व्याचष्टे ( विशिष्टज्ञानत्वमिति ) तत्र तद्विशिष्टज्ञानत्वमित्यर्थः । ( अगृहीतासंसर्गकेति ) तत्र धर्मिण्यगृहीतोऽगृह्यमाणः, संसर्गो यस्य-धर्मस्य, तद्धर्मिविषयकत्वेसति तद्धर्मविषयकज्ञानत्वमित्यर्थः । नायं घट इति यथार्थज्ञानस्य घटादिरूपधर्मिणि घटत्वादिविशिष्टबुद्धित्ववारणायाऽसंसर्गाग्रहनिवेशः । धर्मधर्मिभ्यां प्रत्येकमन्वितस्य विषयताद्वयस्य पृथक् पृथक् ज्ञानयोरप्यन्वयः संभवति, तथासति ज्ञानद्वयमपि धर्मधर्मिगोचरज्ञानेत्यनेन लभ्यते, अतएकपदं धर्मधर्मिविषयकत्वयो स्सामानाधिकरण्यलाभसम्पादकस्य एकस्मिन् ज्ञाने उभयान्वयतात्पर्यस्य लाभाय । प्राक्पदेनोपस्थितपदस्य समासे घटानधिकरणमित्यादौ घटाधिकरणभेदादिवत् पूर्वकालीनोपस्थिते र्विरहः प्रत्येतुं : शक्यते, नच सविवक्षितः, किन्तूपस्थितिरूपकारणाभावे पूर्वकालीनत्वमेव, : तादृशस्यैव कारणाभावस्योत्तरकाले कार्याभावनिर्वाहकत्वात्, अतोऽसमासं स्फुटयति ( प्राक्-पूर्वमिति ) " विशेषणस्य प्रागनुपस्थितौ तद्वैशिष्ट्यस्य ज्ञातुमशक्यत्वा " दिति मूलकृताभिधानं विशेषणज्ञानहेतुतानंगीकर्तृमीमांसकमते प्रामाण्यस्य नस्वतोग्रहदूषणक्षममित्युपस्थितिपदं न्यायमते यथाश्रुतार्थकतया, परमते तत्सामग्रीपरतया, व्याकुरुते ( अनुपस्थिताविति ) " तस्य

[म] नापि ज्ञानातीन्द्रियत्वे ज्ञानानुमित्या तद्गृह्यते । ज्ञानमात्रलिंगस्य प्राकट्यादेस्तद्व्यभिचारात् । नापि प्रमाहितज्ञातताविशेषात , तस्य प्रथमम् दुर्निरूपत्वात् । अन्यथा अप्रमाहितज्ञाततया अप्रामाण्य स्यापि स्वतोग्रहापत्तिरिति । तथापि तद्वतितत्प्रकारकज्ञानत्वम् तद्वतितद्वैशिष्ट्यज्ञानत्वं वा प्रामाण्यम् । तन्निश्चयादेव निष्कम्पव्यव

---

[दी] प्रमाहितत्वमेव विशेषः, प्रमाजन्यतावच्छेदकं ज्ञाततात्वव दवान्तरवैजात्यंवा, आद्ये ( तस्येति ) अन्त्ये प्रमया विजातीया ज्ञाततेवाऽ प्रमयापि विजातीया सा जनयितव्या । तथाच त तोऽप्रामाण्यस्यापि स्वतो ग्रहापत्तिरित्याह ( अन्यथेति ) वैशि- ष्ट्यं धर्मधर्मिभावो नतु समवायः, भट्टेन तस्य

---

[ग] प्रथमं दुर्निरूपत्वा"दिति मूले तत्पदस्य प्रमाजन्यज्ञाततानिष्ठवैजा त्यपरत्वे ज्ञाततात्वस्येव तद्व्याप्यवैजात्यस्यापि प्रथमंप्रत्यक्षेण सुग्रहतया- 'दुर्निरूपत्वा' दित्यसंगतं । प्रमाहितत्वपरत्वे प्रमात्वघटिततया प्रथमं दु र्निरूपत्वोपपत्तावपि प्रथमं तस्य सुग्रहत्वाप्रसक्त्या तस्यसुग्रहत्व इ- त्यर्थकस्याग्रिमस्य "अन्यथे" त्यस्यासंगतिः । अतोविशेषं वितर्क्य उभयं संगमयति ( प्रमाहितत्वमेवेत्यादिना ) विशेषः – प्रमात्वविशिष्टानु मापकतावच्छेदकोऽप्रमाहितज्ञातताव्यावृत्तो धर्मः । प्रमात्वविशिष्टानुमाप कतावच्छेदकवैजात्यरूपविशेषस्यसुग्रहत्वस्य अन्यथेत्येतदर्थस्याप्रमाहि तज्ञाततया प्रमात्वस्य स्वतो ग्रहणानापादकतया अन्यथेत्याद्यसंगति माशंक्य, प्रमाजन्यतावच्छेदकजाति विशेषस्वीकारस्य तुल्ययुक्त्या ऽप्रमाजन्यतावच्छेदकजाति प्रसञ्जकतया ऽप्रामाण्यस्यस्वतोग्राह्यत्व प्रसञ्जकत्वं दर्शयति ( प्रमयेति ) एवञ्चाप्रमाजन्यतावच्छेदकमिव प्रमा जन्यतावच्छेदकमपि ज्ञाततानिष्ठं वैजात्यं अनुपलंभबाधितमिति मू- लाशयः । घटत्वादिवैशिष्ट्यस्य तत्सामानाधिकरण्यरूपत्वे तदवगाहि त्वघटितं प्रामाण्यं नगुरुभट्टयोरनुमतमिति स्वयं वक्ष्यमाणतया वैशि ष्ट्यं व्याचष्टे( वैशिष्ट्यमिति )धर्मधर्मिभावः–धर्मत्वं धर्मित्वंच, तच्च तयो रपि विशिष्टबुद्धिविषयतयानुमतमिति न समवायपक्षकवक्ष्यमाणदो- षावसर इति भावः । तस्य–समवायस्य, अनभ्युपगमादित्यनेनान्वयः ।

[म] द्वारात, लाघवात्। नान्यद्वौरवात्। तच्च ज्ञानग्राहकसामग्री ग्राह्यमेव। तथाहि-विशेष्ये तद्धर्म्मवत्त्वं तद्धर्म्मप्रकारकत्वंच व्यवसाय स्यानुव्यवसायेनानुमित्या स्वप्रकाशेनवा गृह्यते विषयनिरूप्यं हि ज्ञानम्, अतो ज्ञानवित्तिवेद्यो विषय इति व्यवसाये भासमाने धर्म-धर्मिवत्ततद्वैशिष्ट्यमपि विषयः, व्यवसायरूपप्रत्यासत्तेस्तुल्यत्वात्

---

[दी] गुरुणा तदैन्द्रिय कत्वस्यानभ्युपगमात। अनुव्यवसायग्राह्यतां व्युत्पादयति (विषयनिरूप्यमिति) निरूपणं – साक्षात्कारः। एवंवित्तिरपि। ननु विषयनिरूप्यत्वेपि यावद्विषयनिरूप्यत्वा सिद्धौ न वैशिष्ट्यविषयतासिद्धिरतआह (व्यवसायेति)

---

[ग] (तदैन्द्रियकत्वस्यानभ्युपगमादिति) तथाच तदवगाहित्वं प्रत्यक्षप्रमायामसंभवीति भावः। धर्मधर्मिभावश्च न्यायमतेपि संबन्धप्रतियोगि त्वानुयोगित्वरूपो विशिष्टबुद्धिविषय इत्यवधेयम्। "विषयनिरूप्यंहि"त्या दिना विषयग्रहाधीनतया ज्ञानसाक्षात्कारे विषयभानं व्यवस्थापितम्, तावता ज्ञाततालिंगकानुमितौ नं विषयभानव्यवस्थितिः, नवा स्वप्रकाशरूपज्ञानप्रत्यक्षे, तस्य विषयग्रहात्मकस्वजन्यत्वेन तादृशव्याप्तिविषयत्वाभावात, अतोमिश्रमतपरतया तद्व्याचष्टे (अनुव्यवसायेति) 'विषयनिरूप्य' मित्यत्र निरूपणस्य, 'ज्ञानवित्ती' त्यत्र वित्तेश्च, ज्ञानसामान्य रूपत्वे विषयग्रहाधीन ज्ञानविषयो ज्ञानमित्यतो ज्ञानत्वव्यापकविषयता को विषयइति 'विषये' त्यादिमूलार्थः। तथाच – यद्यन्निरूप्यं योयज्ज्ञानजनकज्ञानविषयः, सतज्ज्ञानत्वव्यापकविषयताक इत्येवव्याप्तिर्मूलाभिप्रेता साचनोपपद्यते, वह्न्याद्यनुमिति जनकज्ञानविषय धूमादेर्वह्न्याद्यनुमितौ, शाब्दबोधजनकज्ञानविषयाकांक्षादेश्च शाब्दबोधे, भानानियमात्। तदोय यावज्ज्ञानजनकत्वनिवेशेचासिद्धिः, ज्ञानाद्यनुमित्यादौ विषयज्ञानस्याहेतुत्वात् अतोव्याचष्टे (निरूपणमिति) तथाच - यद्विषयकलौकिकप्रत्यक्षजनकज्ञानविषयो यः, सतद्विषयकलौकिक प्रत्यक्षत्वव्यापकविषयताक इत्येव व्याप्तिलाभान्नदोषः। घटाभावादि प्रत्यक्षजनकज्ञानविषय तत्प्रत्यक्षविषयघटादि रत्र दृष्टान्तः। (यावद्विषयनिरूप्यत्वासिद्धाविति) ससंबंधिकपदार्थं प्रत्यक्षंप्रति संबंधितावच्छेदक विशिष्ट-

[ म ] सम्बन्धितावच्छेदकरूपवत्तया

---

[ दी ] सामग्रीसत्त्वेन तस्याऽभिभानमित्यर्थः । नन्वेतावतापि समूहालंबनसाधारणमनुव्यवसायस्य वैशिष्ट्यविषयकत्वं सिद्धं, नतु तावतैव कृतकृत्यता । घटत्वप्रकारेण घटविषयतां विना घटे घटत्वप्रकारकमित्याकारकतानुपपत्ते रित्यतस्तथोपपादयति ( संबन्धितेति ) संबन्धितावच्छेदकं

---

[ग] ज्ञानत्वेन न सामान्यतो हेतुता, पटादिज्ञानात् घटाभावादिग्रहापत्तेः। नापि तत्तत्संबन्धिकप्रत्यक्षे तत्तद्विषयकज्ञानत्वेन, पटाभावत्वादिना घटाभावाद्यवगाहिभ्रमे व्यभिचारात । अपितु तत्तद्धर्मविशिष्टविशेषितसंबन्धिकप्रत्यक्षे तत्तद्धर्मविशिष्ट ज्ञानत्वेन । तथाच घटत्वादिविशिष्टविषयकज्ञानानुव्यवसायस्य घटत्वादिविशिष्टवैशिष्ट्यावगाहित्वसिद्धावेव तादृशप्रत्यक्षजनकतावच्छेदकविषयताकत्वरूप तादृशज्ञाननिरूपकत्वं तादृशज्ञानसाक्षात्कारत्व व्यापकविषयताकत्व साधकलिङ्गंवैशिष्ट्येसिद्धुमर्हति, तत्रैवच विवादेन वैशिष्ट्यरूपविषये तदसिद्धावित्यर्थः । प्रत्यासत्तिसत्वेपि कारणान्तरविरहेण तद्वतो विषयस्याभानसंभवात् प्रकृते ज्ञानप्रत्यासत्तिसत्त्वएव सकलतद्भासककारणसंभवाद्वैशिष्ट्यभानं दुर्वारमिति मूलभावमाविष्करोति ( सामग्रीति )

... ... ...

नच-तत्संसर्गकस्यापि ज्ञानस्य तदुपनायकत्वे तत्संसर्गकज्ञानात्संसर्गकमिव तत्प्रकारकं तद्विशेष्यकंच ज्ञानं स्यादिति वाच्यं । इष्टत्वात् । तस्य-वैशिष्ट्यस्य । एतावतापि-सामग्रीबलेनापि । (समूहालंबनेति ) घटत्ववैशिष्ट्यं पुरोवर्तिविषयकं ज्ञानमित्यादिबोधेत्यर्थः ( सिद्धमिति ) घटत्वादिविशिष्टघटादिविषयतापर्यन्तस्य उपनायकज्ञानजन्यता नवच्छेदकत्वादिति भावः । घटत्वादिना यत्किंचिद्घटादिमात्रविषयकज्ञाने घटत्वादेस्तद्विषयत्वरूपतत्संबन्धिताया अतिरिक्तवृत्तितया तत्संबन्धितावच्छेदकत्वं न संभवतीत्याशंक्य ज्ञानविषयतावच्छेदकत्वं प्रकारतारूपमतिप्रसक्तादावपिसंभवती त्याह ( संबन्धितेति ) व्यवसायरूपवर्तमानज्ञानमादायापि ज्ञायमाने संब

[ म ] ज्ञायमाने सम्बन्धिनि ससम्बन्धिकपदार्थ निरूपण मित्यनुव्यवसायस्य रजतत्वावच्छिन्नत्वेन पुरोवर्त्तिविषयत्वाच्च । अन्यथा पुरोवर्त्तिनं रजतंच जानामीति तदाकारःस्यात् नतु रजतत्वेन पुरोवर्तिनमिति ।

---

[ दी ] संबन्धिनि विशेषणम् । ज्ञायमाने - विषयीक्रियमाणे । निरूपणम् - साक्षात्कारः । अन्यथा - वस्तुतः पुरोवर्तिरजतविषयता स्यात् , नतु रजतत्वविशिष्टपुरोवर्तिविषयतेत्यर्थः ।

---

[ ग ] न्धिनीत्यादिनियमनिर्वाहान्न प्रकृतसिद्धिरित्यतो व्याचष्टे ( ज्ञायमान इति ) ( विषयीक्रियमाणइति ) स्वेन ससंबन्धिकविशेषणतयेत्यादिः । तेन व्यवसायविषयीकरणेन अयं घटो घटत्वप्रकारकंच ज्ञानमिति समूहालंबनसिद्ध्याच न चरितार्थता । अनुमित्यादावुक्तनियमाभावात् - ( निरूपणं-साक्षात्कारइति ) लौकिकप्रत्यक्षमित्यर्थः । ईदृशनियमस्या प्रयोजकतानिराकरणपरे " अन्यथे " त्यादिमूले " पुरोवर्तिनं रजतंच जानामीति तदाकारस्स्या " दिति न सङ्गच्छते, तादृशप्रत्यक्षे- संबन्धितावच्छेदकरजतत्वादिना संबन्धिनो भानादतस्तद्व्याचष्टे - ( अन्यथेति ) ( पुरोवर्तिरजतविषयतास्यादिति ) पुरोवर्तित्व रजतत्व- वैशिष्ट्य धर्मिज्ञानानां विशकलितानां ज्ञानप्रत्यक्षादौ भानं स्यादित्यर्थः । ( नतु रजतत्वविशिष्टपुरोवर्तिविषयतेति ) न रजतत्वेन पुरोवर्तिनं जानामीत्याकारकताप्रयोजकविशिष्टविषयतेत्यर्थः । तदाकारे- ज्ञाने धर्मिणि तृतीयार्थरजतत्वादि वैशिष्ट्यस्यावश्यम्भानादित्य- भिमानः । ... ... ...

नतु- ज्ञानादिप्रत्यक्षस्य विषयांशे निर्विकल्पकत्ववारणाय धर्मितावच्छेदकीभूतेदन्त्वादिप्रकारेणैव विशेष्यभानमुपेयं, नतु रज- तत्वादिप्रकारेणापि, रजतत्वेनेदं जानामीतिबुद्धौ ज्ञानांशे भासमान- प्रकारिताया एव तृतीयार्थत्वादिति रजतत्ववतीत्यादि प्रामाण्यभाना- सिद्धिः । ... ... ...

[ दी ] वस्तुतस्तु - येनरूपेण यस्योपनयस्तेनैव रूपेण तस्योपनीत भानम् । अतएव जातित्वेन गोत्वस्योपस्थितावपि जातिमानित्येव भानं, नतु गौरितीति ध्येयम् ।

---

[ ग ] नच-इदन्त्वादिरूप धर्मितावच्छेदकवैशिष्टयस्येव रजतत्वादिरूपप्रकारवैशिष्टयस्यापि विशेष्यिताविशेषणतापन्नविषयांशे सामग्रीबलात् भाने बाधकाभावः, रजतत्वादेर्यत्र धर्मितावच्छेदकता तत्र तथा तद्भानस्यावश्यकतया तत्स्थलीयविशेषणज्ञानादिघटितसामग्र्याः प्रकृतेप्यविशिष्टत्वादिति वाच्यम् । तत्र तद्धर्मितावच्छेदककव्यवसायस्यापि हेतुतया तदभावादेव तत्स्थलीयसामग्र्यभावात् । ... ...

नच- तादृशव्यवसायस्य तथात्वेन हेतुत्वमप्रामाणिकं, तद्धर्मावच्छिन्नविशेष्यताकस्येव तादृशस्यापि तद्धर्मप्रकारकज्ञानस्यतद्धर्मावच्छिन्नविशेष्यताकत्वेन प्रत्यक्षवारणाय विशेष्यतासंबन्धेन तत्प्रकारकप्रत्यक्षे तादात्म्यसंबन्धेन तादृशव्यवसायस्य विशिष्यहेतुताया आवश्यकत्वात् । तदवच्छिन्नविशेष्यताकत्वभानस्थलएवच तद्वद्विशेष्यताकत्वभानोपगमेन तज्ज्ञानेपि तादृशव्यवसायापेक्षणात् । घट इत्यादिव्यवसायस्य घटत्वप्रकारकत्वेनैव भानमुपेयते, नतु धर्मिविशेष्यताकत्वेनापीति न तस्य विशेषणानवच्छिन्नधर्मिविषयताप्रसङ्ग इत्युपदर्शितप्रामाण्यभानयुक्तेरकिंचित्करतया स्वयं विशेष्यिताविशेषणतया इदन्त्वादिना भासमाने धर्मिणि रजतत्वादिवैशिष्टयस्यापि भाने युक्त्यन्तरमाह ( वस्तुतस्त्विति ) ( येन रूपेण यस्योपनयइति ) येनरूपेण यस्योपनायकज्ञाने भानमित्यर्थः । उपनायकज्ञाने यदंशे यःप्रकारइतियावत् । (तेनैवरूपेण तस्योपनीतभानमिति ) तस्योपनीतभानं तत्प्रकारकमेवेत्यर्थः । तद्रूपं तदुपनीतभाने तदंशे प्रकारइति यावत् । तथाचायंघटइत्यादिज्ञानानुव्यवसाये विशेष्यिताप्रतियोगितया उपनीतमर्यादयाभासमानेधर्मिणि घटत्वादेः प्रकारत्वमावश्यकमिति भावः । उक्तनियमे युक्तिमाह ( अतएवेति ) ... ...

[ दी ] तदेवं मिश्रमतेनैवायंग्रन्थः, अतएव - " अतएवे " त्यादिक मपि संगच्छते ।

---

[ग] नच - तत्रोपस्थितजातित्वभाने बाधकाभावाज्जातिमानित्येव भानम् प्रकृतेच व्यवसायविशेषरूप कारणाभावरूपबाधकमुक्तमेवेति वाच्यम् । जातित्वभानेपि जातिमान् गौरिति द्विविधविषयताशालिबोधोत्पत्त्या स्वरूपतो गोत्वानुपस्थितिदशायां तादृशबोधानुत्पादएव कथितनियमावष्टंभाभिधानात् । ... ...

नच - तदा तादृशबोधोत्पत्तावपि कथितनियमाभंगेन उपष्टंभासंगतिरेव , फलीभूतज्ञानीयोपनीतवस्तुविषयताया उपनायकज्ञानविषयतावच्छेदकयावदवच्छिन्नत्वनियमस्यच जातित्वेन स्वरूपतश्च गोत्वोपस्थितिजन्यदर्शिताकार गोत्वोपनीतभानीयानवच्छिन्नविषयतायां - जातित्वावच्छिन्नत्वासत्त्वेनासम्भवादिति वाच्यम् । यद्धर्मप्रकारकयदीयविषयताशालिज्ञानाप्रयोज्या योपनीततद्विषयता सा तद्धर्मप्रकारिकेत्यादिनियमस्योपगन्तव्यत्वात् । ईदृशश्चनियमस्तद्धर्मानवच्छिन्नतद्विषयताकोपनीतभाने तद्धर्मानवच्छिन्नतद्विषयताकज्ञानत्वेनहेतुतयोपपादनीयः ।

नच - स्वरूपतस्तत्प्रकारकबुद्धौ स्वरूपतस्तद्विशेषणावगाहिज्ञानस्य क्लृप्तहेतुतयैवोक्तातिप्रसंगवारणसंभवे उपनीतभानस्थलीयोक्तनियमनिर्वाहककारणताकल्पनमयुक्तमितिवाच्यम् । मीमांसकैः - विशिष्टबुद्धौ विशेषणज्ञानकारणतानुपगमात् । ... ...

नच - तथाप्युक्तकार्यकारणभावमुपेक्ष्य लाघवेनोपनीतभानस्थलएव स्वरूपतस्तद्विषयकोपनीतभाने स्वरूपतस्तद्विषयकज्ञानस्य हेतुत्वकल्पनमुचितं, तावताच न प्रकृतनिर्वाहइतिवाच्यम् । एतदभिप्रायेणैव सिद्धान्ते स्वतः प्रामाण्यग्रहस्य खण्डनीयत्वात् । इदानीमापाततो दर्शितनियमावलंबनेन स्वतस्तद्ग्रहव्यवस्थापनात् । अतएव - तादृशग्रन्थस्य गुरुमतपरत्वाभावादेव ( अतएवेत्यादिकमपीति ) तेन ग्रन्थेन भ्रमानुव्यवसायस्य शुक्त्यादौधर्मिणि रजतत्वादिवै

[ दी ] अभ्युपेत्यतु मतत्रयसाधारण्येन व्याख्यायते :( विषयेत्यादि ) प्राकृतिकंहिज्ञाननिरूपणं स्वप्रकाशमर्यादया अन्यथावा जायमानं तद्विषयमविषयीकृत्यासंभवाद्विषयान्तरवद्विशेषाद्वैशिष्ट्यमपि विषयीकरोति ।

---

[ ग ] शिष्ट्यावगाहिताया अपि संभवेन रजतत्वादिना भासमानधर्मिविशेष्यकत्वावच्छेदेन तत्प्रकारकत्वावगाहिताया उपपादितत्वात् मिश्रमतएव तत्सम्भवादिति भावः । " निरूप्यैवेति " त्यस्य ग्रन्थस्य मतत्रय साधारण्ये विषयप्रकाधीनसाक्षात्कारत्वरूपपूर्वोपदर्शितविषयनिरूप्यत्वार्थकता न संभवति, गुरुमते ज्ञानप्रत्यक्षस्य व्यवसायरूपविषयग्रहरूपतया तदजन्यत्वात् । भट्टमते ज्ञानस्यातीन्द्रियत्वेन तत्साक्षात्काराप्रसिद्धेरिति विषयाविषयकज्ञानाविषयत्वमेव विषयनिरूप्यत्वं मिश्रैर्व्याख्यातम्, तत्र ज्ञानपदस्य ज्ञानसामान्यार्थकता न संभवति, ज्ञानस्य स्वविषयाविषयक शाब्दादिज्ञानविषयत्वादिति ज्ञानपदं ज्ञानवर्तमानताधीन प्रकृतज्ञानविषयताक ज्ञानपरं वाच्यम्, भट्टमते विषयोपरक्त ज्ञानविषयता ज्ञाततालिंगकानुमितौ ज्ञानवर्तमानताधीनैवेतिव्युत्पादितम् । एवंच स्वविषयाविषयक तादृशज्ञानाप्रसिद्ध्या तदविषयत्वरूप स्वविषयक तादृशज्ञानत्वव्यापकविषयविषयताकत्वसाधकहेत्वप्रसिद्धिः । स्वविषयाविषयकज्ञानावृत्ति ज्ञानवर्तमानताधीन स्वविषयताकत्वस्य हेतुत्वेपि तादृशस्वविषयताव्यापक स्वविषयविषयताकत्व रूपसाध्यप्रसिद्ध्यैव कृतकृत्यतया उक्तहेतुना तदनुमानमयुक्तम् । भट्टमते विषयोपहितज्ञानस्य ज्ञाततालिंगकानुमिति विषयत्वसिद्धावेव ज्ञानविषयतायाः ज्ञानवर्तमानताधीनतासिद्ध्या तदधीनविषयताघटित हेतोर्ज्ञाने प्रसिद्धिः,तत्साधकं चोक्तानुमानमेवेत्यन्योन्याश्रयश्चेति तादृशग्रन्थमन्यथाव्याचष्टे ( प्राकृतिकमिति ) सामग्रीविशेषस्वभावाद्विषयावगाहीत्यर्थः ।अन्यथा – अनुव्यवसायादिरूपतया । (विषयमविषयीकृत्यासंभवादिति ) विषयावगाहनं विनाऽसंभवज्ज्ञानविषयताकमित्यर्थः । विषयाविषयकत्व प्रसंजितज्ञानविषयकत्वाभावमितियावत्

[ दी ] अविशेषं व्युत्पादयति ( व्यवसायेति ) मिश्रमते ज्ञानलक्षणाप्रत्यासत्तेस्तुल्यत्वादित्यर्थः ।

गुरुनये व्यवसायस्वरूपे जनयितव्ये याप्रत्यासत्तिस्तस्या स्तुल्यत्वात् । घटघटत्वाभ्यामिव धर्मधर्मिभावेनापि समं सत्त्वा दित्यर्थः । भट्टनये व्यवसायस्वरूपे व्यवसायनिरूपकेवा घटघट

---

[ ग ] प्रकृतज्ञाने च विषयानुपहित ज्ञानभानप्रयोजक सामग्र्यजन्यत्वेसति विषयाविषयकत्वं ज्ञानविषयकत्वाभावा पादकं । एवंच विषयविषयकत्वसाधक तर्कप्रदर्शकंमूलमितिभावः । असंभवादित्यंतं 'विषयनिरूप्यंहि ज्ञान'मित्यस्यव्याख्या । अनुव्यवसायत्वेनाभिमते ज्ञाने नैयायिकानामपि वैशिष्ट्यातिरिक्त विषयभानस्य निर्विवादतया युक्तिपुरस्सरमपि ज्ञानवित्तौ विषयवेदनकथनं नप्राधान्येन तत्परम् , अपितु तद्धर्मधर्मिविषयकत्वस्य दृष्टान्तीकरणीयतया तन्नाविवादत्वाभायेत्र तदभिधान मिति सूचयितुं, अतोज्ञानवित्ति वेद्योविषय इत्येतन्नोपवर्णितं । भेदेसत्येव दृष्टान्ततेति मूलोक्त धर्मधर्मिणो विषयान्तरत्वेनाभिधानम् । भासकसामग्र्यविशेषेणैव दृष्टान्ततोपपद्यतइति तदविशेषरूपहेतुं पूरयति ( अविशेषादिति ) सामान्यतोभासक साम्यस्यहेतुत्वेनाभिधाने तद्विशेषाकांक्षायां व्यवसायेत्यादि ग्रन्थंयोजयति ( अविशेषमिति ) व्यवसायस्य ज्ञानप्रत्यासत्तिविधया विषयभासकता गुरुभट्टमतेनोपपद्यत इति तन्मते तादृशग्रन्थ मन्यथा व्याख्यास्यमानो मिश्रमते तादृशग्रन्थाश्रुतार्थ परतामाह ( मिश्रमतइति ) व्यवसायस्वरूपे जनयितव्ये व्यवसायस्वरूपज्ञानार्थं । याप्रत्यासत्तिः - योविषयभासकश्चक्षुरादि लौकिकसन्निकर्षः । तुल्यत्वात् - साधारणत्वात् । तदेवविवृणोति - ( घटेति ) गुरुमते समवायस्यातीन्द्रियतया वैशिष्ट्यपदं नतत्परं, नातिरिक्तवैशिष्ट्यपरं भट्टैनैवतदंगीकारादिति तस्य धर्मत्वधर्मित्वार्थकतामाह ( धर्मेति ) तादात्म्य स्वरूपार्थकत्वे वैयर्थ्यात् अर्थान्तरासम्भवएव तदौचित्यमित्याशयेनाह ( व्यवसायनिरूपकेति ) अथवा- विषयतासंबंधेन प्रमासाध्यक ज्ञाततालिंगक वक्ष्यमाणानुमाने ज्ञानभान नियामक ज्ञाततासंबन्धो व्यापकत्वं , नासौ विषये,

[ दी ] त्वादौ याप्रत्यासत्ति-स्तज्ज्ञाननियामकस्सबन्धस्तस्य वैशिष्ट्येपि तुल्यत्वादित्यर्थः । तथाहि-अयं घट इत्यादिप्राथमिकप्रत्यक्ष इव तज्जनितज्ञाततप्रत्यक्षेपि पुरोवर्तिनि घटत्वं भासते, तद्धेतोरिन्द्रियसन्निकर्षादेस्तदानीमपि सत्वात् ।

---

[ग] अपितु व्यापकतावच्छेदकत्वरूपसंबन्ध एवेति ज्ञाततापक्षकप्रमाजन्यत्वसाध्यकानुमाने ज्ञानस्यापि व्यापकतावच्छेदकतया तदभिप्रायेण ( व्यवसायस्वरूपइति ) विषयपक्षकानुमानाभिप्रायेण ( व्यवसायनिरूपकइति ) जन्यतासंबन्धस्य वृत्त्यनियामकतया व्यापकत्वाघटकत्वेन जन्यतायाएव साध्यत्वमित्यवधेयम् । संबन्धो ज्ञातताात्वस्य, तस्या वा लिंगस्य। सचाग्रे विशेषतो व्युत्पादयिष्यते । "व्यवसायरूपप्रत्यासत्ते" रित्यस्य विषयतारूपव्यवसायसंबन्धस्य वर्तमान-ज्ञानग्रहे विषभाननियामकस्य तुल्यत्वादिति मिश्रव्याख्यानं शुद्धेन-ज्ञानत्वेन घटत्वप्रकारकज्ञानत्वेनवा व्यापकताज्ञानात् घटविषयक-त्वोपरक्तज्ञानानुमितिमभ्युपगच्छतां तेषामेव युज्यते, व्यापकतावच्छेदककोटयप्रविष्टस्य विषयस्य विधेयतावच्छेदकतया भाने वर्त्तमानव्यवसायविषयताया एव नियामकत्वस्य तत्तद्विषयकव्यवसायोपलक्षितकालविशेषस्य ज्ञाततालिंगकपरामर्शेन तत्तद्विषयोपहितज्ञानानुमितिजनने सहकारित्वमित्याशयेन तैरंगीकारत् । अनेनतु ज्ञाततालिंगकपरामर्शे तथा स्वभावस्य प्रथमविप्रतिपत्तौ दूषितत्वादन्यथा तादृशग्रन्थो व्याख्यायते। अतएव वैशिष्ट्यपर्यन्तस्य विषयस्य-व्यापकतावच्छेदककोटिप्रविष्टत्वरूपो ज्ञातताात्वस्य ज्ञाततया वा संबन्धः घटत्ववैशिष्ट्यवद्धर्मिघटितप्रामाण्यप्रकारेण ज्ञानस्य साध्यतायामेवोपपद्यते, तथासतिच व्यभिचारवारणाय ज्ञाततायाघटवृत्तित्वमपि हेतौ निवेशनीयमित्याशयेन तत् ग्रहोपायमाह ( तथाहीत्यादिना ) ( तज्जनितज्ञाततप्रत्यक्षेपीति ) तादृशप्रत्यक्षजनिताया ज्ञातताया घटघटितेन्द्रियसन्निकर्षजनिते प्रत्यक्षेपीत्यर्थः । ( तदानीमपि सत्त्वादिति ) अन्यथा सन्निकर्षाभावेन ज्ञातताया एव प्रत्यक्षा

[ दी ] अतएव अप्रमापि प्रमेत्येव गृह्यते, प्राथमिकभ्रमहेतोर्दोषस्य ज्ञातताप्रत्यक्षदशायामपि सत्त्वात् । धर्मिणस्तदभाववत्त्वं नगृह्यते, तेनैव प्रतिबन्धात् । अतोऽप्रामाण्यग्राहकलिंगस्य तदभाववद्वृत्ति तत्प्रकारकज्ञाततात्वादेरग्रहान्न स्वतस्तद्ग्रहः ।

---

[ ग ] योगादिति भावः । अतएव--भ्रमविषयपुरोवर्त्तिनि घटत्वग्रहसंभवेन भ्रमजन्यघटत्वप्रकारकज्ञाततायामपि घटवृत्तित्वग्रहसंभवा त्तस्या-अपि प्रमाव्याप्यतावच्छेदकरूपेण ग्रहादेवेत्यर्थः । ( प्रमेत्येवेति ) क्वचित्प्रमेत्याकारकग्रहविषयइत्यर्थः । तादृशज्ञाने प्रमात्वघटकघटरूपविषयो न भासते, अपितु घटत्वेनाघटएवेति वस्तुप्रमाण्यानवगाहनात् अप्रमायां प्रामाण्यंगृह्यत इति नोक्तम् । प्रत्यक्षदशायां - प्रत्यक्षाव्यवहितपूर्वकाले । क्वचित् सत्त्वात् । वर्तमानज्ञानग्राहकपरामर्शस्योक्त स्वभावानुपगमे संवादीच्छादिलिंगकानुमितिसामग्र्यविलक्षणसामग्रीमात्रादेव प्रामाण्यभाने प्रामाण्यविषयकानुमिति सामग्रीसमशील-सामग्रीतोऽप्रामाण्यस्यापि सुग्रहतया तस्य न स्वतस्त्वं, अपितु प्रामाण्यस्यैवेति विशेषः कथमिति पक्षधराक्षेपमाक्षेप्तुमप्रामाण्यग्राहकालिंग दुर्ग्रहताम्नुपपादयति ( धर्मिणइति ) भ्रमविशेष्यस्याघटस्यापीत्यर्थः । तदभाववत्त्वं - घटत्वाभाववत्त्वम् । तेनैव-दोषेणैव । ( नस्वतस्तद्ग्रह इति ) तद्ग्रहस्या स्वतस्त्वमवादइत्यर्थः । क्वचिद्दोषनाशवशाद्धर्मिणस्त दभावग्रहेणाप्रामाण्यलिंगस्य ग्रहसंभवेपि अप्रामाण्यग्रहे अप्रामाण्यप्रयोजकसामग्रीविघटकदोषनाशापेक्षया परतस्त्वम्, प्रामाण्यग्रहेच न-स्वप्रयोजकप्रतिकूलापेक्षेति विशेषः । ... ...

यद्यपि - न्यायमतसिद्धसंवादीच्छादि लिंगकानुमितिसमशीलैव ज्ञाततालिंगकानुमितिरिति तया ग्रहेणचेत् स्वतोग्राह्यत्वं तदा न्यायमतसिद्धतादृशानुमित्याग्रहेण न तथात्वमिति विशेषोनोपपद्यत इति मिश्राणामाक्षेपो दुरुद्धरः, तथापि - भट्टमते व्यवसायेन द्वितीयक्षणे ज्ञाततायां जनितायां तृतीयक्षणे घटत्वप्रकारकत्वेन तत्प्रत्यक्षे

[ दी ] अयं घटो घटत्वेन ज्ञातइति प्रत्यक्षेत्र घटे ज्ञाततावत्त्वमिव ज्ञाततायां घटवृत्तित्वमपि भासते, स मानसंवित्संवेद्यत्वात, सामग्रीसत्त्वात । तथाचेयं ज्ञातता घटविशेष्यकघटत्वप्रकारकज्ञानसाध्या, घटवृत्तिघटत्वप्रकारकज्ञाततात्वात् , इत्यनुमित्या, या यद्वृत्तिर्यत्प्रकारिकाज्ञातता सा तद्विशेष्यक तत्प्रकारकज्ञानसाध्या, यथा - पटे पटत्वप्रकारकज्ञातता पटविशेष्यक पटत्वप्रकारकज्ञानसाध्येति सामान्यतोव्याप्त्या-विशेषतस्ताद्रूप्येण व्याप्त्यैववा घटे घटत्वप्रकारकज्ञानत्वं गृह्यते,

---

[ ग ] जायमाने घटवृत्तिताभानस्यावश्यकतया प्रमात्वव्याप्यतावच्छेदकप्रकारेण हेतुग्रहध्रौव्यम्, न तथा न्यायमते, संवादीच्छाया द्वितीयक्षणोत्पन्नाया घटत्वप्रकारकत्वेन प्रत्यक्षे घटविशेष्यकत्वरूप हेतुतावच्छेदककोटिप्रविष्टसंवादित्वस्य दुर्ग्रहत्वात : ज्ञानप्रत्यक्षस्येवेच्छादिप्रत्यक्षस्यापि तुल्ययुक्त्यातन्मतेविषयांशे तद्भस्वानवगाहित्वात । एतावतैव विशेषणप्रतभेदेन स्वतस्त्वपरतस्त्वरूपविशेषो दीधितिकाराभिमतः । ज्ञातताप्रकारेण भासमाने घटे घटत्वभानेपि ज्ञाततायां घटवृत्तित्वं नभातमिति कुतोदर्शितहेतुग्रहनैय्यत्यमिति शंकां परिहरति ( अयमिति ) ( सप्तानेति ) आधारत्वाधेयत्वयोरित्यादिः । भासकसामग्रीसमनैय्यत्यं विना भानसमनैय्यत्य मनुपपन्नमित्यतः प्रत्यक्षस्थले तदुभयभासकसामग्रीसमनैय्यत्यमाह ( सामग्रीति ) इत्यनुमित्या - एतादृशग्रन्थोपदर्शितपक्षसाध्यकानुमित्या । एतेनानुमितेः पञ्चम्यन्तार्थानुल्लेखित्वेपि नासंगतिः । "घटेघटत्वप्रकारकज्ञानत्वं गृह्यत" इत्यग्रिमेणान्वयः । अनुमितौ प्रयोजिकां व्याप्तिंदर्शयति (यायद्वृत्तिरिति) यत्त्वतत्त्वाननुगममाशंक्याह ( विशेषतइति )अस्यैव विवरणं ( ताद्रूप्येणेति ) घटवृत्तिघटत्वप्रकारकज्ञाततात्व घटविशेष्यकघटत्वप्रकारकज्ञानसाध्यता-वच्छेदकरूपेणेत्यर्थः। अत्रच दृष्टान्तः घटविशेष्यकघटत्वप्रकारकज्ञानान्तरजन्यज्ञातता। प्राथमिकघटत्वादिप्रकारकप्रमासाध्यत्वसाध्यकानुमितौच जन्मान्तरानुभूतव्याप्तिस्मरणमेवगतिः । एवञ्चापूर्वचैत्रत्वादिप्रकारघटित प्रामाण्य

[म] अत एवाप्रमापि प्रमेत्येव गृह्यते, अनुव्यवसायस्य भ्रमविषय वैशिष्ट्यविषयत्वात् । न च न प्रमाण्यं प्रथमतो ज्ञातमिति न तदारोपः स्यादितिवाच्यम् । प्रामाण्यस्य ज्ञानग्राहकसामग्रीग्राह्य त्वेन ज्ञानवित्तिवेद्यत्वात्, अभावप्रतीतौ प्रतियोगित्वाभावत्वयोरिव ।

---

[दी] अतो व्यवसायस्वरूपस्य ग्रहनियामको यत्संबन्धः सामान्यस्य विशेषस्यवा व्यापकतावच्छेदककोटिप्रविष्टत्वं, तस्य वैशिष्ट्ये प्यवैशिष्ट्यम् ॥ एवं घटो घटविशेष्यकघटत्वप्रकारकज्ञानविषयः, घटवृत्तिघटत्वप्रकारकज्ञाततावत्त्वादिति प्रमात्वानुमितौ घटघट त्वविषयकत्वे यन्निमित्तं व्यापकतावच्छेदककोटिप्रविष्टत्वं तत्तद्वै शिष्ट्येपीति ।

अभावत्वं -- भावव्यावृत्तो धर्मविशेषः ।

---

[ग] विषयकानुमित्यनुपपत्तिरेतन्मते दोषएव। अतीतानागतविषयकज्ञानेन ज्ञाततायाएवाजननात् । असन्निकृष्टविषयकानुमित्यादिना ज्ञातताजन नेपि तस्याः प्रत्यक्षासंभवात्। ज्ञानान्तरोपायाभावात्। लिंगज्ञानासं म्भवेन ज्ञानग्रहानुपपत्तिवत् । सामान्यस्य - यत्त्वतत्त्वघटितसा मान्यधर्मोपरक्तस्य । विशेषस्य - तादृशसामान्यधर्मानुपरक्तस्य । अ स्यच प्रविष्टत्वमित्यनेनाभिसंबन्धः । अवैशिष्ट्यं – तुल्यसत्त्वम् । ज्ञा तताक्लिंगकज्ञानसाध्यकानुमितिपक्षेपि "व्यवसायरूपे"त्यस्य व्यवसाय निरूपकार्थकतया व्याख्यामवलंब्य "व्यवसाये" त्यादिकं योजयति (एवमिति) एतन्मतेपि कथितदिशा सामान्यव्याप्तिर्विशेषव्याप्तिर्वानुमि तिप्रयोजिकास्वयमूह्या । द्रव्यादिषट्कान्योन्याभावरूपमभावत्वं – लौकिकप्रत्यक्षायोग्यं ज्ञानानुपनीतं न भासितुमीष्टे, अतस्तस्याज्ञानप्रा माण्यभाने दृष्टान्ततावरोधइत्याशंक्याह (अभावत्वमिति) (भावव्या वृत्तइति) प्रतियोगिनिरूपितइत्यर्थः । भावसाधारण्येपि प्रकृतसंगतेः यथाश्रुतासंगतेः । प्रतियोगिनिरूपितत्वंतु संबन्धतानिर्वाहकमिति । 'स्वरूपसंबन्धविशेष' इत्यत्रानुपदं वक्ष्यमाणे तदभिधानोपयोगः । घ टोनास्तीतिबुद्धौ प्रतियोगिनः संबन्धोभावांशे संबन्धतयैव भासते,

[ म ] तदभाववति तत्प्रकारकज्ञानत्वमप्रमाण्यं परतो ज्ञायते, तद भाववत्त्वस्य भ्रमानुल्लिखितत्वेनानुव्यवसायाविषयत्वात् । नचैवमनुव्यवसायस्य यावद् व्यवसायविषयविषयकत्वे भ्रान्त - भ्रान्तिज्ञसंकर इतिवाच्यम् ।

---

[ दी ] सच स्वरूपसंबन्धविशेषोखण्डोपाधिर्वेत्यन्यदेतत् । भ्रान्तम्--भ्रमः । भ्रान्तिज्ञं-भ्रमविषयकं ज्ञानं । संकरो भ्रमत्वेन । भ्रमज्ञानस्य भ्रमत्वापत्तिरित्यर्थः ।

---

[ग] ननु प्रकारतया, तस्य प्रकारत्वोपगमेपि तदनुगमाय तदंशेऽखण्डधर्मान्तरस्य प्रकारताया आवश्यकत्वेनाभावानुगमकाखण्डधर्मं स्वीकृत्य तस्यैवा भावांशे प्रकारतोपगम उचितइत्याशयेनाह ( अखण्डोपाधिर्वेति ) ( अन्यदेतदिति ) उभयथैवाज्ञातस्य प्रकारतासंभवादिति भावः । न्यायमतेपि विशेषणधियस्तत्तद्विशेषणभेदेन कारणताभेदादभा वत्वादिविशिष्टबुद्धौ तज्ज्ञानस्य कारणत्वाकल्पनादनुपस्थितस्य - तस्य प्रकारत्वोपपत्तिर्द्रष्टव्या । भ्रान्तिज्ञपुरुषमात्रस्य परमते भ्रान्ततया अभेदरूपस्तदुभयसंकरइष्टएवेत्यतो व्याचष्टे (भ्रान्तमित्यादि) (भ्रमइति) भ्रान्तपदस्य भावक्तान्तत्वादिति भावः । ( भ्रमविषयकमिति ) ज्ञाधातोर्विषयितार्थत्वादिति भावः । भ्रमरूपस्य व्यवसायतदनुव्यवसाययोरभेदरूप संकरस्यापादकं दुर्घटमिति सादृश्यमेव संकरपदेन विवक्षणीयम्, तथाच ज्ञानत्वादिना सादृश्यस्य इष्टत्वादापाद्यसादृश्यघटकधर्मं पूरयति ( संकरोभ्रमत्वेनेति ) तथाच भ्रमत्वापत्तावेव पर्यवसानात् तथैव व्याचष्टे ( भ्रमज्ञानस्येति ) भ्रमानुव्यवसायस्येत्यर्थः । अनुव्यवसाये यावद्व्यवसायविषयविषयकत्वरूपमूलोक्तापादकस्य ज्ञानान्तरे भ्रमत्वानापादकत्वात् । ... ...

एतेन - संकरापादनस्यानुव्यवसाये प्रवर्तकत्वापादनरूपतया व्याख्याय जनकज्ञाने विद्यमाने बाधावतारस्य प्रवृत्तिप्रतिबन्धकत्वमयुक्तमिति "तदवतारे तस्यैव प्रतिबन्धकत्वा"दिति सिद्धान्तोपरि अनुश

[अ] बाधानवतारदशायांतस्येष्टत्वात् । तदवतारे तस्यैव प्रतिबन्धकत्वात्, उपनायकभ्रान्तेरभावाच्च । अतएवान्यभ्रान्तिज्ञस्य न भ्रमः । अथ-तद्वत्त्वं न धर्मधर्मिवैशिष्ट्यमात्रम्, किन्तु तस्य विशेषणताविशेषः, सचव्यवसायेभासते, नानुव्यवसाये, मनसोर्बहिरस्वातन्त्र्यादिति चेन्न । व्यवसायोपनीतत्वेन विशेषणविशेष्ययोरिव विशेषणताविशेषस्यापि तद्विषयत्वात्, विशेषणतायानिराकरिष्यमाणत्वाच्च । एतेनास्वप्रकाशे न स्वतः प्रामाण्यग्रहः, धर्म्यग्रहे तद्धर्माग्रहात् ।

---

[दी] बाधानवतारदशाया मनुव्यवसायस्यविषये तद्वत्तानवगाहित्वमिष्यतएव, बाधावतारेतु यदि तत्र नतद्ग्रहः तदा तस्यैव प्रतिबन्धकत्वं वाच्यम्, अन्यथात्विष्टापत्तिरेव, उत्तरकालश्च घटत्वप्रकारकत्वादिना ज्ञानोपस्थितावपि न तथा ग्रहणं, उपनायकस्य व्यवसायस्य अभावादित्याह, (बाधानवतारइत्यादिना)

---

[ग] येन " उपनायकभ्रान्तेरभावाच्चे " ति फक्किकामवतार्य भ्रमस्यबाधरूपप्रतिबन्धकवशेना नुव्यवसाये वैशिष्ट्योपनायकत्वासंभवा न्नप्रवृत्त्यापादनमित्येतत्परतया मिश्राणां तद्व्याख्यानं कुसृष्टिरेवेति - सूचितम् । ... ... ...

स्वव्याख्यात भ्रमत्वापत्त्यनुसारेण "बाधानवतार" इत्यादि फक्किकाद्वयंव्याचष्टे ( बाधेति ) विषयेतद्वत्तावगाहित्वं - भ्रमविषये शुक्त्यादै रजतत्वाद्यवगाहित्वं । नतद्ग्रहः - निर्धर्मितावच्छेदकमपि तद्वत्त्वभानं । तस्यैव - बाधग्रहस्यैव । वाच्यं - समान विषयता मात्रेण तादृशभानेपि प्रतिबन्धकत्वं वाच्यं । अन्यथा - असमान प्रकारकत्वेनैव प्रतिबन्धकत्वे । निर्धर्मितावच्छेदक तद्वत्त्वभानेन भ्रमत्वे - इष्टापत्तिः । इदमधिकंमूलस्य न्यूनताभंगायाभिहितं । उत्तरकालं- बाधनाशोत्तरं । ज्ञानोपस्थितावपि - भ्रमरूप व्यवसायोपस्थित्या तदुपनीतभानेपि । नतथाग्रहणं - नतद्विषयेशुक्त्यादौरजतत्वादिमत्वग्रहणं

[ म ] शब्दगन्धवद्योग्यत्वा त्तद्ग्रहेपि ज्ञानं प्रमाण मिति धी र्नस्यात् । स्वप्रकाशेपि स्वमात्रसाक्षिणः स्वधर्म ग्रहेऽसामर्थ्यात् । सामर्थ्येवाऽप्रामाण्यमपि गृह्णीयात् ।

---

[टी] (योग्यत्वादिति) स्वप्रकाशनयेज्ञानस्य स्वसामग्रीबलात् स्व-स्वधर्मस्वविषयग्राहित्ववत् अस्वप्रकाशेपि तत एव तस्यस्व-धर्मग्राहकत्वोपगमेपीत्यर्थः । अप्रामाण्यं – अगृहीत भेदज्ञानद्वयत्वा दिरूपं । ( स्वविषयनिश्चयार्थमिति ) निश्चितप्रामाण्यस्यैव ज्ञानस्य विषयनिश्चयरूपत्वादितिभावः ।

---

[ग] व्यवसायासत्वे विषयाभावेन व्यवसायस्यैव भानासंभवा त्तद्विषये रजतत्वादिभानाप्रसक्तेः उपनीतभानसंपादक व्यवसायोपस्थिते राधिकाया अभिधानम् । ... ... ...

ननु - " शब्दगन्धवद्योग्यत्वात्तद्ग्रहेपी " तिमूलमसङ्गतम्, श-ब्दगन्धादौ तद्ग्रहपूर्वं सन्निकर्षसत्त्वात्, प्रकृतेच व्यवसायपूर्वं त-द्धति धर्मे तदघटितेन्द्रियसन्निकर्षासत्वात्, तदसत्वेच योग्यताया अ-किञ्चित्करत्वादित्याशंकान्निरस्यति ( स्वप्रकाशनयइति ) ( स्वस्वधर्म-स्वविषयग्राहित्ववदिति ) तथाच - यथा तन्मते विषयग्रहएव पूर्व काले तत्र सन्निकर्षापेक्षा, नतु - स्वस्यस्वधर्मस्यवा गृहे, स्वोत्पादकसा मग्र्याएव तद्भासकत्वात्, तथात्र स्वप्रकाशमतेपि स्वधर्मग्रहे नस-न्निकर्षापेक्षा, अपितु विषयग्रहएवेतिभावः । ततएव - स्वसामग्रीब लादेव । ग्रहासिद्धावेव ग्राह्यस्य योग्यतासिद्धे स्तद्बला त्रविवादवि-षयग्रहानिर्वाह इत्यतो " ग्रहेपीति " मूलं ग्रहोपगमपरतया वर्णितम् ।

गुरुमते व्यधिकरणप्रकारकत्वरूपभ्रमत्वस्य ज्ञानधर्मत्वाभावात् " सामर्थ्येवा ऽप्रामाण्यमपि गृह्णीया " दिति मूलमसंगतमतो व्याचष्टे अप्रामाण्यमिति )

[ प्र ] परप्रकाशे लिंगेन मनसावा जायमानं ज्ञानं न भ्रमव्यावृत्तं प्रामाण्यं गृह्णीयात, व्यभिचारात् । नच-यत्रयदस्ति तत्र तद्गृह्यते । अप्रामाण्यस्यापि स्वतोग्रहापत्तेः अनुव्यवसायस्या नुमितेर्वा विषयाजन्यत्वाच्चेतिनिरस्तं । तद्वतितत्प्रकारकज्ञानत्वं तद्वतितद्वैशिष्ट्यज्ञानत्वंवा प्रामाण्यं व्यवसायस्येति स्वेनानुव्यवसायेना नुमित्यावातद्ग्रहात् । तद्विषयत्वस्य तत्प्रकारकत्वस्यच ज्ञानग्राहकसामग्री ग्राह्यत्वात् । यद्दिच प्रामाण्यम्परतोज्ञायेत, तदा ऽ प्रामाण्यज्ञानेपि तदनुमापकलिंगपक्षव्याप्त्यादिज्ञानेषुच स्वविषयनिश्चयार्थं प्रामाण्यस्य परतोज्ञेयत्वे फलमुखी कारणमुखी चानवस्था स्यादिति प्रामाण्यं न ज्ञायेतैवेति परिशेषादपि स्वतः प्रामाण्यग्रहः ।

इति पूर्वः पक्षः ।

---

[ दी ] ( नज्ञायतैवेति ) तथाच अर्थनिश्चयाधीना निष्कंपप्रवृत्तिर्नस्या दितिभावः । परिशेषः – अन्यथो पपत्तिविरहः ।

---

[ ग ] अनवस्थायां प्रामाण्यं नज्ञायतैवेत्यत्रेष्टापत्तिशंकान्निरस्यति ( तथाचेति ) प्रामाण्यस्य स्वतो ग्राह्यत्वे परतोग्राह्यत्वेसति ग्राह्यत्वरूपपरिशेषस्य हेतुत्वन्नसंभवति, मीमांसकैरप्यनुमित्यादिग्राह्यत्वरूपस्य परतो ग्राह्यत्वस्य प्रामाण्येऽभ्युपगमादसिद्धे रतः परिशेषं व्याचष्टे ( परिशेषइति ) अन्यथोपपत्तिविरहः - स्वतो ग्रहं विना ग्रहानुपपत्तिः । साच तर्करूपा परमते प्रामाण्यान्तरम् ।

इति श्री महामहोपाध्याय गदाधरभट्टाचार्य विरचिते

प्रामाण्यवादे

॥ पूर्वःपक्षः ॥

## अथ सिद्धान्तः ।

[म] सिद्धान्तस्तु — प्रामाण्यस्य स्वतोग्रहेऽनभ्यासदशोत्पन्नज्ञाने तत्संशयोनस्यात् । ज्ञानग्रहे प्रामाण्यनिश्चयात् । अनिश्चयेवा नस्वतःप्रामाण्यग्रहः । ज्ञानाग्रहे धर्मिज्ञानाभावात् न संशयः ।

ननु- कोटिस्मरणादिना संशयपूर्वक्षणे व्यवसायविनाशात्तद्विशेष्यकोमानस स्संशयइति चेत् । न । ज्ञानोपनीते व्यवसाये प्रामाण्यसंशयात् ।

ननु - धर्मिज्ञानं नसंशयहेतुः, कोटिज्ञान विशेषदर्शन धर्मीन्द्रियसन्निकर्षा त्प्रामाण्यसंशयरूपएव ज्ञानग्रह उत्पद्यत इतिचेत् । न । ज्ञानातीन्द्रियत्वे तज्ज्ञानंविना तद्धर्मिकमानससंशयानुपपत्तिः, लिंगंच नसंशयजनकं । तस्य निश्चायकत्वात् । ज्ञानस्यमानसत्वेच प्रामाण्यज्ञानवत्

---

[दी] लिंगं-लिंगनिश्चयः । सचप्रकृतेभवतामस्त्येवेतिभावः । प्रामाण्यस्य ज्ञानं-निश्चयः ।

---

[ग] सन्दिग्धलिङ्गस्य संशायकतया "लिङ्गञ्च न संशयजनक" मिति मूलासंगतिरतो व्याचष्टे ( लिङ्गमिति ) प्रकृते लिङ्गसंशयादेव प्रामाण्यसंशयोभविष्यतीत्याशंकां निरस्यति ( सचेति ) लिंगनिश्चयश्चेत्यर्थः । ( भवतामस्त्येवेति ) प्रत्यक्षप्रमाणस्य तन्निश्चायकत्वात्, अन्यथा ज्ञानानुमितेरयोगादितिभावः । प्रामाण्यसंशयस्य प्रामाण्यसंशयाप्रतिबन्धकतया प्रामाण्यज्ञानसामान्यस्य तत्संशयप्रतिबन्धकत्वे दृष्टान्तत्वासंभवात् "ज्ञानव" दित्यत्र ज्ञानपदं निश्चयपरतयाव्याचष्टे ( प्रामाण्यस्य ज्ञानंनिश्चयइति) "तन्निश्चायकत्वा" दित्यग्रिमतत्पदेन प्रामाण्यं परामृश्यत इत्याविष्कर्तुं प्रमाण्यस्येति विगृह्यधृतम् ।

यत्तु- प्रामाण्यज्ञानंनिश्चयइतिलेखने ज्ञानान्तसमुदायस्य विषयाविशेषितनिश्चयार्थकत्वासंभवादसङ्गतिः, प्रामाण्यज्ञानं — प्रामाण्यनिश्चयइतिव्याख्यानेऽक्षराधिक्यम् , ज्ञानं-निश्चयइतिव्याख्याने "ज्ञानस्येति" ज्ञानपदव्याख्यानंवदमितिशंकासंभवइति प्रामाण्यस्य ज्ञानमितिव्याख्यातमिति । तन्न । ज्ञानवत् - निश्चयवदितिव्याख्येयापेक्षाया निर्बीजतापातात् ।

[ म ] तत्सामग्र्यपिसंशय प्रतिबंधिका तन्निश्चायकत्वात् । अन्यथा विशेषदर्शनकालेऽपि संशयापत्तेः ।

---

[ दी ] अन्यथा -- यन्निश्चयस्य यत्र प्रतिबन्धकत्वं तन्निश्चयसामग्र्यास्तत्राप्रतिबन्धकत्वे । विशेषदर्शनस्य - विशेष निश्चयस्य, उत्पत्तिकाले संशयोपत्तेः ।

---

[ ग ] मूले - तत्सामग्र्यपि-ज्ञानमानससामग्र्यपि ।प्रमाण्यस्य संशय प्रतिबन्धिकास्यात् तस्यास्तन्मतेनिश्चायकत्वात् प्रामाण्यनिश्चयसामग्रीत्वादित्यर्थः । यन्निश्चयोयत्संशयप्रतिबन्धकस्तन्निश्चयसामग्र्या अपितत्संशयप्रतिबन्धकत्वनियमादिभावः । "अन्यथे"तिमूलस्य-तन्निश्चय सामग्र्या स्तत्संशयाप्रतिबन्धकत्वे इत्यर्थकतायामसंगतिः, विशेषपदस्य, व्यावर्तकसामान्यपरत्वेन व्याख्येयतया एककोटिव्याप्यदर्शनाद्युत्पत्तिकालेसंशयापत्ते रेककोटि निश्चयसामग्र्यास्संशयाप्रतिबन्धकत्वापादककत्वलाभप्रसंगात् , तत्रच तस्य बाधितत्वा दतो " यन्निश्चय" इत्यादि वर्णित भावार्थ विपरीतार्थकतया ऽन्यथेतिव्याचष्टे (अन्यथेति) आनुमानिकादि विरोधिनिश्चयदशायामपि संशयस्य अनिष्टतया दर्शनपदस्य न साक्षात्कारपरता, संशयकालेच संशयापत्त्ययोगा न्न ज्ञानसामान्यपरतापि, संभवतीति तन्निश्चयसामान्यपरतया व्याचष्टे (विशेषेति) व्यावर्तकधर्मदर्शनानंतरक्षणे तत्प्रतिबंधकतयैव संशयापत्त्ययोगात् कालपदमुत्पत्ति विशिष्टकालपरतया व्याचष्टे ( उत्पत्तीति ) विशेषपदस्य निश्चयव्याख्यात मेककोटिव्याप्यपरत्वंनसम्यक्, व्याप्यदर्शनोत्पत्तिकाले संशयानुत्पादानुरोधेन कोटिनिश्चयसामग्र्याः प्रतिबन्धकत्वस्य प्रकृतस्या सिद्धेः, तत्पूर्व कोटिनिश्चयसामग्र्याअभावात् , प्रतिबन्धकाभावस्य कार्यसहभावेन हेतुताया स्सामग्रीप्रतिबन्धकतावादिना नभ्युपगमात , तथासति व्याप्यदर्शन प्रतिबन्धकतयैव तदुत्पत्तिकाले संशयवारणसंभवात , सामग्रीप्रतिबन्धकतायानितरामसिद्धेश्च ।

[ग] यत्तु- विशेषदर्शनस्य निर्णयसामाग्रीत्वेनैव प्रतिबन्धकता, नतुतत्वेन, आलोकसमवधानादिघटितसामग्र्या असंग्रहात् , निर्णयसामग्रीत्वस्यच निर्णयाव्यवहितप्राक्क्षणवैशिष्ट्यस्वरूपस्य सर्वत्रानुगतत्वात् निर्णयसामग्र्यभावस्यच कार्यसहभावेन हेतुत्वे कोटिस्मरणसत्वेचक्षुस्संयोगादिसमवधानद्वितीयक्षणइव प्रथमक्षणेपि संशयोनस्यादितितुनदोषम् । तदानीं संशयानुत्पत्तेरिष्टत्वात् । यदिच कदाचिच्चक्षुस्संयोगाद्युत्पत्तिकाले संशयोत्पत्ति रनुभूयते तदा चक्षुर्मनोर्योगाभावेन तदनन्तरक्षणे निर्णयएव नोत्पद्यते , अपितु क्षणैकव्यवधानेनेति कल्पनात् निर्णयत्वस्य संशयान्यत्व निर्वाह्यतया संशयानुत्पादाधीन तादृशप्रतिबन्धकसमवधानं नसंशयानुत्पादप्रयोजकम् भवितुमर्हति - परस्पराश्रयादिति दूषणन्तु "अथे" त्यादिनामणिकृतैवशंकिष्यते। कोटिभासकसन्निकर्षाद्यसत्वेपि व्याप्यदर्शनस्या नुमित्युत्पादकतया निश्चयसामग्रीत्वं वस्तुतो विशेषदर्शनकाले उपनायकज्ञानघटिता प्रत्यक्षात्मककोटिनिश्चयसामग्री नियतैव । ... ...

एतेन व्याप्तिविशिष्टवत्तानिश्चयस्या नुमितिसामग्रीत्वेपि ज्ञानद्वयादिरूपं पुरुषत्वव्याप्यकरादिमांश्चाय मितिज्ञानं नन्यायमतेपुरुषत्वनिश्चयसामग्रीति तस्य प्रतिबन्धकत्वं स्वातन्त्र्येणावश्यं कल्पनीयं, तत्प्रतिबन्धकतावच्छेदकं निश्चितव्याप्तिकधर्मवत्ताज्ञानत्वं व्याप्तिविशिष्टवत्ताज्ञानसाधारण मेवेति विशेषदर्शनस्य न सामग्रीत्वेन प्रतिबन्धकता । नचज्ञानद्वयादिकं नसंशयविरोधीति युक्तम् । अवच्छेदकधर्मदर्शनस्य ज्ञानद्वयादिरूपस्य व्याप्तिसंसर्गकज्ञानघटितस्यप्रति बन्धकताया मविवादेन व्याप्तिप्रकारकज्ञानघटितज्ञानद्वयादेस्तथात्वेविवादायोगात् । अथ-भवतुज्ञानद्वयादिरूपं विशेषदर्शनं दर्शितविशिष्टधीसाधारणरूपेणस्वतः प्रतिबन्धकम् । तथाप्यालोकसमवधानदूरत्वाद्यभावघटितसामग्र्या निर्णयसामग्रीत्वेन प्रतिबन्धकतायाः क्लृप्तत्वात् । तद्रूपाक्रान्तविशिष्टज्ञानमपि सामग्रीविधयापि प्रतिबन्धकमेवेतिचेत्। अस्त्वेवं । तथापि विशेषदर्शनस्य स्वतःप्रतिबन्धकत्वेवतदुत्पत्तिकाले संशयवारणसंभवात् , सामग्रीप्रतिबन्धकतायां तदुपष्टंभकत्वासिद्धेरिति-

[ दी ] विशेषश्च तदभावादिरूपः परामर्शे विवेचयिष्यते। नच-कार्य कालवृत्तित्वेन विशेषदर्शनाभावस्य हेतुत्वोपगमेनसामञ्जस्ये तत्सा मग्र्याः प्रतिबन्धकत्वेमानाभावइतिवाच्यं । कारणतावच्छेदकवि-शिष्टकारणसत्वस्य कार्योत्पत्तिनियामकतायाः संप्रदायसिद्धत्वात् ।

---

[ग] परास्तं । एवं पटादिप्रत्यक्षेच्छाविशिष्टतत्प्रत्यक्ष सामग्रीसत्वे घटादि-व्याप्यवत्ताज्ञानस्य सत्वेऽधकारेघटादिसंशयापत्ति रनुमितिसामग्र्यसत्वा दित्यपि परास्तमिति

तन्न । आलोकसमवधानादिघटितसामग्र्युत्तरकाले संश-यस्य कोटिनिश्चयाभावस्य कार्यसहभावेन हेतुतयैववारणसंभवात् , तदुत्पत्तिकाले संशयस्यचेष्टत्वात् , विशेषदर्शनोत्पत्तिकालेसंशयवार–णाय तस्यतत्त्वेनैव प्रतिबन्धकतायालाघवेनौचित्यात । व्याप्यतावच्छेद कधर्मसम्बन्धादिभिन्न नानाविध व्याप्तिविषयक ज्ञानानां निश्चयसा-मग्रीत्वेनानुगमस्य लाघवादेकप्रतिबन्धकत्वमितिचेत , तेषां केनरू-पेण हेतुता । न तावदननुगततद्रूपैः । व्यभिचारात् । नसंशयवि_रोधित्वेनानुगतेन । तथासति निश्चयोत्पादकत्वेन संशयविरोधित्वेऽन्यो–न्याश्रयात् , अव्यवहितपूर्वत्वादेरनुगतस्यदुर्वचत्वाच्च ।

विशेषदर्शनकाले - एकतरकोटिनिश्चयकालइति प्राचीनव्याख्यान-मपिनसाधु, उदक्षरत्वात , व्यावर्तकमात्रस्यैव विशेषपदार्थत्वात् ।

व्याप्यदर्शनाद्युत्पत्तिकालेपि संशयस्य तत्सामग्रीप्रतिबन्धकत यैववारणीयत्वात् ततसामग्र्याअप्रतिबन्धकत्वे तदुत्पत्ति कालेसंशयापत्ते रप्रदर्शनेन्यूनताचस्यादतोव्यावर्त्तकसामान्यपरता मेवाह (विशेषश्चेति)तद भावादीत्यादिना तदभावव्याप्यतदभावावच्छेदकधर्मपरिग्रहः। विशेषदर्श नाभावस्य–व्यावर्तकधर्मदर्शनाभावस्य। सामञ्जस्ये–कोटिनिश्चयस्य,व्याप्य दर्शनादे, श्चोत्पत्तिदशायां संशयवारणसंभवे । स्वयंकारणतावच्छेदको पलक्षित कारणसत्तायाएव लाघवेन कार्योत्पत्ति प्रयोजकतायाज्ञायमान-लिंगस्या नुमितिकरणता निराकरणप्रस्तावे वक्ष्यमाणतया संप्रदाय-सिद्धत्वादित्युक्तम् । तावता कार्यकालवृत्तित्वेन हेतुतायां काक्षति रि-

[ दी ] नच प्राक्काले तत्संभव इत्याशयात । ... ...

---

[ग] त्याकांक्षायामाह (नचेति) प्राक्काले - कार्याव्यवहितप्राक्क्षणे । तत्संभवः - कार्यकालवृत्तित्वरूपकारणतावच्छेदकविशिष्टसत्वसंभवः । तथाच कदापि कार्यं नोत्पद्येतेतिभावः ।

अत्रच सर्वत्र न कारणतावच्छेदकविशिष्टस्य प्राक्सत्वंकार्योत्पत्तौ तन्त्रम् । विषयप्रतियोग्याद्यवच्छिन्नहेतुताकज्ञाननाशादीनां कारणतावच्छेदकविषयाद्यसत्वदशायामपि कार्यकारित्वात् । किन्तु-इन्द्रियसंयुक्तसमवायाप्रामाण्यज्ञानाभावविशिष्ट परामर्शादिना प्रत्यक्षानुमित्यादिरूपकार्यजननएव । आश्रयचक्षुस्संयोगादिविनिगमेपि रूपचाक्षुषातिप्रसंगस्यान्यथादुर्वारत्वात् । एवञ्च कार्यकालवृत्तित्वविशिष्टकारणस्य प्राक्सत्ताया अनपेक्षणा न्नोक्तदोषः । नचकार्यकालवृत्तित्वस्योपलक्षणतापि नसंभवति, तथासति मण्यादिरूपप्रतिबन्धकसमवधानोत्पत्तिकाले दाहाद्यापत्तेर्विनासामग्रीप्रतिबन्धकतां दुर्वारत्वात् ,कार्यकालवृत्तित्वोपलक्षितमण्याद्यभावस्य स्वसत्वकालएव सत्वेन मणिसमवधानाद्युत्पत्ति प्राक्कालेपि सत्वादितिवाच्यम् । मण्याद्यभावरूपकारणस्य प्राक्कालइव कार्यकालेपि सत्तायास्तदानीं कार्योत्पत्तिप्रयोजकत्वात् , तत्क्षण तत्पूर्वक्षणोभयावच्छिन्नमण्याद्यभावाधिकरणं तत्क्षणदाहादिरूपकार्यवदित्येव सामाग्रीव्याप्त्युपगमात् । एवंसति कार्यकालवृत्तित्वस्य कारणतावच्छेदक निवेशन मनुपयुक्तमितिचेत् , न तत्कारणतावच्छेदकं, अपितु पूर्ववृत्तित्ववत्तत्कारणताशरीरघटकमेव । यदा-यत्र कार्यमुत्पद्यते तत्र तदा तत्प्राक्कालेच कारण मितिविलक्षणव्यापकताया स्तत्र तत्र कारणताघटकत्वात । यथा-क्वचित् कार्याव्यवहितपूर्वक्षणे , कारणासत्वेपि कार्योत्पत्तौ व्यापकताघटितकारणताक्षतेः स्ताद्दशक्षणसत्वं कार्योत्पत्तावपेक्षितं, तथा-मण्यादिसमवधानकाले दाहाद्युत्पत्तावपि निरुक्तव्यापकताघटितकारणताभङ्ग्येतेति कार्यकालसत्तापि मण्यभावादेर्दाहाद्युत्पत्तावपेक्षितेति ।

[दी] यत्तु - प्रतिबन्धकमात्रसामग्र्याः प्रतिबन्धकत्वे दाहप्रतिबन्धक मणिसामग्रीकाले दाहाभावप्रसंगइति । तन्नुच्छम् । अनुमितौ सिद्धय भावस्येव दाहे मणिसामग्र्यभावस्यापि पूर्ववर्तितामात्रेण

---

[ग] अस्तुवा उपलक्षणीभूत स्वानन्तरक्षणेनावच्छिन्ना या अधिकरणता तन्निरूपकत्वसंबन्धेन क्षणवैशिष्ट्यं मण्यभावादिकारणतायामवच्छेदकम्, मणिसमवधानोत्पतिप्राक्क्षणस्य नैतादृशसम्बन्धेन वैशिष्ट्यम् मण्यभावे तदधिकरणताया स्तदनन्तरक्षणानवच्छिन्नत्वात् । देशान्तरनिष्ठतदधिकरणता तत्क्षणानन्तरक्षणावच्छिन्नेतिचेत् , एवमपि देशान्तरनिष्ठाधिकरणतानिरूपकत्वविशिष्टस्येव तेनसंबंधेन क्षणविशिष्टस्याप्यधिकरणं तद्देशएव नतु यदधिकरणे कार्यमापाद्यतइति नमणिसमवधानदेशे कार्योत्पत्तिरित्यालोच्योक्तं(आशयादिति) ।

निश्चयजनकविशेषदर्शनोत्पत्तिकाले संशयापत्तिः, प्रतिबन्धकसंसर्गाभावस्य कार्यसहभावेन हेतुतयैव वारयितुंशक्यते, विशेषदर्शनस्य स्वानन्त्येणाप्रतिबन्धकत्वादिति, मिश्रामूलाशयंव्याचक्षते, तदुपरिच प्रतिबन्धकमात्रस्यैव सामग्रीयदिप्रतिबन्धिका तदा मणिसामग्रीसमवधानकाले दाहानुपपत्ति स्तादृशप्रतिबन्धकाभावस्य कार्यकालेऽसत्वादिति पूर्वपक्षः, ज्ञानरूपप्रतिबन्धकसामग्र्याएव प्रतिबन्धकतानियमः नतु प्रतिबन्धकान्तरसामग्र्याः अतो मणिसामग्र्यभावोदाहे हेतु रेवन, अपितु मण्यभावएव कार्यसहभावेन तथा, तावतैव मणिसमवधानोत्पत्तिकाले दाहवारणादितिमिश्रस्समाहितः, तत्समाधानमाक्षेप्तुं मणिसामग्र्यभावस्य दाहहेतुत्वं कुत्रचित् कार्ये कस्यचित् कार्यसहभावेन हेतुत्वञ्चाभ्युपेत्यापि समाधास्यन् तंपूर्वपक्षमनुवदति (यत्त्विति) (प्रतिबन्धकमात्रेति) मात्रपदं - कृत्स्नार्थकम् । (पूर्ववर्तितामात्रेणेति ) मात्रपदेनसहभावव्यवच्छेदः । कार्यसहभावेन हेतुताया विचारसहत्वे मण्यभावस्य तथा हेतुतयैव मण्युत्पत्तिकाले दाहवारणसंभवात्, तत्सामग्र्यभावस्य

[म] अथधर्मिणिविशेषादर्शनदशायां एककोटिस्मरणे तदारोपः कोटिद्वयस्मरणे संशयइति निश्चयसामग्रीत स्संशयसामग्री बलवतीति

---

[दी] हेतुत्वसंभवात्। निश्चयसामग्र्यभावमाशंकते (अथेति)। विशेषदर्शनाद्यभावविशिष्ट कोट्यन्तरोपस्थितेरन्यकोटिनिश्चयस्य प्रतिबन्धिकाया स्सत्वे नतत्सामग्रीत्यर्थः। (निश्चयसामग्रीतः) इन्द्रियसन्निकर्षादि विशिष्टान्यकोट्युपस्थितेः। सामग्रीसत्वे कार्यावश्यंभावात्।

---

[ग] हेतुताया अप्रामाणिकत्वात्–संभवादित्युक्तम्। पूर्वोत्पन्नभ्रमत्वज्ञानादिरूपोत्तेजकनाशोत्पत्त्यधिकरणे विशेषदर्शनद्वितीयक्षणे संशयोजायते, तथाचोत्तेजकाभावविशिष्टप्रतिबन्धकाभावस्य कार्यकालेऽसत्वात, पूर्ववृत्तितामात्रेणहेतुतावाच्येतिप्रतिबन्धकत्वमावश्यकमेवेतिध्येयम। "अथे" त्यादिकांशंकांप्रकृतेसंगमयति (निश्चयसामग्र्यभावमिति) प्रकृतइत्यादिः। पदार्थमव्याख्यायैव निश्चयसामग्र्यभावसत्वं स्फुटीकर्तुं पर्यवसितार्थमाह (विशेषदर्शनाद्यभावेति) एककोटिव्याप्यदर्शनकालेकोटिद्वयस्मरणेपि निश्चयोत्पत्तेस्तदभावस्य कोट्यन्तरोपस्थितौ वैशिष्ट्यनिवेशः। "तत्सामग्री" तितत्पदेन कोटिनिश्चयपरामर्श स्फुटीकरणाय निश्चयस्येत्यसमासलिखनं। नतत्सामग्री – नतदुपधानप्रयोजक कारणसमुदायः।

अथ – निश्चयंप्रति विशेषदर्शन सहकृतकोट्यन्तरोपस्थितेः प्रतिबन्धकत्वे निश्चयसामग्र्या स्संशयप्रतिबन्धकत्वकल्पनं निर्युक्तिकं, निश्चयसामग्रीदशायां तत्सामग्रीघटकभूतायाः संशयजनक विशेषादर्शनसहित कोट्यन्तरोपस्थिते र्विरहादेव संशयापत्त्ययोगादितिचेत, माभून्निश्चयसामग्रीसंशयप्रतिबन्धिका; तदपि मीमांसकाना मनुमतमेव, तथासति प्रामाण्यसंशयस्य नितरान्निर्वाहात, एकदा संशयनिश्चययोरनुत्पादात, फलानियत कारणस्तोम रूपायाः निश्चयसामग्र्या स्ताद्दशसंशयसामग्रीकालेसमवधानात् परस्पर मपेक्ष्य ताद्दशसामग्र्या स्समबलदुर्बलभावोक्तिनसंगच्छतइति प्रकृतनिश्चयसामग्रीपदार्थं व्याचष्टे (निश्चयसामग्रीतइति) (इन्द्रियसन्निकर्षादीति) ताद्दशसामग्रीच संशयकाले तत्सत्वेऽक्षै

[म] कोटिद्वयस्मरणे संशय एवस्यात् नतु निश्चयइतिचेत् । न ।

---

[दी](संशयसामग्री)तथाऽधिकोट्यन्तरोपस्थितिः । आत्मादिसाधार णकारणघटिताया स्सामग्र्याः प्रतिबन्धकत्वे मानाभावात् । संशयत्व निश्चयत्वयोः कार्यतावच्छेदकत्वे कदाचिद्भवेदेवं नतु तदस्तीत्याह

---

[ग] वेतिभावः । तस्यादौर्बल्यञ्च संशयसामग्रीदशायां निश्चयानुत्पादकत्वमेव, नतुज्ञानानुत्पादकत्वं, तथापि तदानीं संशयरूप तत्कोटिज्ञानजननमित्यवधेयम् । वक्ष्यमाणयुक्त्या अशेषकारणरूप संशयसामग्र्या निश्चयात्मकफलविरोधितारूप निश्चयसामग्र्यधिकबलवत्त्वासंभवेन तत्रापि सामग्रीपदं प्रागुक्तासाधारण विपरीतकोटिभासक समुदायपरतयाव्याचष्टे ( संशयसामग्रीति ) ( तथाविधेति ) विशेषदर्शनाद्य-भावविशिष्टेत्यर्थः । व्याख्याबीजमाह (आत्मादीति)साधारणं - तत्कोटिभान प्रयोजकं । तेन कोट्युपस्थित्यादे रेककोटिनिश्चयप्रतिबंधकशरीरप्रवेश-लाभः ( मानाभावादिति ) यादृशकारणासत्त्वे इतरकारणसत्वेऽपि सामग्रीप्रतिबध्यज्ञानं जायते तादृशकारणस्यैव फलोपपत्तये प्रतिबन्धककारणसमुदायप्रवेशस्य प्रामाणिकत्वादितिभावः । संशयसामग्र्या निश्चयप्रतिबन्धकत्वस्योक्तत्वात् तदुपरि “ विरुद्धोभयारोपे ” इत्यादिमूलं संगमयितुं तादृशप्रतिबन्धकताबीजस्य संशयत्वनिश्चयत्वयोः कार्यतावच्छेदकत्वस्य खण्डनपरतां तस्याह ( संशयत्वेति ) ( भवेदेवमिति ) निश्चयत्वावच्छिन्नंप्रति संशयसामग्र्याः प्रतिबन्धकत्वं प्रामाणिकंस्यादित्यर्थः । अन्यथा निश्चयत्वावच्छिन्नस्य संशयदशायामापादकाभावेन तत्प्रतिबन्धकताकल्पनवैयर्थ्यादिति भावः । निश्चयत्वस्य किंचित्कारणकार्यतावच्छेदकत्वेपि न तद्बलात्संशयकाले तदवच्छिन्नापत्ति र्विचारसहा , तद्घटक तदभावप्रकारत्वे तदभावप्रकारकत्व प्रयोजकसामग्र्यभावस्य तदवच्छिन्नाऽ हेतुभूतस्यापि-प्रतियोगिप्रयोजकाभावविधयाऽ पेक्षणादतः कदाचिदित्युक्तं ।

[म] विरुद्धोभया

[टी] ( विरुद्धोभयेति ) उभयविषयकज्ञानत्ववत् उभयत्रैकप्रकारकज्ञानत्ववत् एकत्राविरुद्धोभयप्राकरक ज्ञानत्ववच्च, एकत्र विरुद्धोभयप्रकारकज्ञानत्वरूपं संशयत्वं न जन्यतावच्छेदकं प्रत्येक प्रयोजकसमाजाधीनत्वात् ।

[ग] यद्यपि – संशयत्वस्य कार्यतानवच्छेदकत्वेपि निश्चयत्वस्य कार्यतावच्छेदकत्वे तदवच्छिन्नंप्रति विशेषदर्शनसहितकोट्यन्तरोपस्थितिरूपाया स्संशयसामग्र्याः प्रतिबन्धकत्वमावश्यकं शक्यकल्पनंच भवतीति निश्चयत्वमात्रस्य तथात्वखण्डनमुचितं नतु संशयत्वस्य। तथापि - दृष्टान्तविधया निश्चयत्वस्य प्रयोजकसमाजाधीनतया कार्यतानवच्छेदकत्वे संशयत्वमपिकार्यतानवच्छेदकमास्तामिति प्रतिबंदिनिरसायवा तस्य तथात्वखण्डनमिति ध्येयं ।

यद्यपि - प्रकृतं निश्चयत्वस्य कार्यतावच्छेदकत्वनिराकरणं मूले नास्त्येवेत्यसंगतिः । तथापि - स्वयं तत्पूरयिष्यतीत्यदोषः । यद्येकधर्मिणिविरुद्धोभयप्रकारकज्ञानत्वरूपसंशयत्वं सामग्रीसमाजनिर्वाह्यमपि जन्यतावच्छेदक भवत्, तदा तत्रैकधर्मिकत्वं कोट्योर्विरुद्धत्वं तद्विषयतायां प्रकारतात्वरूपविशेषंच परित्यज्योभयविषयकज्ञानत्वमपि तथा भवेत्। एवमेकत्रेत्यत्र तद्विपरीतमुभयत्रेतिनिवेश्य, उभयप्रकारकेत्यत्र तद्विपरीतमेकप्रकारकत्वं निवेश्य, विरोधं परित्यज्य, उभयत्रैकप्रकारकाज्ञानत्वं, एवं विरोधस्थाने तद्विपरीतमविरोधं निक्षिप्य एकत्राविरुद्धोभयप्रकारकज्ञानत्वंच, जन्यतावच्छेदकं भवेदिति प्रतिबन्दिसूचनाय तादृशधर्मत्रयस्य दृष्टान्ततयोपन्यासः ।

( प्रत्येकेति ) तत्तदभावादिप्रकारकत्वप्रयोजक तत्तत्कोटिविशिष्टबुद्धिसामग्र्या स्संवलनाधीनत्वादित्यर्थः ।

ननु - सामग्रीसमाजा दुभयप्रकारक ज्ञानाभेदनिर्वाह्येपि परस्प

[दी] क्वचिद्विरोधभानस्यापि तत्सामग्र्यधीनत्वात् ।

---

[ग]रविरोधावगाहित्वघटित संशयत्वानिर्वाहः, प्रत्येककोटिभासकसामग्र्या स्तदप्रयोजकत्वात्, तयोस्तत्प्रयोजकत्वे कोटिद्वयसमुच्चयस्यापि तथात्वापत्तेरित्यतआह (क्वचिदिति) तत्सामग्र्यधीनत्वात् - विरोधभासकसामग्र्यधीनत्वात् । साच विरोधोपस्थिति तदसंसर्गाग्रहरूपा । तदनुपस्थितिकालीन संशयेचा संसर्गाग्रहएव संसर्गविधया विरोधभासकः संसर्गभाने सन्निकर्षस्याप्यहेतुतया ज्ञानसन्निकर्षविधयापि विरोधोपस्थित्यनपेक्षणात् । विरोधानुपस्थितिदशायां कोटिद्वयसमुच्चयएव जायतइतितु नयुक्तं । अव्याप्यवृत्तित्वज्ञानंविना भावाभावसमुच्चयस्यानुभवविरुद्धत्वात् । विरोधस्तु कोट्योरसंबन्धः ।

नचैवमेककोट्यंशे ऽपरकोटेः प्रकारतापत्तिः । अभावकोट्यंशे-प्रतियोगितया भावकोटेः प्रकारताया स्सर्वसम्मतत्वात् तत्संसर्गएव विरोधस्याप्यन्तर्भावात् । विरोधविशिष्टसंयोगादिरेववाऽ धिकरणे कोटिसम्बन्धः विभिन्नावच्छेदे नैकाधिकरणवृत्तित्वरूपाव्याप्यवृत्तित्वज्ञानस्य विरोधभानप्रतिबन्धकतया तदानीं कोट्यो स्समुच्चयः ।

केचित्तु विरोधानुपस्थितिकाले विरोधाविषयकएव संशयः विरोधस्य सांसर्गिकविषयताया अप्रामाणिकत्वात् । संशयत्वञ्च विरोधाविषयकत्वाघटितमेव, अतो विरोधाभानेपि न संशयत्वानुपपत्तिः । नच - संशयत्वशरीरे विरोधविषयकत्वाप्रवेशे समुच्चयस्य संशयत्वप्रसंगः । संशयत्वस्य विषयिताविशेषरूपत्वात । नच - समुच्चयविषयिताव्यावृत्तविशेषपदार्थो दुर्वचः, भावाभावोभयप्रकारकत्वञ्च समुच्चयविषयितासाधारणमिति वाच्यम् । समुच्चये प्रकारभेदेन विषयताभेदात, विरुद्धोभयप्रकारकैकविषयताप्रतियोगिकज्ञानत्वरूप संशयत्वस्य अनतिप्रसक्तत्वात् , तादृशविषयताशालिज्ञानं प्रत्यव्याप्यवृत्तित्वज्ञानं विरोध्याविषयक मपि मणिमंत्रादिवत् पृथगेव प्रतिबन्धकं, संशयत्वस्य विरोधविषयतानियतत्वेपि विरोधाप्रकारके तत्संसर्गकज्ञाने अव्याप्यवृत्तित्वधियः पृथक्प्रतिबन्धकताया आवश्यकत्वात्, तत्प्रकारक

[ग]ज्ञानत्वस्यैव तद्विपरीतज्ञानप्रतिबध्यतावच्छेदकत्वात् , तत्संसर्गकधियः तद्रूपानाक्रान्तत्वादित्याहुः ।

तन्नु - दीधितिकृतो सम्मतं, तेन संशयत्वस्य कार्यतावच्छेदकत्वखण्डनात् । विषयिताविशेषस्य सामग्रीव्यावृत्तस्य सामग्रीसमाजानियाम्यतया अव्याप्यवृत्तित्वज्ञानाभाव जन्यतावच्छेदकताया आवश्यकत्वात् ।

नच - विरोधविषयतायाः संशयघटकत्वस्य दीधितिकारसम्मतत्वे क्वचिदित्यसंगतमिति वाच्यम् । एकावच्छेदकावच्छेदेन भावाभावोभयवत्तावगाहिसंशये विरोधावगाहिताया अनियमा त्तल्लिखनोपपत्तेः, अव्याप्तिवृत्तित्वधीदशायामपि मूलावच्छिन्नो वृक्षः कपिसंयोगी नवेति संशयस्याऽनुभाविकतया तस्य विरोधविषयकत्वासम्भवात् ।

नच - तत्र एकावच्छेदकाच्छेदेन एकत्रावर्तमानत्वरूप विरोधभाने बाधकाभावः । तादृशविरोधावगाहिनोऽपि विभिन्नावच्छेदेन संयोगतदभावादिमत्त्वावगाहिनो ज्ञानस्य समुच्चयतया सामान्यत एकाधिकरणवृत्तित्वरूपाविरोधानवगाहिनि भावाभावोभयप्रकारकज्ञाने एकावच्छेदकावच्छिन्नत्वावगाहितायास्संशयत्वप्रयोजकत्वावश्यकत्वा दवच्छेदकघटित विरोधभानस्या नुपयुक्तत्वात, संसर्गविधया तद्विषयतायाः कल्पकाभावेन तत्प्रयोजकसामग्र्याअप्यकल्पनात् , क्लृप्तसामग्रीत स्तदुपस्थितिदशायामेव प्रकारतया तद्भानम् ।

वस्तुत एकावच्छेदकावच्छिन्नत्वानवगाहिन्यपि ज्ञाने विरोधस्य गुरुशरीरस्य संसर्गतया भान मप्रामाणिकं, तादृशसंशये अनवच्छिन्नाधारताया एव संसर्गतया भानोपगमेन समुच्चया त्तद्वैलक्षण्योपपत्तेः । संयोगतदभावयोरेकत्र द्रव्यादौ वर्तमानत्वग्रहेऽपि गुणादौ तत्संशयस्याऽनुभाविकतया तत्रानवच्छिन्नाधाधारताया स्संसर्गतयैव समुच्चयवैलक्षण्योपपत्तेः । नच- तत्राप्यवच्छिन्नाधारतावघटितविरोधभान मुपेयते तद्भाने

[दी] एव मुभयविषयकत्वादिशून्यादिज्ञानत्ववत् ज्ञानत्वघटिता घटितसंशयत्वादिशून्यादि ज्ञानत्वमपि न जन्यतावच्छेदकं ।

---

[ग]बाधकाभावादितिवाच्यम् । अनवच्छिन्नाधारताघटितविरोधग्रहदशाया मपि द्रव्ये विभिन्नावच्छेदेन संयोगतदभावयो स्समुच्चयोत्पत्त्या तस्य संशयत्ववारणाय तादृशविरोधभानस्या प्यनवच्छिन्नाधारतावगाहितासहितस्यैव संशयत्वप्रयोजकताया वाच्यतया विभिन्नावच्छेदे नैकाधिकरणवृत्तित्व रूपाव्याप्यवृत्तित्व ग्रहदशायां भावाभावसमुच्चयोत्पत्त्या तत्रानवच्छिन्नाधारता भानासम्भवेन तद्भानादेव संशयत्वनिर्वाहेणच संसर्गतया विरोधभानस्याप्रामाणिकत्वात् । एवंच विरोध भानं भावाभावकोटिकसंशये क्वाचित्कसामग्रीवशात् क्वाचित्कमेव, न तु नियतं, नियतन्तु भावद्वयकोटिकसंशयस्य प्रामाणिकत्वे; तत्र विरोधस्यानवच्छिन्नत्वस्यवा भाने संशयस्य न समुच्चयवैलक्षण्यं, तदधिकरणवृत्त्यन्यत्वादिरूप विरोधस्यानवच्छिन्नत्वस्यचा व्याप्यवृत्तित्वभ्रमदशायां समुच्चयेपि तद्भानात्, तस्मात् संशयत्व मव्याप्यवृत्ति मानसत्वव्याप्यजातिः अवच्छेदकंच तस्य तद्धर्मिविषयकत्वावच्छिन्न तत्तत्कोटिप्रकारकत्वमितिकेचित् ।

अधिकं हेत्वाभासेवक्ष्यामः ।

निश्चयत्वस्य जन्यतावच्छेदकत्वं निराकरोति ( एवमिति ) ( उभयविषयकत्वेति ) एकधर्मिकत्वविरुद्धत्वयोः प्रतियोगिकोटावनिवेशात् संशयत्वशून्यज्ञानत्वरूपनिश्चयत्वा दस्य विशेषः । एतद्दृष्टान्तकथनंच पूर्ववत् प्रतिबन्दिसूचनाय । ( ज्ञानत्वघटिताघटितेति ) ज्ञानत्वेन घटित मघटितंवा यत् संशयत्वं तच्छून्येनेत्यर्थः । घटितत्वोपादानं पदार्थानुसारेण । निश्चयत्वघटकसंशयत्वशरीरे ज्ञानत्वनिवेशोनर्थकः ज्ञानत्वघटिततच्छून्यज्ञानत्वस्य तदघटिततद्रूपशून्यज्ञानत्वसमानियतत्वा दित्याशयेन ( अघटितेति ) एतच्चोपलक्षणम् । तद्धर्मिकतन्निश्चयत्वशरीरे तद्धर्मिणि तत्तद्विरुद्धोभय प्रकारकत्वनिविष्टस्य तत्तद्धर्मिणि तत्प्रकारकत्वरूप संशयत्वघटक

दळस्य प्रवेशोपि व्यर्थइति तत्तद्धर्मिणि तद्विरुद्धप्रकारकत्वशून्यत्वमेवो पादेयम् । तद्धर्मिणि तत्प्रकारकत्वंचाधिकं निवेश्यं, ह्रदो न वन्हिमान् पर्वतश्च वन्हिमानित्यादिबुद्धे वंह्न्यादिनिश्चयत्वनिर्वाहाय प्रतियोगिकोटौ - तद्धर्मिणीति - तद्धर्मितावच्छेदकविशिष्टेत्यर्थकं, अतः - पाषाणमयो न वह्निमान् पर्वतश्च वह्निमानित्यादिनिश्चयसंग्रहः । समानविषयकत्वमात्रेण बाधादिबुद्धेः प्रतिबन्धकत्वमतेतु पाषणमयत्वादिना पर्वते तदभावनिश्चयस्यापि पर्वतत्वादिना तत्र वह्न्यादिज्ञानविरोधित्वा दुक्तज्ञानं न निश्चयः, अपितु संशय एवेति समानप्रकारकत्वेन विरोधितावादि नवीनमतएव धर्मितावच्छेदकान्तर्भावः, तन्मतेच न धर्मिणोन्तर्भावः, समानधर्मितावच्छेदक विभिन्नधर्मिकबुद्धेरपि संशयत्वात् । एवं तन्मते धर्मितावच्छेदक सामानाधिकरण्यमात्रेणविभिन्नधर्मिणीव एकधर्मिणि कोटिद्वयावगाहिज्ञानमपि निश्चयः तथा विधकोटिनिश्चययोः परस्परमविरोधित्वात्, अतावच्छेदकावच्छेदेन विरोधिप्रकारकत्वशून्यत्वमेव निवेश्यं । धर्मितावच्छेदक सामानाधिकरण्यमात्रेण विरोधिनमवच्छेदकावच्छेदेन तद्वत्तामवगाहमानस्य तन्निश्चयत्ववारणाय तद्धर्मितावच्छेदकविशिष्टे तद्विरुद्धप्रकारकत्व विशिष्टस्य तद्धर्मावच्छेदेनतत्प्रकारकत्वस्या प्यभावः पृथङ्निवेशनीयः । ग्रन्थकृतस्संशयत्वघटक ज्ञानत्वमात्रपरित्यागोप्यतएवसंगच्छते, ईदृशाभावप्रतियोगिकोटौ कोटिद्वयप्रकारकत्व निवेशात् ।

यत्तु - धर्मितावच्छेदकावच्छेदेन विरोध्यवगाहित्वं, तदवच्छेदेन तद्वत्तावगाहिसंशयवृत्ति तत्सामानाधिकरण्येन तद्विरोध्यवगाहित्वञ्च, स्ववृत्तितद्वत्तावगाहित्वावच्छिन्न प्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वेना नुगमय्यैकाभावएव तन्निश्चयत्वशरीरे निवेश्यते । संशयनिष्ठं विरोध्यवगाहित्वमपि संशयप्रतिबन्धकतावच्छेदकमेव ; संशयनिश्चयसाधारणतद्विषयताया ऐक्यात् । संशयत्वाभावविशिष्ट तादृशविषयतायाः प्रतिबन्धप्रयोजकत्वात् नसंशयेन संशयप्रतिबन्धइति । तदसत् । स्वत्वघटितत्वेना ननुगतत्वात्, संशयप्रतिबन्धकतावच्छेदक निश्चयत्वस्याऽ (माश्रयेणतद्रूपत्वासंभवाच्च ।

[ग] समानविषयकतामात्रेण विरोधितामतेच एकधर्मिविषयकं धर्मितावच्छेदक सामानाधिकरण्यमात्रेण कोटिद्वयावगाह्यपि ज्ञानं संशयएव, तन्मते अवच्छेदकत्वावगाहनस्य विपरीतज्ञानप्रतिबन्धकताया मतन्त्रत्वादित्यवधेयम् । धर्मिविशेषांतर्भावस्यावश्यकतया प्रकारभेदेनेव तद्भेदेनापि निश्चयत्वभेद इष्टएव । समानधर्मिकस्यैव निश्चयस्य प्रवृत्त्यादिजनकतया विपरीतज्ञानादिविरोधितयाच धर्मिभेदेन निश्चयकारणत्वादिभेदस्यावश्यकत्वात्, तदवच्छेदकनिश्चयत्वस्य धर्मिविशेषनियन्त्रितताया अदूषणत्वात् । तत्रतत्र समानविशेष्यतायाः प्रत्यासत्तित्वमतेच धर्मिविशेषमनन्तर्भाव्य सप्रकारकत्वविशिष्टविरोधि प्रकारकत्वशून्यत्वमेव कारणतावच्छेदकं वाच्यं, सप्रकारकत्वस्यच धर्मिविशेषणकतया ह्रदो न वह्निमान् पर्वतोवह्निमानित्यादिनिश्चयस्य पर्वताद्यंशावच्छेदेन वह्न्यभावादिप्रकारकत्वाभावविशिष्टस्य पर्वतादौ विशेष्यतासंबन्धेन सत्वान्नानुपपत्तिः । ह्रदो वह्निमान्नवा पर्वतोवह्निमानित्यादिनिश्चयस्य पर्वतत्वावच्छेदेनविरोधिप्रकारकत्वाभाववतोपि ह्रदादौ तद्विशिष्टस्य विशेष्यतासम्बन्धेनासत्वान्न तत्र विशेष्ये तादृशकार्यजननप्रतिबन्धप्रसंगः । धर्मितावच्छेदकतायाः प्रत्यासत्तित्वमतेच तद्वत्ताज्ञानत्वेनैव कारणत्वादिकं । प्रत्यासत्तिश्च स्वनिष्ठ विरोधिप्रकारकत्वाभाववत्वावच्छेदकतावच्छेदकत्व विशिष्टं धर्मितावच्छेदकत्वं । पाषाणमयो वह्निमान्नवा पर्वतोवह्निमानित्यादिनिश्चये पाषाणमयत्वावच्छिन्नपर्वताद्यवच्छेदेन वह्न्यभावादिप्रकारकत्व सत्वेपि पर्वतत्वाद्यवच्छिन्नपर्वताद्यवच्छेदेन तत्प्रकारकत्वाभावोक्षतएवेत्यलमधिकेन ।

समुच्चयसाधारण्यायच कोट्योर्विरोधावगाहिताघटित संशयत्वशून्यत्वम् प्रवृत्त्यादिजनकतावच्छेदके निवेशनीयं, नतु विपरीतनिश्चयस्य प्रतिबन्धकतायां तावत्पर्यंतनिवेशः । तत्तदभावसमुच्चयस्य तद्वत्ताज्ञानाप्रतिबन्धकत्वात् । अन्यथा समुच्चयस्याप्यनुपपत्तेः ।

नचैवं समुच्चयोत्तरं संशयापत्तिः, समुच्चयजनकस्याऽव्याप्यवृत्तित्वग्रहस्य भावाभावसामानाधिकरण्यावगाहित्वेन समुच्चयस्यच विरोधभानप्रतिबन्धकत्वात् । कथंचिद्विरोधभानसंभवे समुच्चयवत्संशयस्या-

[ग] पीष्टत्वात् । समुच्चयस्य समुच्चयसाधारणकोटिभानाविरोधित्वेऽप्येवं विरोधभानविरोधिताया एव संशयविरोधिताबीजत्वात् ।

नच वस्तुगत्या यद्विरोधि तत्प्रकारकत्वशून्यत्वं न निश्चयत्वघटकं, अयं स्थाणुः पुरुषश्चेति समुच्चयस्य पुरुषत्वाभावग्रहविरोधितानुपपत्तेरिति गृह्यमाणविरोधनिरूपकतावच्छेदकावच्छिन्नाप्रकारकत्वमेव तथा, तथाच पुरुषत्ववाँस्तदभाववांश्चेति समुच्चयस्यापि पुरुषत्वाभावग्रहविरोधित्वं दुर्वारमेवेति वाच्यम् । पुरुषत्वाभावत्वाद्यवच्छिन्नाप्रकारकत्वस्यैव पुरुषत्वादिनिश्चयत्वघटकत्वोपगमात् । स्थाणुर्वा पुरुषोवेति संशयोपि स्थाणुत्वपुरुषत्वाभावमादाय कोटिचतुष्कावगाही, अत एतस्य पुरुषत्वाभावादिग्रहाविरोधिता ।

यदिच स्थाणुत्वपुरुषत्वाद्योरभावानुपस्थितावपि परस्परासामानाधिकरण्यग्रहे भावद्वयमात्रकोटिकः संशयोनुभवसिद्धः सामग्रीबलासिद्धश्च । नच तद्विरोधिधर्मवत्त्वग्रहस्याभावकोटिकसंशयभिन्नस्य तद्वत्ताधीप्रतिबन्धकतया तदभावस्यकार्यकालेऽसत्वान्न सामग्रीतिवाच्यं । परस्परविरोधेन कोटिद्वयाभाने कोटिद्वयभानविरोधिधर्मवत्त्वग्रहाभावस्य कार्यकालेऽक्षततयोभयभानस्यैव दुर्वारत्वात् । युगपद्विरोधिकोटिद्वयभाने विरोधिधर्मवत्ताग्रहाभावस्य कार्यसहभावेन हेतुता नसंभवतीतिचेदस्तु पूर्ववर्तितामात्रेणैव तद्धेतुता, विरोधिनोरेकभाने तुल्यबलाया अपरभानसामग्र्याः प्रतिबन्धकत्वं चासिद्धम् ।

नच शङ्खत्वपीतत्वयोर्विरोधग्रहदशायां दोषविशेषवशात्पीतत्वावगाहिनः शंखोयं पीत इति भ्रमस्य संशयत्वाभावात् भावद्वयकोटिकत्वं न संशयत्वप्रयोजकमितिवाच्यम् । साक्षात्करोमीति प्रतीतिसाक्षिकविलक्षण विषयतान्यकोटिद्वयविषयताया एव संशयत्वनिर्वाहकतयोक्तारोपेच पीतत्वाद्यंशे तादृशविषयतानियमेना तादृशविषयताविरहादसंशयत्वादित्युच्यते, तदा तादृशसंशयस्य तत्तत्कोटिविरहग्रहाप्रतिबन्धकत्वोपपत्तये तत्तत्कोटिनिश्चयनिष्ठ तत्तद्विरहग्रह प्रतिबन्धकतावच्छेदक निश्चयत्व शरीरे गृह्यमाणविरोधधर्माप्रकारकत्वम भात्राभाव

[म] रोपसामग्रीद्वयसमाजा दुभयारोपएव भवति , सएवसंशयः ।

---

[दी] एकैकरूप प्रयोजक विरहाद्यधीनत्वात् । नीलानीलघटत्वादि कन्तुमसिद्धतरोदृष्टान्तइति । आरोपः- विशिष्टज्ञानम् । सर्वत्रकोटि-द्वयस्यारोपासंभवात् । आरोपपदाभिधानंचसामग्र्योस्तुल्यबलत्व-बोधनाय ।

---

[ग] समुच्चयस्य तत्समुच्चयाविरोधित्वोपपत्तयेच्च गृह्यमाणविरोधित्वाविशेषित तदभावाप्रकारकत्वम् त्यागतया प्रवेशनीयमितिदिक् ।

(एकैकरूपेति) तादृश निश्चयत्वादीनां स्व घटकीभूताभाव प्रतियोगि विरोधिप्रकारकत्वादि प्रयोजक सामग्रीविरह सहित तत्प्रकारकधीसामग्रीनियम्यत्वादित्यर्थः । (निलानीलघटत्वादिकमिति) संशयत्वस्य कार्यतानवच्छेदकत्वे नीलसामग्री घटसामग्री समाज निर्वाह्यं नीलघटत्वादिकं, निश्चयत्वस्यातथात्वेच नीलसामग्रीविरह सहकृत घटसामग्रीनिर्वाह्य मनीलघटत्वं प्रसिद्धतरो दृष्टान्त इत्यर्थः । "उभयारोपे" त्यत्रारोपपदस्य भ्रमार्थकत्वासम्भवा दन्यथा व्याचष्टे (आरोप इति) भ्रमार्थकत्वासम्भवे बीजमाह (सर्वत्रेति) शिंशुपादा वाम्रत्व पनसत्वाद्युभय कोटिक संशयस्य कोटिद्वयांश एवारोपत्वात् सर्वत्रेत्युक्तम् । संशय इति शेषः । लाक्षणिकेनारोपपदेन विशिष्ट ज्ञानाभिधान प्रयोजनंदर्शयति (आरोपपदेति) (तुल्यबलत्व बोधनायेति) बलवत्या लौकिकसन्निकर्ष दूरत्वादिदोषाभावादि घटिताया एककोटि भासक सामग्र्या अपरकोटिभान विरोधित्वं सूचयितुं तुल्यबलता बोधनस्यावश्यकत्वादितिभावः । आरोपस्य विशेष्य घटित सन्निकर्ष शून्य विशेषणकतया प्रायश उपनीतभानत्वेन कोटिद्वयोपनीत भानलाभा त्तत्सामग्र्याश्च तुल्यबलतया तल्लाभः । एककोटिभानसामग्र्या अपरकोटिभानविरोधित्वे सामग्रीसमाजात् संशयो नसंभवतीति तस्या अतथात्वमाहमूले ( नत्वेकेति ) सामग्रीप्रतिबन्धः - सामग्रीविघटनम् । बलवत्या एककोटिभानसामग्र्या अपरकोटिभानं प्रतिबध्यत एवेत्य-

[म] नत्वेकारोपसामग्र्यापरारोपसामग्रीप्रतिबन्धः, अविरोधात् । नचोभयारोपसामग्र्या एकनिश्चयसामग्रीप्रतिबंधइति वाच्यं । प्रत्येकारोपसामग्र्यातिरिक्ताया स्तस्या अभावात् । नच सामग्रीद्वयात्कार्यद्वयं, समूहालंबनवदुपपत्तेः ।

---

[दी] एकारोपसामग्र्या–तुल्यबलया । अविरोधात् –प्रतिबंधौपयिकाधिकबलवत्त्वाविरहात् । (प्रत्येकेति) उभयविशिष्टज्ञानत्वैकमात्रविशिष्टज्ञानत्वयोः कार्यतावच्छेदकत्वस्य निरासात् तुल्यबलयाच एकज्ञानसामग्र्या अपरज्ञानसामग्रीप्रतिरोधेसंशयोच्छेदइतिभावः ।

---

[ग] तः पूरयति दीधितौ ( तुल्यबलयेति ) अप्रतिबन्धकत्वे अप्रतिबन्धरूपस्या ऽविरोधस्य हेतुत्वासंभवेनासंगते रविरोधपदार्थं व्याचष्टे ( प्रतिबन्धौपयिकेति ) ननु भवतु सामग्री समाजात् संशयः, तावता प्रकृते किमायातं, तथापि प्रामाण्याप्रामाण्योभय विशिष्ट ज्ञानसामग्र्या निश्चयप्रतिबन्धात् प्रामाण्यसंशयो निराबाधएवेत्याकांक्षायांमूले ( नचोभयारोपेति ) नचेत्यनन्तरमेवं सतीति पूरणीयम् । वाच्यं-वक्तुं शक्यं । अत्र कथंतानिवृत्तये आशयं प्रकाशयति ( प्रत्येकारोपेति ) संशयोत्पत्तौ कोटिद्वय भासक सामग्री संवलनापेक्षायामपि संशयत्वस्य कार्यतावच्छेदकत्वे उभयसामग्री प्रत्येकारोपसामग्रीतो-विलक्षणैव, निश्चयत्वस्य तथात्वेच तादृशसामग्र्या स्तदवच्छिन्नंप्रति प्रतिबन्धकत्वं युज्यतएवेति शंकानिरासाय संशयत्व निश्चयत्वयोः-कार्यतावच्छेदकत्वमेवैवंसति नास्ति, उक्तयुक्तेरिति मूलं व्याचष्टे दीधितौ ( उभयेति ) संशयत्वादेः कार्यतानवच्छेदकत्वेपि अधिकबलत्व मपुरस्कृत्यैककोटिज्ञानसामग्री अपरकोटिज्ञानं प्रतिबध्नीयादिति न प्रकृते प्रामाण्यनिश्चयो भविष्यतीत्याशंकां निराकर्तु मधिकबलत्व पुरस्कारं युक्तिं दर्शयति ( तुल्यबलयेति ) सामग्रीद्वयसमाजात् संशय इत्यत्र शंकते मूले ( नचेति ) समाधत्ते ( समूहालंबनवदिति ) ज्ञानस्थले सामग्रीभेदो न कार्यभेदप्रयोजकोपितु सामग्र्योरसंवलन-

[ म ] तस्मात् -

---

[ दी ] अथैवं प्रामाण्यसंशयस्स्यादेवेत्याशंकामुपसंहार - व्याजेननिरस्यति (तस्मादिति ) तुल्यबलाभ्यांहिप्रत्येकज्ञानसामग्री-भ्यांजन्यमानंज्ञानंज्ञानकरणमर्यादया समूहालम्बनवदेकमुत्पद्यते ।

---

[ग]मेव, तत्संवलनन्तु कार्याभेदप्रयोजकमिति समूहालम्बनान्तरवद्भिन्न कोटिद्वयविशिष्ट ज्ञानरूपसंशयनिर्वाहादित्यर्थः । संशयत्वनिश्चयत्वयोः कार्यतानवच्छेदकत्वे संशयत्वावच्छिन्नंप्रत्यपि निश्चयसामग्र्यभाव-स्य हेतुत्वासंभवात्, कोटिद्वयभानसामग्रीसत्वे निश्चयोपधायकसा मग्र्याएव दुर्घटत्वाच्च, प्रामाण्यसंशयस्य प्रकृते नानुपपत्तिरिति शं कानिराकरणपरतया " तस्मादित्यादिमूलं व्याचष्टे ( अथैवमिति ) प्रकृते अप्रामाण्यभाने प्रामाण्यनिश्चयस्यैवासंभवात् " निश्चयसामग्रीस त्वान्नतत्संशय" इत्यसंगतमतः प्रामाण्यनिश्चयसामग्रीपदमधिकबलप्रामा-ण्यग्रहसामग्रीपरतया व्याख्यास्यते, अतोधिकबलसामग्रीप्रतिबन्धकत्वं प्रकृतप्रामाण्यग्राहकसामग्र्या अधिकबलतांच प्रथमं व्यवस्थापयति " तुल्यबलाभ्या" मित्यादिना - "व्यवसाये सन्दिह्येत" इत्यन्तेन । तत्रा-धिकबलतायाः प्रतिबन्धौपयिकतया एककोटिभानसामग्र्या अपर-कोटिभानप्रतिबन्धकत्वेपि न संशयानुपपत्ति स्तुल्यबलसामग्रीभ्यामेव संशयजननादित्येव पूर्वन्दर्शयति (तुल्यबलाभ्यां हीति ) (सामग्री-भ्यामिति )-कर्तृपदं । (ज्ञानकरणमर्यादयेति ) ज्ञानकरणमेकदा एकं ज्ञा-नं जनयतीति नियमेनेत्यर्थः । " पीतत्वाभावादे " रित्यत्र न ज्ञान-स्य संभव इत्यनुषज्यते ।

ननु कोटितावच्छेदकविशिष्टांशे साक्षात्त्वग्रहप्रयोजक विष यताशालिज्ञानसामग्री विपरीतकोटिभानसामग्र्या बलवत्यास्तां, ब-हिर्विषयघटिताप्रामाण्य ग्रहसामग्रीच न तथा, बहिर्विषयांशे भानस्य[मान सस्य ] तादृशविषयताविरहात् । अतएवोपनीतसौरभादि विशिष्ट द्रव्या

[ म ] प्रामाण्यनिश्चयसामग्रीसत्वान्न तत्संशयस्स्यात् ।

---

[दी]अधिकबलया पुनरकज्ञानसामग्र्या अन्यज्ञापकसामग्र्याः प्रतिबंधेन न तज्ज्ञानस्यसंभवः । यथानयनगतापि त्तद्व्यादिघटितयाशंखादौ पीतत्वादिभासकसामग्र्याप्रतिबन्धात्स्मृतस्यपीतत्वाभावादेः । अधिकबलाच विषयनिरूप्यत्वमर्यादोपबृंहिताज्ञापकसामग्री । अन्यथाकथञ्चित्तत्प्रकारकत्वादेरभावस्योपस्थितौ तदपिव्यवसाये सन्दिह्येत । प्रामाण्यनिश्चयसामग्री – अधिकबला प्रामाण्यग्राहिका सामग्री ।

---

[ग] दिलौकिकचाक्षुषसामग्रीकालेपि सुरभिद्रव्यचान्नवेत्यादि चाक्षुषसंशय इत्यत आह ( अधिकबलाचेति ) विषयनिरूप्यत्वमर्यादोपबृंहिता - ज्ञापकसामग्री – विषयनिरूप्यंहीत्यादि युक्त्योपनीतविषयोपरागेणैव योग्यविषयताविशिष्टज्ञानादि लौकिकप्रत्यक्षसामग्री । तत्प्रकारकत्वादेः- रजतत्वादिमद्विशेष्यकत्वावच्छिन्नाविशेषित रजतत्वादिप्रकारकत्वादेः । आदिना पुरोवृत्तिविशेष्यकत्वपरिग्रहः ।

इदमापाततः– अनुभवानुरोधेन तत्प्रकारकत्वादिग्रहसामग्र्या स्तदभावग्रहप्रतिबन्धकत्वेपि प्रामाण्यग्रहसामग्र्या स्तदभावग्रहप्रतिबन्धकत्वानुपगम सम्भवात, अनुगतरूपेण प्रतिबध्य प्रतिबन्धकभावासंभवात, अतएव धर्मिज्ञानस्य संशयहेतुत्वव्यवस्थापनेन प्रामाण्यनिश्चयप्रतिबन्धात् न प्रामाण्यसंशय इत्यत्रैव मूलकृता निर्भरः कृतः ।

मिश्रास्तु - प्रामाण्यनिश्चयसामग्रीप्रतिबन्धेन प्रामाण्यसंशयानुपपत्तेरुक्तयुक्त्या ऽसंगतेरारोपे संशयसाधारणरूपावच्छिन्ने धर्मिज्ञानस्य हेतुतया धर्मिज्ञान विशेषादर्शन घटित कोटिद्वय निश्चयसामग्री समाजात् संशयः , प्रकृतेच ज्ञानरूप धर्मिज्ञानसत्वे प्रामाण्यनिश्चयरूपविशेषदर्शनसत्वा न्नसंशय उपपद्यतइत्यर्थपरतया " विरुद्धारोपे " त्यादिमूलं व्याख्यातवन्तः ; तन्मते-एककोटिभा

[ग] नसामग्र्या अपरकोटिभानं प्रति प्रतिबन्धकताया स्वसंशयानुपपत्त्या-अकल्पनेपि उभयकोटिभानसामग्र्या एककोटिनिश्चयप्रतिबन्धकतया "कोटिद्वयनिश्चयसामग्रीसमाजे" ति नसंगच्छतइति शंकापरतया " नचे-त्या " दिमूलं व्याख्येयम् ।

उभयारोपसामग्री नातिरिक्ता , किंतु सामग्रीद्वयं , तत्र तत्कोटि भानसामग्री न तत्कोटिनिश्चयप्रतिबन्धिका विरोध्यग्राहकत्वात । विरोधिकोटिग्राहकसामग्र्या स्वतत्कोटिनिश्चय प्रतिबन्धकत्वेपि - आरोपसामग्रीपदेन विरोधिग्राहकसामग्र्यभावातिरिक्त निश्चयासाधा रणकारणसमुदायस्य विवक्षितत्वान्नदोषइत्यर्थकतया " प्रत्येकारोपे-त्यादिति मूलं व्याख्येयम् ॥

" तस्मा " दित्यादिग्रन्थश्च धर्मिज्ञानस्य संशयहेतुत्वात् , ज्ञान-ग्रहपूर्वं तदभावेन प्रामाण्यनिश्चयस्यैव सामग्रीसत्त्वा न्नज्ञानग्रहस्तत्संश यरूपो नवा तदुत्तरमपि संशयः, धर्मिज्ञानसत्वेपि विशेषादर्शनविरहे-ण तत्सामग्रीविरहादिति व्याख्येयः ।

संशयत्वस्य कार्यतावच्छेदकत्वनिराकरणपरतया पूर्वमूलग्रन्थं व्याख्यातवतो दीधितिकारस्य मते-"धर्मिज्ञानश्चे" त्यादिना संशयं प्र-ति धर्मिज्ञानस्य हेतुताभिधानं न संगच्छते तथासति संशयत्वस्य ज-न्यतावच्छेदकताया आवश्यकत्वात् सामान्यलक्षणाप्रत्यासत्तिजन्याज्ञा त धर्मिविशेष्यकज्ञाने व्यभिचारेण सविशेष्यकबुद्धित्वमात्रस्य धर्मिज्ञान जन्यतावच्छेदकत्वासंभवात् । संशयत्वस्येवाप्रमात्वस्याप्यर्थसमाजग्र-स्ततया तस्याप्येतन्मते धर्मिधीजन्यतानवच्छेदकतया तदवच्छिन्नहेतु-तापरतयापि न मूलसंगतिः ॥

वस्तुतः - साधारणादिधर्मवद्धर्मिज्ञानहेतुतयैव संशये धर्मिनिय-मस्य दर्शनीयतया संशयत्वस्य जन्यतावच्छेदकत्वमावश्यकं , तत्त दभावसहचरितधर्मवत्ताज्ञानत्वेनैव तस्य हेतुताया वाच्यतयैकैक-कोटिविशिष्टबुद्धित्वस्य तज्जन्यतावच्छेदकताया व्यभिचारेणासंभवात तत्कोटिसहचरितधर्मवत्ता ज्ञानत्व तदभावसहचरित धर्मवत्ताज्ञानत्वाभ्यां

[ म ] धर्मिज्ञानंच संशयहेतुः ।

---

[ दी ] अभ्युपेत्यसंशयत्वेन जन्यतां प्रामाण्यसंशयाभावं व्युत्पादयति (धर्मिज्ञानमित्यादिना) धर्मितावच्छेदकप्रकारकधर्मिज्ञानं संशयहेतुः ।

---

[ग] पृथक्कारणत्वेपि आरोपे सहचरित धर्मवत्ता ज्ञानापेक्षायामपि अबाधितकोटिविशिष्टबुद्धौ तत्सहचरितधर्मवत्ताज्ञानानपेक्षणात् । तज्जन्यतावच्छेदककोटौ संशयत्वनिवेशनावश्यकत्वादित्यर्थ समाजग्रस्तधर्मस्यापि जन्यतावच्छेदकत्वाभ्युपगमपरतया मूलं दीधितिकृद्व्याचष्टे ( अभ्युपेत्येति ) साधारणधर्मवत्ताज्ञानस्य जन्यतावच्छेदकगर्भे संशयत्वनिवेशेप्यसाधारण धर्मवत्ताज्ञानादि जन्यसंशये व्यभिचारात्तद्व्यवहितोत्तरत्वस्य तज्जन्यतावच्छेदकताया आवश्यकत्वात संशयत्वनिवेशो निर्युक्तिक इति ध्येयम् ।

धर्मिज्ञानहेतुतया धर्मितावच्छेदकभानानियमा द्धर्मिज्ञानपदं धर्मितावच्छेदकविशिष्ट धर्मिज्ञानपरतया व्याचष्टे – ( धर्मितावच्छेदकेति ) तद्धर्मितावच्छेदकपुरस्कारेण धर्मिविषयके संशये इन्द्रियसन्निकर्षादिमतां तद्धर्माश्रयसकलधर्मिणां भानोपगमे धर्मितावच्छेदकप्रकारक ज्ञानत्वेनैव हेतुता वाच्या नतु धर्मिविषयकत्वमप्यन्तर्भावनीयमित्यवधेयम् ।

ननु - धर्मितावच्छेदकविशिष्ट धर्मिज्ञानसामान्य हेतुतया संशये तद्भाननियम इति नोपपद्यते, धर्मीन्द्रिय सन्निकर्षादेरेव धर्मिभान नियमोपपत्तेः । नचानेकधर्मीन्द्रियसन्निकर्षादिसत्त्वेपि कुत्रचिदेव धर्मिणिसंशयः कुत्रचिन्नेति नियमो नधर्मीन्द्रियसन्निकर्षादितो निर्वहतीति धर्मिज्ञानमेव तन्निर्वाहकमिति वाच्यं, संशये धर्मिज्ञानहेतुत्वेपि बहुषु धर्मिष्विन्द्रियसन्निकर्षादिसत्वे कस्यचिदेव धर्मिणो ज्ञानं कस्यचिन्नेत्यत्र नियामकाभावेन सर्वेषामेव सन्निकर्षादिशालिधर्मिणां ज्ञानस्यावर्जनीयतया संशये धर्मिभाननियमानिर्वाहात ।

[म] अन्यथा संशयेधर्मिनियमः

[दी] अन्यथा इन्द्रियसन्निकर्षादिशालिनि-

[ग] यदि चाननुगत तत्सन्निकर्षादि व्यक्ति घटितसामग्री संशयजनकज्ञाने धर्मिभाननियामिकोच्यते, तदा संशयस्य तद्धर्मिविषयकतायामेव सा प्रयोजिकास्तु किमन्तरा धर्मिज्ञानान्तरकल्पनया । यदि तत्तद्धर्मिविषयक प्रत्यक्षत्वावच्छिन्नोत्पत्तौ अननुगत तत्तत्सन्निकर्षव्यक्तिघटितसामग्रीणां प्रयोजकत्वध्रौव्येपि तद्धर्मिविषयकसंशयत्वावच्छिन्नोत्पत्तौ यद्यनुगतसामग्र्याः प्रयोजकत्वसंभवस्तदा तत्कल्पनमेवोचितमिति - मन्यते ; तदा तत्तद्धर्मि भानप्रयोजक सामग्रीत्वेनैव तत्तद्धर्मिकसंशयत्वावच्छिन्नं तत्तद्धर्मिकविशिष्टबुद्धित्वावच्छिन्नं वा प्रति हेतुत्वं कल्प्यताम् । तादृशानुगतरूपावच्छिन्न कारणघटितसामग्र्येव तत्तद्धर्मिकसंशयत्वावच्छिन्न प्रयोजिकास्तु । तत्तद्धर्मिभान प्रयोजकसामग्रीत्वापेक्षया तत्तद्धर्मिज्ञानत्वं लघ्विति चेत्, भवत्वेवं तथापि तेनैव रूपेणधर्मिज्ञानेहेतुत्वेतद्धर्मिज्ञानसत्वे तद्धर्मिभासकचक्षुस्संयोगादिविगमेपि तद्धर्मिकसंशयापत्तिः । न च तदा चाक्षुषादिसंशयस्य विशेष्य भासक लौकिकसन्निकर्षाभावेनानुत्पादेपि मानस स्तादृश संशय इष्यत इति वाच्यम् । तदानीमन्यविषय चाक्षुषादिसामग्रीसत्वे मानसोत्पादासंभवात । अतएव निश्चयेपि न विशेष्यज्ञानं हेतुरपितु तत्सामग्र्येवेति कोट्युत्कटत्वंच न स्यादिति युक्त्यन्तरमवतारयितुं मिश्रैः पूर्वोक्तयुक्तौ उपवर्णितानुशय बीजभूतामनुपपत्तिं स्वयं पूर्वयुक्ताविव निर्भरस्य वक्तव्यतयो द्धर्तुं साधारणादि धर्मवद्धर्मिज्ञानादिरूपकारणस्य संशये धर्मिभाननियामकत्वमित्येतत्प्रदर्शनपरतया " अन्यथेत्या " दि मूलं व्याचष्टे ( अन्यथेति ) धर्मिणि संशयो भवेदित्यन्तं " संशये धर्मिनियमो न स्यादित्यस्य व्याख्या । साधारणादिधर्मवत्त्वेन धर्मिणो ज्ञानमपि इन्द्रियसन्निकर्षरूप धर्मिभासकसामग्री सहकारेणैव संशयजनकं, अन्यथातिप्रसंगात, तथाच तादृशसामग्र्यैवान्यथा सिद्धिरित्याशंकामपनेतुमाह ( इन्द्रियसन्निकर्षादि शालिनीति )

[दी] अगृह्यमाण समानादिधर्मे धर्मिणि संशयो भवेत् ।

नच "तद्धेतोरेव तदस्त्वि" ति न्यायात् समानादिधर्मिज्ञानस्य सामग्र्येव हेतुः; अननुगमात् ।

---

[ग] इन्द्रियसन्निकर्षकाला दगृह्यमाणइत्यर्थः । आदिपदादालोक संयोग दूरत्वादि दोषाभाव योग्यतानां परिग्रहः (अगृह्यमाणेति) अगृह्यमाणः समानादिः - कोटिद्वयसहचरितः, धर्मो यत्र सतादृशधर्मी, तस्मिन्नित्यर्थः । आदिपदादसाधारणधर्मपरिग्रहः (संशयोभवेदिति) अन्यथापत्तिरनुभवविरोधान्न भवतीति भावः । ननु समानादिधर्मविशिष्ट धर्मिज्ञानजन्यतया भिमतसंशये समानादिधर्मविशिष्टस्य धर्मिणो भानोपगमात्तादृश धर्मिभासक सामग्र्या एव संशये धर्मिभाननियामकत्वमस्तु, किन्तादृश धर्मिज्ञान हेतुतयेति शंकां निरस्यति (नच तद्धेतो रेवेति) ज्ञानस्य सामग्रीत्यसमासलिखन मग्रिमतत्पदाभ्यां ज्ञानस्य परामर्शं स्फुटीकर्तुं (हेतुरिति) आस्तां संशयइति शेषः । समानादिधर्मवत्ता विषयकएव नियमतस्संशयइत्याशयेन तद्ग्राहकसामग्रा हेतुतोक्तिः । अनुमित्यादौच न व्याप्यवत्तादि ज्ञानसामग्र्या हेतुता संभवति, प्रत्यक्षादिना नुमितेरयोगपद्यात्, व्याप्यवत्ता प्रत्यक्षादिसामग्र्या अनुमितिहेतुत्वायोगात्, तद्विषयकानुमिति सामग्र्याश्चान्यस्या अक्लृप्तत्वादिति भावः । (अननुगमादिति)

यद्यपि अननुगतानामपि साधारणधर्मादिभासक सामग्रीणां संशयहेतुत्वं क्लृप्तं, संशयेपि तत भानोपगमात्, तथापि तादृशसामग्रीणां भूयसीनां संशयोपधानप्रयोजकत्व कल्पने गौरवात्तादृशधर्मवत्ताज्ञानस्य हेतुताभ्युपेत्य तद्घटितानुगतसामग्र्या स्तथात्वकल्पने लाघवं । धर्मिज्ञान हेतुत्वेपि यथा धर्मिभासकसामग्र्या अपेक्षा, तथा साधारणादिविशिष्ट धर्मिज्ञानहेतुत्वे नतद्विशिष्टधर्मिभासकसामग्र्यावश्यकी, धर्मिभासकसामग्री सामान्यापेक्षयैवा नतिप्र संगादिति भावः ।

[म] कोट्युत्कटत्वञ्च नस्यात् ।

---

[दी] तत्सामग्रीत्वेन हेतुत्वे लाघवात्तत्वेनैव हेतुत्वात् । तथाच व्यवसायस्य ज्ञाने तत्प्रामाण्यनिश्चयात्, तेन प्रतिबन्धात्; अज्ञानेच धर्मिज्ञानस्य कारणस्याभावात्; तत्र न प्रामाण्यसंशयसं भवइति । कोट्युत्कटत्वंचेत्यन्वाचये चकारः । तथाहि – उत्कटत्वं च यदि जातिस्स्यात्तदा कल्प्येतापि तन्नियामकं । तत्कोटिसह चरित भूयो धर्मविशिष्टधर्मिज्ञानं,

---

[ग] ननु समानादि धर्मवत्ताभासक सामग्रीणां नानात्वेपि तद्धर्त्तज्ञानोत्पत्ति प्रयोजकतावच्छेदक विशिष्टत्वेनानुगमय्य तासां कारणत्वं कल्पयित्वा तदवच्छिन्नघटितानुगत सामग्र्या स्संशयोपधान प्रयोजकत्व मुपगन्तव्यमिति शंकां निराकरोति (तत्सामग्रीत्वेनेति) त त्त्वेनैव - तादृशधर्मवत्ताज्ञानत्वेनैव ।

नच तथासति धर्मिभासकसामग्रीत्वेनापि हेतुत्वान्तरं वाच्यम्, तदपेक्षया समानादिधर्मवद्धर्मिज्ञान सामग्रीत्वेनैव हेतुत्वकल्पनं युक्त मिति वाच्यम् । निश्चयसाधारण तद्धर्मिक विशिष्ट बुद्धौ तद्धर्मिभासकसामग्रीत्वेन हेतुतायाः क्लृप्तत्वात् ।

धर्मिज्ञानस्य संशयहेतुत्वव्यवस्थितौ प्रामाण्यसंशयो नोपपद्यत इति दर्शयति (तथाचेति) तेन - प्रामाण्यनिश्चयेन । तत्र - व्यवसाये । (नप्रामाण्यसंशयइति) - अग्रिमेण संबन्धः । कोट्युत्कटत्वनियामकतया धर्मिज्ञानहेतुताया विचारासहत्वात् पूर्वमुक्तावेव निर्भर इत्याह । (अन्वाचयइति) विचारासहत्वमेवदर्शयति ( तथाहीति ) तन्नियाम कं – संशयस्य तद्धर्मिविशेषणतामात्र तत्कोट्यंशे उत्कटत्व नियामकं । (तत्कोटीति) तत्कोटि सहचरितत्व विशिष्टै भूयोभि धर्मै विशिष्टस्य धर्मिणो ज्ञानं कारणमित्यर्थः । भूयस्त्वञ्च विपरीतकोटि सहचरितत्वेन गृह्यमाण धर्मापेक्षयाऽधिक्यं । भूयस्सु स्थानेषु गृहीत तत्सहचाराद्,

[दी] भूयस्तत्कोटिसहचरित धर्मविशिष्टधर्मिज्ञानं वा कारणम्। तद्बलाच्च संशयसामान्ये धर्मि ज्ञानसामान्यम् । नच तत्तथा चाक्षुषत्वादिना संकरात्, आंशिकत्वाच्च । परन्तु तादृशधर्मविशिष्टधर्मिविषयत्वम् , नच तदेव तत्र नियामकमिति ।

---

[ग] भूयोधर्मदर्शनादपि उत्कट तत्संशयस्य क्वचिदुत्पत्तेः तादृशस्यापि वैकल्पिक हेतुतामाह ( भूयइति ) उत्कटसंशये तादृशधर्मिज्ञान विशेषहेतुत्वेपि प्रकृते धर्मिज्ञानं विनानुत्कट प्रामाण्य संशयो भविष्यतीति शंका निरासायाह ( तद्बलाच्चेति ) यद्विशेषयोरित्यादि नियमादिति शेषः । तत् - उत्कटत्वं । तथा - जातिः । संशयत्व न्तद्व्याप्यमुत्कटत्वञ्च मानसत्व व्याप्यमेव , तथाच न चाक्षुषत्वादिना संकर इत्यत आह ( आंशिकत्वाच्चेति )

मिश्रैस्तु आंशिकत्वस्य जातिबाधकता मनादृत्याव्याप्यवृत्ति स्संशयजातिरित्युक्तं , तामादृत्य तादृशधर्मविषयकत्व मुपाधि र्वेत्यभिहितं । दीधितिकारस्तु जाते र्व्याप्यवृत्तितानियमस्य सिद्धान्त सिद्धतया उपाधिनैव व्यवहाराद्युपपत्ता वुत्कटत्व जाते रप्रामाणिकतया चाव्याप्यवृत्ति तादृशजाति मवलम्ब्य सिद्धान्तप्रणयनं प्रमात्वजातिं निराकरिष्यतो मूलकृतो नुचितमित्याशयेनां शिकतया जातिपक्ष न्निराकृत्य उपाधिपक्षं दूषयितुं तादृशोपाधिं निर्वक्ति ( परन्त्विति ) प्रकृतधर्मिणि यत्र तादृशधर्मो न गृह्यते तत्र स्वातन्त्र्येण धर्म्यंतरविशेषणतया वा तादृशधर्मभानेपि न धर्मिणि उत्कट तत्कोटि संशयतेति तादृशधर्मप्रकारेण प्रकृतधर्मिविषयतां पर्यन्त मुक्तम् । तदेव - तादृशधर्मि विषयकत्वमेव । तत्र - तादृशधर्मि विषयकत्वावच्छिन्ने । नियामकं - कारणतावच्छेदकं । जनकत्वेनाभिमते धर्मिज्ञान इव संशयेपि तादृशधर्मविशिष्ट धर्मिविषयकत्वस्य सामग्र्यन्तरादेव निर्वाहे तत्र तादृशरूपेण कार्यकारणभावे मानाभावादिति भावः ।

[म] अथ पीतश्शंख आदर्शौमुखमित्यादिभ्रमोविशेषदर्शनेपि यथादोषान्तरात् , तथानिश्चितेपि प्रामाण्ये दोषान्तरात्तत्संशय इतिचेत् न तद्वदेवात्रापि प्रवृत्तिप्रसङ्गात् । साक्षात्कारिभ्रमे साक्षात्कारिविशेषदर्शनं विरोधि

---

[दी] सत्यपि विरोधिन्यानुमानिके पीतत्वाभावनिश्चये यथा दोषवशा त्पीतत्वभ्रमः, तथा प्रामाण्यस्य निश्चयेपि तस्य संशयस्स्यादित्युक्तं दूषयति ( साक्षात्कारीत्यादिना ।

---

[ग] इदंतु तत्वं , अत्रेदं संभावयामीत्यनुगतप्रतीति साक्षिकं संभाव नात्व मव्याप्यवृत्ति जाति विषयता विशेषोवा, नतूक्तोपाधिः, तस्य क्वचित् भूयस्तत्कोटि सहचरित धर्मविशिष्ट धर्मिविषयकत्वरूपतया क्वचिच्च तत्कोटिसहचरित भूयोधर्म विशिष्ट धर्मिविषयकत्व रूपतया भूयस्त्वस्यच यथायोगं द्वित्व त्रित्व चतुष्ट्वादि रूपतयाऽननुगमात् , नियामकश्च तस्यागत्या ननुगतमेवोपेयतइति । मूले ( विशेषदर्शनेपी- ति ) पीतशङ्खादावपीतत्वादि निश्चये पूर्वं सत्यपीत्यर्थः । ( तद्वदत्रापी ति ) यथा तत्र पीतत्वादिभ्रमे सत्यपि पूर्वोत्पन्ना दपीतत्वादिनिश्चया त्तत्प्रकारिका प्रवृत्तिर्जायते, तथा रजतादिज्ञानेऽनभ्यासदशापन्नेपि - प्रामाण्यग्रहस्वीकारे तदुत्तरं कथंचित् अप्रामाण्य संशयोपपादनेपि - निश्चितप्रामाण्यकतया नभ्यासदशापन्न ज्ञानस्यापि प्रवर्तकता स्या- दित्यर्थः । अप्रामाण्यज्ञानानास्कन्दित ज्ञानप्रवर्तकत्वे नायं दोषः, अतो दूषणान्तरमाह (साक्षात्कारीति ) अनेन ग्रन्थेन विशेषदर्शन दशायां पीतत्वादिभ्रमोपपादनं प्रामाण्यसंशयोपपत्तौ सत्यां स्व तः प्रामाण्यग्रहे नदूषण मतो दोषाधीनत्वस्य तदनुपपादकत्व प्रदर्शना य दोषवशाद्यथा पीतत्वादिभ्रम इति दृष्टान्तदूषण मिद मित्याह - ( सत्यपीति ) यत्र प्रथमं दोषासत्वात शंखो नपीतइति चाक्षुषं दोष समवधानंच तत्र तादृशदोषवशा त्पीतत्वभ्रमो यथेति यदि " अथपीत शंख " इत्यादे रर्थ स्तदा तदुपरि साक्षात्कारीत्यादि दूषणासंगतिः ,

[म] साक्षात्कारिभ्रमे साक्षात्कार्येव विपरीत निश्चयः प्रतिबन्धकः नत्वानुमानिकादिः । संशयेतुनिश्चयसामान्यम् । अनुमानादिना-तन्निश्चयेकदाचिदपि तस्यानुत्पादात ।

---

[ग] साक्षात्कारि विपरीत निश्चयस्यैव तत्र सत्वेन दोषाधीनतयैव तदुपपत्ते रित्यानुमानिक विपरीतज्ञान दशापर एवासौ ग्रन्थः, समानेन्द्रिय जन्य लौकिका पीतत्वादि निश्चय स्थले दोषसमवधानेपि तादृश निश्चयनाशएव पीतत्वादिभ्रमोत्पत्तेः। अन्यथा समानेन्द्रियजन्यता प्रयुक्त विरोधिताया एवोच्छेदात । दोषविशेषाजन्य पीतत्वाद्यारोपे-विपरीत निश्चयमात्रस्यैव प्रतिबन्धकत्वा दित्याविष्कर्तुं "आनुमानिक" इत्युक्तम् । आनुमानिक विपरीत निश्चयस्योक्त भ्रमाविरोधिता लाभाय साक्षात्कारीत्यनन्तर मेवकारं पूरयति ( साक्षात्कार्यैवेति ) उभयत्र साक्षात्कारित्वं – साक्षात्त्वग्रहयोग्यत्वम् । अत स्साक्षात्कारित्व जातेः पित्ताजन्य पीतत्वाद्यारोपात्मक पीतत्वाद्युपनीतभान साधारण्येपि न क्षतिः। साक्षात्कार्यपि शंखत्वादिदर्शनं न पीतत्वाद्यारोपविरोधीति विशेषदर्शनपदं ग्राह्याभावनिश्चयपरतया व्याचष्टे-( विपरीतनिश्चयइति ) एवकारव्यवच्छेद्यं स्पष्टयति ( नत्वानुमानिकादिरिति ) विपरीतनिश्चय इत्यनुपज्यते । असाक्षात्कारिविपरीतनिश्चये साक्षात्कारि भ्रमविरोधित्वाभावः पूरितैवकारलब्धार्थ एव "तथादर्शनादि" ति मूलस्थ तथापदेन परामृष्टः । भ्रमविशेषरूप ज्ञानप्रतिबन्धकतायां साक्षात्कारित्वस्य प्रयोजकत्वाभिधानात संशयरूपज्ञानस्य प्रतिबन्धकतायां तस्याप्रयोजकत्वं लभ्यते, विशेषविधे र्विशेष निषेधपरतया औत्सर्गिकत्वादिति विपरीतनिश्चयसामान्यस्यैव संशयप्रतिबन्धकता लाभइति स्फुटयति - ( संशयेत्विति ) तन्निश्चये - विपरीतनिश्चये। तस्य - संशयस्य अनुत्पादात् ।

नच प्रकृते प्रामाण्यस्य तन्मते साक्षात्कारिनिश्चयस्यैव सत्वात् साक्षात्कारित्वस्य संशयप्रतिबन्धकतायां तन्त्रत्वेपि संशयानुपपत्ति स

[म] दिङ्मोहादौ तथादर्शनात , तत्र च - पित्तादिनाप्रतिबन्धात ।

---

[दी] तथाच प्रतिबन्धकाविरहात्पीतत्वादिभ्रमोत्पादः । अनु त्पादश्च प्रतिबन्धकसत्त्वात् । प्रामाण्यसंशयस्य तुविशेषोवक्ष्यते ।

---

[ग] त्वा तस्यां तथात्वस्यातन्त्रता प्रतिपादनं प्रकृतानुपयोगीति प्रकृतोपयोगितया तदभिधानासंगतं रिति वाच्यम् । अनुव्यवसायस्य प्रामाण्यघटक ज्ञान धर्म प्रकारिताद्यंशे लौकिकत्वेपि तद्घटक वह्निविषयांशे अलौकिकत्वमिति पित्तादिदोषाप्रतिबद्धत्वस्य शुक्लत्वाद्यंशे उपनीतभानात्मकस्य रूपादि लौकिकग्रहस्य सत्वे शंखो नश्वेत इत्यादि साक्षात्कारि भ्रमोत्पत्या साक्षात्कारिभ्रमप्रतिबन्धे प्रकारतावच्छेदकांशे लौकिकत्वापेक्षाव त्संशयप्रतिबन्धेपि तदपेक्षायां प्रकृते संशयोपपत्तिसंभवात् तत्र तदनपेक्षाव्युत्पादनस्या वश्यकत्वात् । पीतत्वादिभ्रमस्थल प्रकृतस्थलयो रेतावता विशेषलाभेन प्रकृतप्रामाण्य संशयानुपपत्ति तादवस्थ्यपरता मुक्तग्रन्थस्य स्फुटयति ( तथाचेति ) ( प्रतिबन्धकविरहादिति )

नच विपरीतनिश्चय सामान्याप्रतिबद्धत्वं पीतत्वभ्रमस्य साक्षात्वग्रहयोग्यताधीनम् , तद्योग्यतापि लौकिकसन्निकर्षाजन्यस्य तस्यदोषविशेषजन्यतयैव, तथाच दोषविशेष समवधानस्थले पीतत्वग्रहप्रतिबन्धकाभावः तत्समवधानाधीन एवेति प्रामाण्यस्थलेपि दोषसमवधानात् प्रतिबन्धकाभावनिर्वाहः संभवतीत्यविशेषइति वाच्यम् । संशये क्वचिदपि साक्षात्वाग्रहेण संशयजनकदोषस्य साक्षात्कारित्व ग्रहाप्रयोजकतया दोषजन्यत्वेपि तस्य तद्योग्यत्वेन विशेषात . ( विशेषो वक्ष्यतइति ) साक्षात्कारिभ्रमप्रतिबन्धकतायां साक्षात्कारित्व मात्रं नतन्त्रम्, अपितु समानेन्द्रियजन्यत्व सहितं, अतस्त्वचा उरगत्वाभावादिग्रहेपि दोषविशेषा द्दंशादौ उरगत्वादे श्चाक्षुषाद्यारोप इति वक्ष्यत इत्यर्थः । विपरीतनिश्चयसामान्यं यत्र प्रतिबन्धकं तत्र तदभावव्याप्यदर्शनादिकमपि, यथानुमित्यादाविति नियमा द्विपरीतनिश्च

[ग] यथाकाम्यस्य संशयप्रतिबन्धकताभिधानेन भ्रमत्वसंशयेपि प्रामाण्य निश्चयस्य प्रतिबन्धकत्वलाभात् प्रमात्वनिश्चयेन प्रतिबन्धा तद्भाव संशयो माभूत्, भ्रमत्वसंशये बाधकविरहेण ततएव विषयसंशयादि भविष्यतीति शंकाया अनवकाश इत्यवधेयम् । अतएवात्र भ्रमत्वसंशय प्रमात्वग्रहस्य प्रतिबन्धकतालाभे "भ्रमत्व संशयश्च तज्ज्ञ.नाज्ञानाभ्यां न संभवतीत्युक्तत्वा"दित्यग्रिम मुलासंगतिरित्यपि निरस्तम्.

आलोककारास्तु "विशेषदर्शन" मिति विशेषस्य – विपरीतस्यैव दर्शनमित्यर्थकं । एवञ्च प्रतिबन्धकतायां साक्षात्कारित्वस्यैव ग्राह्याभावावगाहित्वस्याप्यपेक्षाबोधनात् संशयप्रतिबन्धकतायां ग्राह्याभावावगाहित्वानपेक्षाया अपि उक्त व्युत्पत्ति बलेन लाभात् प्रमात्वनिश्चयस्य भ्रमत्वसंशय प्रतिबन्धकता लाभ इत्याहुः ।

ननु संशयस्य साक्षात्त्वग्रहायोग्यत्वेन न विपरीतनिश्चय सामान्य प्रतिबध्यता, दोष विशेषज भ्रम लौकिकसन्निकर्षजज्ञान साधारण तद्योग्यताया अनुगताया दुर्वचत्वात् । नापि संशयत्वेन, अनुमित्याद्यसंग्रहात् । नापि प्रत्यक्षनिश्चयान्य ज्ञानत्वेन, निश्चयरूपोपनीत भानासंग्रहात् । नच तदसंग्रहेपि नक्षतिः, विपरीतज्ञानोत्तर प्रत्यक्षनिश्चये विशेषदर्शनस्य हेतुतया बाधनिश्चयसत्त्वे विशेषदर्शनस्या सत्वे निश्चयोपनीतभानाप्रसंगात्, तत्सत्वेच तस्येष्टत्वादिति वाच्यं । विशेष दर्शन हेतुताया अनेनानभ्युपगमात् । नापि लौकिकान्यज्ञानत्वेन, लौकिकसन्निकर्ष जन्य संशयासंग्रहात् ।

अथ लौकिकनिर्णयान्य ज्ञानत्वं प्रतिबध्यतावच्छेदकं, वस्तुतो लौकिकान्यज्ञानत्वमेव तथा, लौकिकसन्निकर्षो नसंशयजनकः, सर्वत्र कोट्युपस्थिति स.वेनोपनयन सन्निकर्ष एव । क्वचिद्वियमानोपि लौकिकसन्निकर्षो विशेषा दर्शनसहित दूरत्वादि दोषेण प्रतिबन्धा न्न वास्तव कोटिग्राहकः । तादृशदोषासत्त्वेच बलवत्या तल्लौकिकप्रत्यक्ष सामग्र्या प्रतिबन्धान्न तद्विपरीतकोटि भान संभव इति संशयो नोपपद्यत इति चेत्। तथापि पित्तादिदोषजन्यस्मर्यमाण पीतिमाद्या-

[ म ] नच - नात्यैव कश्चिद्दोषोस्ति । नच प्रामाण्यसंशया

---

[दी] ननु यथासत्यपी न्द्रियसन्निकर्षादौ दोषान्नश्वैत्यस्य ग्रहः, तथा सत्यपि व्यवसायादौ प्रामाण्य स्येत्यत्र, दोषाद्भ्रमसंशययो रुत्पादइत्युक्ते चाह ( नचेति )

---

[ग] रोपे आनुमानिकाद्य पीतत्वनिश्चयस्य प्रतिबन्धकत्वापत्ति दुर्वारैव। अथ दोषविशेषाजन्यालौकिकज्ञानत्व न्तथेति चेत्, तर्हि साधूक्तं । विशेषदर्शने दोषान्तरात् भ्रमवदप्रामाण्य संशयो भविष्यतीति चेत्, सत्यं; एतदालोच्यैव प्रामाण्यनिश्चयेपि दोषात् संशयइत्येतन्निराकरणपरत्वं " नचे " त्यग्रिममूलस्य वक्ष्यति।

नव्यास्तु अलौकिक ज्ञानत्वं विपरीतनिश्चय सामान्यप्रतिबद्ध्यतावच्छेदकं, अलौकिकत्वंच न लौकिकसन्निकर्षाद्यजन्यत्वं, अपितु साक्षात्त्वव्यंजक तदीय विषयता विशेष शून्यत्वं । तादृशीच विषयता लौकिकसन्निकर्षजन्य बुद्धिवत् पित्तादि दोष जन्य स्मर्यमाण पीतिमाद्यारोपेपि प्रामाणिकी, तत्र पीतं साक्षात्करोमि पश्यामीति प्रत्ययात्, तत्र लौकिकसन्निकर्षस्य व्यभिचारोऽगत्या दोषविशेषाजन्यत्वं कार्यतावच्छेदके निवेश्य वारणीयः । इत्थंच विपरीतनिश्चय सामान्य प्रतिबद्ध्यतायामपि दोषविशेषाद्यजन्यत्व मनिवेश्यैव पीत श्शंख इत्याद्यारोप उपपादयितुं शक्यः । संशयेच न तादृशीविषयता, तत्र सन्देह्मीत्येवानुव्यवसायात् , नतु साक्षात्करोमीति । अत स्संशयमात्रस्य विपरीतनिश्चय सामान्य प्रतिबध्यत्वमित्याहुः ।

( व्यवसायादाविति ) प्रामाण्यघटक धर्मधर्मि वैशिष्ट्यभासक व्यवसायादावित्यर्थः । प्रामाण्यस्य दोषान्न ग्रहइत्यनुषंगेणान्वयः । इत्यत्र-प्रामाण्यसंशयोपपादक युक्तौ । (दोषात् भ्रमसंशययो रुत्पाद इत्युक्तेचेति) सत्यपि प्रामाण्यनिश्चये दोषविशेषजन्यज्ञानस्य विपरीतज्ञानाप्रति

[ दी ] नहि श्वैत्यप्रामाण्यग्रह प्रतिबन्धकसाधारणं प्रतिबन्धक तावच्छेदकं,

---

[ प ] बध्यतया श्वैत्यादि ग्रहदशायां दोषविशेषात् स्मर्यमाण पीतिमाद्यारोपवत् प्रामाण्यसंशयो दोषान्तरात् स्यान्नेति यदुक्तं तत्र चेत्यर्थः। दोषानुगम खण्डने उक्तगौरवेण प्रामाण्यसंशयजनकदोषाजन्यत्वस्य विपरीत निश्चय प्रतिबध्यतावच्छेदके निवेशासंभवात् । प्रामाण्यसंशयो भविष्यतीत्युक्तौऽपि न चेत्यादि दूषणसंगतिरित्याशयः ।

नच दोषात् प्रामाण्याग्रहेऽपि तस्य स्वतस्त्वक्षते स्तदाशंकनासंगतिरिति वाच्यम् । यत्र प्रामाण्यसंशयोऽनुभवसिद्ध स्तत्र दोषात्-प्रामाण्याग्रहेऽपि स्वतोग्राह्यत्वशरीरे ज्ञानग्रहसामग्र्यां प्रामाण्यग्रहप्रतिबन्धका समवहितत्व निवेशात् स्वतस्त्वोपपत्तेः । "नच जात्यैव कश्चिद्दोष" इति मूलमभेदे तृतीयेत्यभिप्रायेण । जात्या-जन्मना, अनभ्यासदशाजन्मनेति यावत् । तथाचानभ्यासदशाजन्मना नुगतो दोषः अनभ्यासस्य प्रामाण्याग्रहरूपत्वेन तद्घटितानुगत धर्मावच्छिन्नस्य तदधीनसत्ताकस्य तत्प्रयोजकत्वानुपपत्तेरित्यननुगत रूपेण तत् प्रतिबन्धकत्वं कल्प्यम्, तच्च गौरवात् दुर्ग्रहमिति व्याख्यातमालोककृता । तन्नसम्यक् । अनभ्यासदशाजन्मनो नुगतदोषत्व निराकरणेऽपि-ताद्दशदोषान्तरात् प्रामाण्यशंकाया अनिराकरणात् । तन्निराकरणाया नभ्यासदशाजन्मवत् अन्योऽपि नानुगत इति भावो मूलस्य व्याख्येयः, तत्र च जातिपदस्यानुगतरूपार्थकतया अनुगतरूपपुरस्कारेण कश्चिद्दोषो नश्वैत्यप्रामाण्यादि ग्रहप्रतिबन्धकः, नवा पीतत्वारोप प्रामाण्यसंशयजनक इत्यर्थकत्व मेवोचित मित्याशयेन व्याचष्टे । ( नहीति ) यदि-प्रामाण्यग्रहप्रतिबन्धादि प्रयोजक यावत्साधारणोऽ नतिप्रसक्तो धर्मस्संभवतीति शक्यशंकनं तदा श्वैत्यग्रहप्रतिबन्धक पित्तादिसाधारणोऽपि संभवेत् ! तथाच प्रामाण्यग्रहेऽपि नदोषस्य पृथक्प्रतिबन्धकता,

[म] द्विषयसंशयवत् प्रामाण्यज्ञाने प्रामाण्यसंशयात् प्रामाण्यसंशयइति वाच्यम् । प्रामाण्यज्ञानेऽपि स्वतः प्रामाण्यग्रहे तत्संशयानुपपत्तेः ।

---

[दी] पीतत्व भ्रमप्रामाण्य संशय साधारणं जनकतावच्छेदकं तत्तद्व्यवसाय प्रामाण्यग्रह प्रतिबंधक साधारण प्रतिबंधकतावच्छेदकंवा दोषत्वमेकमस्तीत्यर्थः । नवा अप्रामाण्योपस्थितिरेवानुगता प्रामाण्यग्रह प्रतिबन्धिका, अनुव्यवसायात्पूर्वं तद्विरहेऽपि अनन्तरं ततः अप्रामाण्यसंशयात् । नच तत्तत्क्षणसम्बन्धाएव प्रतिबन्धकाः, अनन्तानां प्रतिबन्धकत्वकल्पनामपेक्ष्य अनुव्यवसायस्य प्रामाण्याग्राहकत्वकल्पनाया एव

---

[ग] अपितु श्वैत्य प्रामाण्य ग्रह साधारण रूपावच्छिन्नं प्रति पित्तद्रव्यादिसाधारण रूपेणैकमेव प्रतिबन्धकत्वमित्यपि शङ्कास्या तामेव प्रथमं निराकरोति(श्वैत्यप्रामाण्येति)ननु पीतत्व भ्रम प्रामाण्य संशयसाधारणरूपावच्छिन्न जनकतायेन तथेत्याशङ्कां निराकर्तुं तदवच्छेदक मप्येकं दुर्वचमित्याह (पीतत्वेति) माभूत श्वैत्यग्रहप्रतिबन्धक साधारणरूपेण प्रामाण्यग्रहं प्रतिदोषस्य प्रतिबन्धकता, माचभूत् सकलप्रामाण्यग्रहे दोषाणा मेकप्रतिबन्धकत्वं, घटज्ञानादि प्रामाण्यग्रहं प्रति दोषाणा मेकैकप्रतिबन्धकत्वं कल्पनीय मत आह(तत्तद्व्यवसायेति) (प्रामाण्यग्रहेति) प्रामाण्य लौकिक प्रत्यक्षेत्यर्थः । तेनाप्रामाण्योपस्थिति दशायां प्रामाण्यानुमित्या द्यनुत्पत्तावपि नक्षतिः । तद्विरहेऽपि – अप्रामाण्योपस्थिति विरहेऽपि । अनन्तरन्ततः - अनुव्यवसायद्वितीय क्षणोत्पन्नाप्रामाण्योपस्थितितः । अप्रामाण्यसंशयात्, तत्रानुव्यवसायेन प्रामाण्यग्रहे बाधकाभावेना प्रामाण्योपस्थितेः प्रामाण्य ग्रहप्रतिबन्धकतया तदुपपादना संभवादिति शेषः ।

[दी] लाघवेनौचित्यात् । यथाचैतत्तथा वक्ष्यामः ।

ननु - माभूदनुव्यवसायस्य ग्रहेतत्प्रामाण्यस्यग्रहात्तत्संशयाद्व्यवसायप्रामाण्यसंशयः, भ्रमत्वसंशयात्तु तत्संशयः स्यात्,

---

[ग] ननु - सामग्रीबला दनुव्यवसायस्य प्रामाण्यग्राहकत्वमावश्यकमिति तस्य प्रामाण्याग्राहकत्वं दुष्कल्प्य मत आह ( यथाचेति ) एतत्-अनुव्यवसायस्य प्रामाण्यग्राहकत्वं, व्यवसायस्य प्रामाण्यमेव तेषां स्वतोग्राह्यं नत्वनुव्यवसाय प्रामाण्यमिति भ्रमेण, व्यवसायधर्मिक प्रामाण्य संशय एव तद्धर्मिज्ञान मपेक्षितं नत्वनुव्यवसाय प्रामाण्य संशये तज्ज्ञानमिति भ्रमेणवा " नच प्रामाण्यसंशयादि " त्यादिका मूलशंका । प्रामाण्यमात्रमेव तेषां स्वतोग्राह्यं परतः पक्षे बाधकस्याविशेषात् । एव मविशेषेण संशयमात्र एव तद्धर्मिधीः हेतुरित्याशयेन भ्रमन्निराकरोति मूले-( प्रामाण्यज्ञानेपीति ) ननु त्विरोधिनिश्चये प्रमात्वाभावसंशयस्येव भ्रमत्वसंशयस्या प्ययोगात् " नन्वि " त्यादिना नुव्यवसाये व्यवसाय प्रामाण्य रूप स्वविषयांशे भ्रमत्व संशया त्तदागृहीतेपि व्यवसायप्रामाण्ये शंकास्यादिति शंका नावतरति , अनुव्यवसायानुव्यवसायं विना धर्मिज्ञानाधीनस्य तत्र भ्रमत्वसंशयस्या प्ययोगात् , अनुव्यवसाय ग्रहस्य स्वीकारे तत्र भ्रमत्वविरोधिनः प्रामाण्यस्य निश्चयोस्तीति स्वयमेव प्रथमं स्फुटीकृतत्वादित्यतः साक्षात्कारि भ्रमइव संशयेपि ग्राह्याभावावगाहि निश्चय एव विरोधी नतु विरोध्यन्तरनिश्चय इत्यभिमानमूलकत्वेन तादृशशंकामवतारयति - दीधितौ ( ननुमाभूदिति )

यद्यपि "साक्षात्कारिभ्रम" इत्यादितो ग्राह्याभावविषयकत्वं संशयप्रतिबन्धकताया मतन्त्रमिति लब्धम्, अतएवच 'भ्रमत्वसंशयश्च तज्ज्ञानाज्ञानाभ्यां न सम्भवतीत्युक्तत्वा'दिति समाधाने"उक्तत्वा"दितिवक्ष्यते । तथापि भ्रमरूपविशेषोपादान बलादेव संशय प्रतिबन्धकतायां साक्षात्-

म ] ननु ज्ञानमात्रं न विरोधिबुद्धिनिवर्तकं, भ्रमोत्तरं बाधकज्ञानोदयात्, किंत्वनन्यथासिद्धं । अतएवतेन विनापि तज्ज्ञानं सम्भवतीति अन्यथासिद्धतया शंकितं तन्निश्चयं परिभूय

---

[दी] न च तस्याभावोपि तदागृह्यते, उपस्थापकाभावादित्याशंकते (नन्वित्यादिना) अनन्यथा सिद्धं - अन्यथासिद्धत्वेन - भ्रमत्वेन, अगृ-

---

[ग]कारित्वस्यातन्त्रतालाभेन संशये विपरीतनिश्चयसामान्य प्रतिबध्यता लाभा दर्थत स्तत्र विरोध्यन्तरनिश्चय प्रतिबध्यता लभ्यते, साक्षात्कार्यैवेतिवत् विपरीतविषयक एवेत्यवधारणपरतया संशयप्रतिबन्धकतायां ग्राह्याभावावगाहित्वस्या तन्त्रतालाभाद्वा, उभयथाप्यस्फुटतया तत्परत्वानवबोधे नैतच्छंकावतारः । तस्याभावोपि – भ्रमत्वस्याभावोपि । अनुव्यवसायइति शेषः । तदा–अनुव्यवसायकाले । उपस्थापकाभावात – भ्रमत्वोपस्थापकानैय्यत्यात् । भ्रमत्वेनागृहीतस्य भ्रमत्वरूपविरोधिविषयकग्रहस्यापि प्रतिबन्धकतयाऽ नन्यथासिद्धपद मन्यथासिद्धत्वग्रहविषयाभावविशिष्टार्थकतया व्याचष्टे ( अनन्यथेति ) " अन्यथा सिद्धत्वेने " त्यस्य व्याख्या भ्रमत्वेनेति ।

यद्यपि 'भ्रमत्व मन्यथासिद्धत्व' मिति मूलकृतैव विवरणीयं पश्चात्, तथापि तदनवलोकनेन प्रथमं प्रसिद्धार्थान्वर परत्व शंकानिराकरणायेदं व्याख्यानं, अन्यथासिद्धतयेत्यग्रिममूलस्यापीदं व्याख्यान मित्यवधेयम् । अन्यथा– विशेष्यं यद्धर्मवत् तदन्यप्रकारेण, सिद्धं – सिद्धिः; तस्य ज्ञानमिति यावदिति व्युत्पत्त्याऽन्यथासिद्धपदस्य भ्रमार्थकता । मूले– अतएव – अन्यथासिद्धतया गृहीतज्ञानस्याविरोधित्वादेव । संशय इत्यग्रिमेणास्य संबन्धः । " तेन विनापि तज्ज्ञानं संभवती " त्यनेन संशयप्रयोजकतया भिधीयमानस्य तद्वत्ताज्ञानविषयत्वधर्मस्य साधारण्यं दर्शितम् । " अन्यथासिद्धतयाशंकित " मिति–विषयभूतपुरुषत्वादिनिश्चयविशेषणं परिभवहेतुगर्भं । परिभूय– स्वाविरोधिनं कृत्वा । सं

[म] ज्ञानविषयत्वा द्विषये यथासंशय स्तथाप्रामाण्ये तन्निश्चयस्या न्यथासिद्धिशंकया तं परिभूय भवति संशयः । नच व्यवसायस्य ज्ञानत्वे घटविषयकत्वेच यथानुव्यवसायविषयत्वा न्नसंशय स्तथाप्रामाण्येपि नस्यात्, अनुव्यवसायस्य प्रमात्वनियमादिति वाच्यम् । अज्ञाने अविषयेच ज्ञानत्वविषयत्वयो रनुव्यवसायेना ग्रहणनियमात्, तद्विषयत्व मनन्यथासिद्धं प्रामाण्यविषयत्वंच ते

---

[दी] हीतं । अन्यथासिद्धतया-भ्रमत्वेन । घटविषयत्वे-धर्मिविषयत्वे ।

---

[ग] शयो जायत इत्यध्याहार्यं । एवमग्रेपि (प्रामाण्यइति)-अग्रिमेण-"संशय" इत्यनेन, सम्बन्धः । तन्निश्चयस्य - प्रामाण्यनिश्चयस्य । तम् - प्रामाण्यनिश्चयम् ।

ननु घटोयमिति ज्ञाने घटविषयकत्वावच्छिन्न घटत्वप्रकारकत्व रूप प्रामाण्यमिव घटविषयकत्वत्वावच्छिन्नमपि संदिह्यते । घटत्वप्रकारकत्वांशे संशयस्य तत्र कदाप्यनुदयात्, घटविषयकत्वांशस्य संशययोग्यतयैव प्रामाण्यसंशयात् । तथाचानुव्यवसायगृहीततया घटविषयकत्वे यथा न संशयइति दृष्टान्तासंगतिः, अतो "घटविषयकत्व" इति मूलस्य घटविषयत्वत्वस्य संशयकोटितानवच्छेदकत्वं न तात्पर्यं, किन्तु घटत्वांशस्योपलक्षणतया किंचिद्विषयकत्वांशस्यैवा तथात्व इति व्याचष्टे दीधितौ ( घटविषयत्वइति ) मूले तद्विषयत्वं - ज्ञानत्व सविषयत्व विषयकानुव्यवसायत्वम् । अनन्यथा सिद्धं - तद्विषयत्वांशे अभ्रमत्वनियतं । अत स्तद्ग्रहविषयानु व्यवसाये ज्ञानत्वाद्यंशे भ्रमत्वसंशयानुदया न्न व्यवसाये नुव्यवसायगृहीत ज्ञानत्वादे स्संशय इति युज्यत इति भावः । प्रामाण्यविषयत्वञ्च - प्रामाण्यावगाहनन्तु । तेन विनापि - प्रामाण्येन विनापि । अप्रमायामपीति यावत् । तथाच प्रामाण्यविषयकानुव्यवसायत्वं न - प्रामाण्यांशे भ्रमत्वनियत मिति तद्ग्रहविषयेप्यनुव्यवसाये प्रामाण्यांशे

[म] नाविनापि संभवतीति तत्र संशयइतिचेत् । मैवम् । भ्रमत्व मन्यथासिद्धत्वम् । ततश्च प्रामाण्यनिश्चये भ्रमत्वसंशयेन तद्विषये

---

[दी] भवेदेवं यदि तदभावस्य तदभावव्याप्यत्वेनैव वा धर्मान्तरस्य निश्चयएव प्रतिबन्धक स्स्यात, नत्वेवं, परन्तु यदवच्छेदेन तद भावोनिश्चितस्तन्निश्चयेपि । यथाचैतत्तथापरामर्शे वक्ष्यामः । तथाच प्रमात्वावच्छेदेन भ्रमत्वस्याभावनिश्चयान्न प्रमात्वनिश्चये तत्सम्भव इत्याह ( भ्रमत्वमित्यादिना ) न विषयसंशयस्तवमते

---

[ग]भ्रमत्वसंशयसंभव इति भावः । तत्र संशयः - व्यवसाय प्रामाण्येनु- व्यवसाय गृहीतेपि संशयः । भ्रमनिराकरणं विना भ्रममूलकोक्तशंकासमाधानं नभवतीति तन्निराकरणं स्फुटयति दीधितौ ( भवेदेवमिति ) तदभावव्याप्यस्य तदभावव्याप्यत्वेनैव ज्ञानं यदि तद्ग्रहप्रतिबन्धकं भवेत्तदा तैरपि भ्रमत्वाभावव्याप्तिविशिष्टस्य प्रमात्वस्य स्वतो ग्राह्यत्वानभ्युपगमात् भ्रमत्वसंशय स्संभवतीति तमपि निराकरोति ( तदभावव्याप्यत्वेनैवेति ) धर्मान्तरस्य - तदभाव व्यतिरिक्तस्य । ( यदवच्छेदेनेति )यत्र धर्मे तदभावावच्छेदकत्वं निश्चितमित्यर्थः । नन्वत्र कायुक्तिरित्यत आह ( यथा चैतदिति ) पुरुषो न स्थाणुरिति निश्चये अयं पुरुष इत्याकारक स्थाणुत्वाभावव्याप्यप्रकारक निश्चयस्यापि स्थाणुत्वसंशयविरोधिताया आनुभाविकत्वात्तदभावव्याप्तिविशिष्ट वैशिष्ट्यावगाहिताया अकिञ्चित्करत्वमिति वक्ष्यत इत्यर्थः ।

इदमुपलक्षणम् - तदभावावच्छेदक धर्मदर्शनस्या अविरोधित्वे ऽनुव्यवसाये ज्ञानत्वादिविषयकत्वग्रहेपि ज्ञानत्वांशे भ्रमत्वसंशयोत्पत्त्या व्यवसाये ज्ञानत्वादिसंशयस्य दुर्वारतया परेषां ज्ञानत्वाद्यंशे असंशयोपपादनं विरुद्ध्यत इत्यपि बोद्धव्यम् ।

भ्रमत्वसंशया द्विषयसंशयस्यानुत्पत्ति व्यवस्थापनायोगात, " एव " मित्यादि मूलस्य तेषां तदुपगमासंभवदर्शन परतां स्फुटयितुं पूरयति ( तवमते स्यादिति ) एवंचान्यत्र-अनुव्यव

[ म ] प्रामाण्यसंशयइति फलितोर्थः । भ्रमत्वसंशयश्च तज्ज्ञाना- ज्ञानाभ्यां नसंभवतीत्युक्तत्वात् । एवमन्यत्रापि भ्रमत्वसंशयात् न विषये संशयः स्वतः प्रामाण्यग्रहे भ्रमत्वसंशयाभावात् ।

---

[दी] स्यात् । ज्ञानप्रामाण्यसंशया त्तद्विषयसंशयं वदन्तएवेत्थ मुपाल भ्याः, नतु वयं । वयंहि निश्चयसत्त्वासत्त्वयोस्साधारण धर्मद र्शनादेव संशय इति वदामः । तथाच यथा स्थाणुत्वादेस्तथा प्र मात्वप्रमासाधारण ज्ञानविषयत्वादिदर्शनात् प्रामाण्यस्यापीति

---

[ ग ] साया दन्यत्र पुरुषादिज्ञाने प्रमात्वनिश्चये तदभावसंशयासंभवे पि भ्रमत्वसंशयात्तद्विषये पुरुषत्वादौ संशयइत्यपि तवमतेन- स्यात् – नसम्भवतीति मूलार्थः । प्रामाण्यसंशयान्न विषये संशयो पितु निश्चितेप्यर्थे साधारणधर्मदर्शनादेव संशयइति प्रामाण्यसंशयोनाभ्यु- पेयतएव, विषयसंशयानुरोध विरहादिति "नचवाच्य"मित्यादिशंकाभिप्रा यो नसंभवति, प्रामाण्यसंशयमनपेक्ष्यैव निश्चितार्थगोचर संशयोपगमे निश्चितेपि प्रामाण्ये संशयापत्ते रतः व्यवसाये प्रामाण्यसंशयोपपादनपरत यैव ज्ञानप्रामाण्यसंशयस्य विषयसंशयाहेतुत्वशंकां प्रकृते संगमय ति ( ज्ञानप्रामाण्यसंशयादिति ) ( इत्थमुपालभ्याइति ) तव निश्चि ते प्रामाण्यादौ कदापि संशयो न स्या त्तद्धेतुसंशयस्य दुर्घटत्वादि- त्युपालभ्या इत्यर्थः । ( निश्चयसत्त्वासत्त्वयोरिति ) निश्चयासत्त्व इव तत्सत्वेपीत्यर्थः ।

नच – निश्चयकालीनार्थसंशये प्रमात्वसंशयस्याहेतुत्वेपि अप्रा माण्यज्ञानाभावविशिष्टस्य कोटिनिश्चयस्य विपरीतकोटिधीविरोधित- या तत्र प्रामाण्यसंशयस्यापेक्षाऽ स्त्येवेति प्रमाण्यसंशयानुत्पत्तौ नि- श्चितार्थ संशयानुपपत्ति र्दुर्वारैवेति वाच्यम् । एतन्मते विशेषदर्शन जन्यस्यैव विपरीतनिश्चयस्य प्रतिबन्धकत्वमित्युपगमात् । भवन्मते पि विशेषदर्शनानधीननिश्चयस्या प्रामाण्यशंकया परिभवेनाविरोधि तया तुभयत्रविरोधविरहात् । साधारणधर्मदर्शनस्य विळम्बादेव क्वचि

[म] नचवाच्यं प्रामाण्यसंशयान्नविषयेसंशयः , मानाभावात् । ज्ञानविषयत्वात्समानधर्मादेवतदुपपत्तेः । नचैवंसर्वत्रविषयसंशये-तन्निश्चयोच्छेदः , प्रामाण्यसंशयेपि तुल्यत्वादिति । तस्यासार्व-

---

[दी] तं निरस्यति(नचेति)( नचैवमिति) साधारणधर्मदर्शनस्यानुव र्तमानत्वादिति शेषः । तस्य – प्रामाण्यसंशयस्य । तथाच न तु ल्यत्वमिति ।

---

[ग] त्संशयो न स्यादिति प्रामाण्यसंशयस्यार्थसंशये नपेक्षायामपि ननिश्चयोच्छेद इति "नचैव"मित्यवान्तरशंकाया असंगति रिति साधारण धर्मदर्शनस्य सर्वत्र सम्भवं हेतुतया पूरयति – ( साधारणेति ) अंत तः प्रमेयत्वादेरपि साधारणधर्मत्वादिति भावः । " संशय " इति मूलम् - संशयसामग्रीसत्वइत्यर्थकम् । ( तन्निश्चयोच्छेदइति ) निश्चिते पि विषये संशय एव स्यात , नतु निश्चय इत्यर्थः । प्रामाण्यसंशयो पि सर्वत्र संभवतीत्यभिमानेन " प्रामाण्यसंशयेपी " त्यनेन मूलेन–तुल्यत्वमापादितं, प्रामाण्यसंशयेपि प्रामाण्यसंशयस्य विषयसंशायक त्वामतेपि अभिमानं निराकृत्य " नचवाच्य " मित्यादि शंकोपरि प्रायशो निश्चयोच्छेदरूपं बाधकमेव दृढीक्रियते – ( तस्या सार्वत्रिकत्वादिति ) तत्र तत्पदस्य प्रामाण्यसंशयपरामर्शकत्वं न स्फुटम् , नच वाच्यमिति वाक्यान्तरेण प्रामाण्यसंशयस्य प्रक्रान्तस्यापि व्यवधानात् , अव्यवहितवाक्यस्थेनेतिशब्देन तुल्यत्वादित्यन्त वाक्यार्थस्य बोधेन तदन्तर्गतप्रामाण्यसंशयस्य प्रक्रान्तत्वे तादृशवाक्यार्थे निश्चयादेरपि घटकतया तेषामपि युगपत्प्रक्रान्तत्वात् एकपदार्थान्तर्गततया प्रक्रान्तत्वस्य तच्छब्दपरामर्शेनुपयोगाच्चेति तच्छब्दस्य तत्परत्वं स्फुटयति - दीधितौ ( तस्येति ) प्रामाण्यसंशयस्यासार्वत्रिकत्वं च विशेषदर्शनकालीनज्ञाने प्रामाण्यनिश्चयसंभवेनेति बोध्यम् ( नतु ल्यत्वमिति ) प्रामण्यसंशयस्य विषयसंशयाहेतुत्वे निश्चयोच्छेदव त्तस्य तथात्वे न तदुच्छेद इत्यर्थः ।

[म] निकत्वात् । भ्रमत्वसंशयं विनानिश्चितेविषये संशयानुत्पत्तेरानुभविकत्वाच्च ।

---

[दी] अथ मानुतुल्यत्वं उच्छिद्यताश्च तत्र तन्निश्चयः, किं नश्छिन्नमित्यत्राह ( भ्रमत्वेति )

---

[न] यद्यपि तन्मतेपि एककोटिभानसामर्थ्ये यत्र लौकिकसन्निकर्षादिघटिततया विशेषदर्शनसमवधानेनवा बलवत्यनुवर्तते तत्रैव साधारणधर्मदर्शनादि सत्त्वेपि निश्चयपरम्परासम्भवः, तथापि तद्व्यतिरिक्तस्थले तन्मते निश्चयपरम्परोच्छेद एव दोषो बोद्धव्यः । तुल्यत्वं - प्रामाण्यसंशयहेतुतामते निश्चयोच्छेदः । उच्छिद्यतां तत्र-उक्तस्थले, तद्धेतुतामते निश्चयः । इत्यत्राह–इत्यत्रानुभवविरोधमाह ।

नच - विशेषदर्शनानधीनज्ञाने भवतां प्रामाण्यसंशयस्यापि संभवेन तदुत्तरं संशयोत्पत्तेरेवानुभाविकत्वं, विशेषदर्शनजन्यज्ञानस्यच मयापि संशयविरोधित्वाभ्युपगमात् , तत्सत्त्वे ममापि संशयानुत्पादोपपत्तिरिति शंकितुरभिप्रायस्य वर्णितत्वा न्नानुभवविरोधेन मूलकृतः प्रामाण्यसंशयहेतुताऽव्यवस्थापन संगतिरिति वाच्यम् । विशेषदर्शनकालीने निश्चयेपि कोट्युपस्थिति धर्मिज्ञानादिविळम्बेन प्रामाण्यसंशयानुत्पत्त्या तत्सत्वेऽर्थसंशयानुत्पादो नुभवसिद्ध इत्याशयात् । अयंच ग्रन्थो नार्थसंशयविशेषे प्रामाण्यसंशयकारणता पर्यन्तव्यवस्थिति परः, किन्तूपयोगितामात्रपरः , साच प्रामाण्यसंशय जन्यविशिष्टज्ञाने विपरीतनिश्चयो न विरोधि, तन्निश्चयकालीन ज्ञाने च प्रामाण्यसंशय स्तत्वेनाप्रामाण्यग्रहत्वेनवा हेतु रित्यतो विशिष्ट ज्ञानसामान्ये अप्रामाण्यग्रहाभावविशिष्टनिश्चयो विरोधीत्यतोवा निर्वहतु ।

अथेत्यादिमूलं अनुव्यवसायादिना प्रामाण्यस्यग्रहा त्तत्संशयस्य चासंभवेन तस्यार्थसंशयहेतुताखण्डनपरतया मिश्रैर्व्याख्यातं, तच्च - न संगच्छते, अन्वयव्यतिरेकासिद्धार्थ संशयहेतुताक प्रामाण्यसंशयानुरोधेन तस्यानुव्यवसाया द्यग्राह्यत्व कल्पनाया एव युक्तत्वात् ।

[ग] अथतद्वतितत्प्रकारकत्वं प्रामाण्यं, तच्चज्ञान ग्राहकेण गृही-तमेवेति नतत्संशयः । नचास्मिन्निश्चितेपि प्रामाण्यसंशयात् न तत्प्रामाण्यमितिवाच्यम् , एतन्निश्चयादेवनिष्कंपव्यवहारादितिचेत्।

---

[दी] यद्यनुव्यवसायानन्तरं व्यवसायस्य तद्वति तत्प्रकारकत्वे संशयस्स्यात , स्यादपि तदन्यथानुपपत्त्या प्रामाण्यस्य स्वत-स्त्वनिरासः, नत्वेवं , परन्तु स्मृत्यन्यज्ञानत्वादावेव संश-यइत्याशङ्क्य ( अथेति )

---

[ग] नच - प्रामाण्यसंशयस्यार्थ संशयहेतुतया वाधात् (?) प्रामा ण्यसंशयासम्भवे अन्वयाग्रहेण कारणतया नान्वयव्यतिरेकसिद्धतेति वाच्यम् । यत्र प्रतिबन्धकवशाद् नुव्यवसायादेः प्रामाण्याग्राहकत्वं-तत्र तन्मते प्युत्तरकाले प्रामाण्यसंशयानन्तरश्चार्थसंशय इत्यन्वयग्र-हसम्भवात । अतो याथार्थ्यरूपप्रामाण्यसंशयापलापेन स्वतस्त्वव्यव-स्थापनपरतयैव तद्व्याचष्टे ( यद्यनुव्यवसायानन्तरमिति ) ( नत्वेव-मिति ) अनुव्यवसायानन्तरं तत्संशयएवनेत्यर्थः ।

नचार्थ संशयहेतुभूतयाथार्थ्यसंशयानुदयेर्थ संशयानुपपत्तेः कथमियं शंकारीति वाच्यम् । अर्थनिश्चये जातेनुव्यवसायादिना तन्नाशे स-त्येवार्थसंशय इत्याशयेन शंकासंगतेः ।

नन्वनुव्यवसायाद्युपनीते व्यवसाये इदं ज्ञानं प्रमानवेति संशयोनु भवसिद्धतया दुरपह्नव इत्यत आह ( परन्त्विति ) ( स्मृत्यन्यज्ञान त्वादावेवेति ) तस्यापि प्रामाण्यपदार्थत्वात् तत्कोटिकसंशयस्यापि प्रमा नवेत्याकारकतेति शंकितुराशय इति भावः । मूले- (अस्मिन्निश्चितेपीति ) अस्मिन् – याथार्थ्ये । प्रामाण्यसंशयात् – प्रमानवेत्याकारकसंशयात् तत्- याथार्थ्यम् । नप्रामाण्यं । तथाच याथार्थ्यस्य स्वतस्त्वसिद्धावपि नाभि मतसिद्धिरिति भावः । ( एतन्निश्चयादेवेति) याथार्थ्यनिश्चयादेवेत्यर्थः । ( निष्कंपव्यवहारादिति ) तत्प्रामाण्यपदार्थो भवतुमाभावित्यन्यदेतत् ,

[ म ] अस्तुतावदिदं प्रामाण्यं, तथाप्यनुव्यवसायानन्तरं व्यवसायस्य प्रामाण्ये अर्थस्य तद्वत्त्वेच संशयस्यानुभवसिद्धत्वान्नार्थतद्वत्त्वं तस्य विषयः ।

---

[ दी ] इदम् – स्मृत्यन्यज्ञानत्वादिकम् । तथाविधप्रामाण्यसंशस्या नुभवसिद्धतया दुरपह्नवत्वा त्तदन्यथा नुपपत्त्या तस्य स्वतस्त्वमेव बाध्यतइत्याह ( तथापीति ) प्रामाण्ये – तद्वति तत्प्रकारकत्वे । तद्वति तत्प्रकारकत्वं अर्थस्य तद्वत्त्वंवा तस्य – अनुव्यवसायस्य विषयः ।

---

[ग ] प्रवृत्त्यौपयिकधर्ममधिकृत्यैव स्वतस्त्वविचारा त्तस्य स्वतोग्राह्यत्वसिद्धौचनाभिमतासिद्धिरिति भावः । " अस्तुतावदिद " मित्यत्रेदं पदस्य याथार्थ्यपरता न संभवति; तस्य प्रामाण्यपदार्थताया निष्कंपव्यवहारांगतायाश्च नैय्यायिकमततया तेषा मापाततस्तदभ्युपगमासंभवा दतो व्याचष्टे ( इदमिति ) एवंच " प्रामाण्य " मिति मूलंप्रामाण्यपदार्थ इत्यर्थकम् । प्रमानवेति संशयकोटित्वानुरोधेन प्रामाण्यपदार्थतायाः स्मृत्यन्यज्ञानत्वादौ तेषां संकेतितत्वा दापातत स्तदभ्युपगमसंगतेः । स्मृत्यन्यज्ञानत्वरूपप्रामाण्यसंशयस्यानुभविकत्वं न याथार्थ्यस्य स्वतोग्राह्यत्वे बाधकमतः (तथाविधेति)याथार्थ्यरूपेत्यर्थकं । मूलस्थ'प्रामाण्य'इत्यस्याव्यवहितोक्त स्मृत्यन्यज्ञानत्वार्थकत्वे 'तथापी'त्यादि समुदितफक्किका या स्तथाविधप्रामाण्य इत्याद्यर्थवर्णनं न घटत इति तदानुगुण्येन तत्पदं व्याचष्टे ( प्रामाण्यइति ) यद्यप्यनुव्यवसायस्यार्थतद्वत्त्वाविषयकत्वलाभे तद्घटितप्रामाण्याविषयकत्व मपि अर्थतो लभ्यते, तथाप्यर्थतद्वत्त्वविषयकत्वेपि तद्वद्विशेष्यकत्व तत्प्रकारकत्वयो रवच्छेद्यावच्छेदकभावाग्रहेण प्रामाण्यसंशयस्य तदधीनस्यार्थतद्वत्वसंशयस्यचोपपत्तेः अर्थतद्वत्त्वाविषयकत्वे निर्भरो नोचित इति 'न' त्यनन्तरं तद्वति तत्प्रकारकत्वमिति 'अर्थ तद्वत्त्व मित्यनन्तरं' अनिर्भरसूचकं वेतिच पूरि-

[म] ननुव्यवसायस्य इदंत्वरजतत्वविशिष्टेदं विषयत्वेऽनुव्यवसायएवमानं ।

---

[दी] ननु सामग्रीबलसिद्ध मनुव्यवसायस्य प्रामाण्यार्थतद्धत्व उभयविषयकत्वं दुरपवादमित्याशङ्कते ( नन्विति ) अनुव्यवसायो-व्यवसायविशिष्टात्मकज्ञानं ,

---

[ग] तम्। धर्मितावच्छेदकेदंत्ववैशिष्ट्यावगाहनेनैवानुव्यवसायस्य विषयांशे निष्प्रकारकत्वरूप निर्विकल्पकतावारणे धर्म्यंशे सप्रकारकत्वान्यथानुपपत्ति रूपयुक्त्या न प्रामाण्यस्य तद्घटकरजतत्वादिमत्त्वस्य वा भानं सिद्ध्यतीति रजतं जाना मीत्याकारकतानुपपत्त्या रजतत्वादिमत्त्व भानसिद्धावपि रजतत्ववद्विषयकत्वभानमात्रेणैव तथाकारतोपपत्तेः, तत्प्रकारकत्वेन तादृशस्या वच्छेद्यावच्छेदकभावस्य भानासिद्ध्या प्रामाण्यभान न सिद्ध्यत्येवेति " नन्वि " त्यादिमूलशंकायाः सामग्र्याः प्रामाण्यादि भानप्रमाणता परत्वमाह ( ननु सामग्रीति )

एवञ्च नन्वि त्यादिमूलस्यायमर्थः - इदं रजतमिति व्यवसायस्य इदन्त्व रजतत्व रूपस्वप्रकाराश्रय धर्मिविषयत्वे नुव्यवसायएव मानमिति तस्य तद्विषयकत्वमावश्यकं, तथासति व्यवसायविषयैर्यावद्भिः प्रकारैः विशेषित एव धर्मीविषयिताविशेषणतया नुव्यवसाय विषयो भवति, तदविशेषितस्य धर्मिणस्तथाभाने धर्म्यंशे नुव्यवसायो निष्प्रकारकएव स्यात्, प्रकारान्तरस्य उपनायकविरहेणैवाभानात्, तथाचेदं रजत ज्ञानामीति तदाकारो न स्यात । ईदृशयुक्त्ये व्यवसायरूपप्रत्यासत्ति घटितसामग्रीबलाच्च विषयिताविशेषण तापन्ने धर्मिणीदन्त्वरजतत्व वैशिष्ट्य मनुव्यवसायविषयः। एवं व्यवसायस्येदन्त्व रजतत्वप्रकारकत्वेपि अनुव्यवसाय एव मानमिति तदपि - तस्य विषयः। एवमिदंत्विषयकत्व रजतत्वविषयकत्वाभ्या मिदन्त्व

[ म ] तथाच यावद्व्यवसायोल्लिखितप्रकार विशिष्ट एव धर्म्यनुव्यवसायेभासते । अन्यथाविषयांशे तस्य निर्विकल्पकत्वे इदं रजतं जानामीतितदाकारोनस्यात् । अतोधर्मिणी दन्त्वरजतत्ववैशिष्ट्यमनुव्यवसायेन गृहीतमिति धर्मिणिस्वतः प्रामाण्यग्रहवद्रजतत्ववैशिष्ट्येपि स्वतः प्रामाण्यज्ञानमवर्जनीयम् । अतएव धर्म्यंशे न कदापि प्रामाण्यसंशयइतिचेत् ;

---

[ दी ] तच्च विशेषणज्ञानस्य विशिष्टज्ञानकारणत्वानभ्युपगन्तॄणां आहत्यान्येषान्तूत्तरकालं । ( धर्मिणीति ) धर्मिणिप्रामाण्यग्रह स्वद्बला तत्र संशयाभावश्च

---

[ग] प्रकारकत्व रजतत्वप्रकारकत्वयो रवच्छेद्यावच्छेदकभावोपि बाधाभावादि घटित सामग्री बलाद्विषय इति, धर्मितावच्छेदकेदन्त्वांश इव रजतत्वांशेपि प्रामाण्यावगाहन मनुव्यवसायस्यावर्जनीयमिति । अतएवेदन्त्वरूप धर्मितावच्छेदकांशे न प्रामाण्य संशय इति ॥

ननु व्यवसायाव्यवहितोत्तर ज्ञान रूपस्यानुव्यवसायस्य जानामीत्याकारकता नोभयवादिसिद्धा, विशेषणज्ञानस्य विशिष्टधीहेतुता वादिनां नैय्यायिकानां ज्ञानत्वादिनिर्विकल्पकस्य व्यवसायद्वितीयक्षणे उत्पत्तौ तृतीयक्षण एव ज्ञानत्वादिविशिष्टज्ञानसम्भवादिति नैय्यायिकं प्रत्यनुव्यवसायस्येदं रजतं ज्ञानामीत्याकारकत्वाभावापादनं न संगच्छते तो व्याचष्टे ( अनुव्यवसायइति ) विशिष्टज्ञानकारणत्वा नभ्युपगन्तॄणाम्-मीमांसकानाम् । आहत्य-व्यवसायद्वितीयक्षणे । अन्येषाम् – तदभ्युपगन्तॄणा नैय्यायिकानाम् । तदुत्तरकालं ।

ननु अस्माकं धर्मितावच्छेदकांशे प्रामाण्यमपि न स्वतो ग्राह्यतयाऽनुमतं, नवा तत्र संशयो नुमतः, यद्बलात्तस्य स्वतस्त्वं व्यवस्थापयिष्यसीति धर्मिणी त्यादि दृष्टान्तासिद्धिरित्यत आह (धर्मिणीति )

[म] मैवं , इदं रजतञ्च जानामीति नानुव्यवसायः , बहि विशेष्यके मनसो स्वातन्त्र्यात् ।

---

[दी] भवतामपिसम्मतः, तात्पर्यटीकायां तथैव मिश्रैरभिधानादिति

---

[ग] भवतां - नैय्यायिकानां । मूले - ( बहिर्विशेष्यकइति ) रजतत्वादिरूप बहिर्विशेषणविशेष्यतापन्न धर्मिविशेष्यकत्व इत्यर्थः । अ स्वातन्त्र्यात् - तादृश धर्मि विशेष्यकत्व ज्ञानाद्यसहकारेणाग्राहकत्वात् ।

नन्वेवं

" इदमिदन्त्वे " नेत्यादिमूलासंगतिः , इदन्त्वस्यापि बहिर्विशेषणतया तद्विशेषित धर्मिविषयकत्वाग्रहेणेदं जानामीत्याकारकता नुपपत्तेः ।

नच बहिःपदं धर्मितावच्छेदकान्य बहिर्विशेषणविशिष्टपरमिति न तदसंगतिः , अतएवच धर्मितावच्छेदकांशे प्रामाण्यस्य स्वतोग्राह्यतापरटीकाया अपि न विरोध इति वाच्यम् । बहिःपदस्य धर्मितावच्छेदकान्यविशेषण विशिष्टपरत्वे " अत इदन्त्वरजतत्ववैशिष्ट्यं नानुव्यवसायविषय " इत्युपसंहारविरोधात् ।

यत्तु रजतविषयकत्व विशिष्ट रजतत्वप्रकारकत्वमात्रं नेदं रजत मिति ज्ञानस्येदन्त्वावच्छिन्ने प्रवर्तकतोपयिकं प्रामाण्यं , इदमंशे रजतत्वाप्रमात्वग्रहाविरोधित्वात् । अपितु स्वातन्त्र्येणेदन्त्वावच्छिन्नस्य रजतत्ववैशिष्ट्यमपि तद्घटकं, तथाचेदं रजत न्तद्विशेष्यकंच रजतत्वप्रकारकं ज्ञानमित्याकार एव प्रामाण्यगृहोऽङ्गीकार्यः । सच नसम्भवति , बहिरान्तरोभयमुख्यविशेष्यक ज्ञानजननेमनसोस्वातन्त्र्यादिति मिश्रानुसारेण मूलार्थवर्णनम् ।

तत्तुच्छं - अस्मिन् रजते रजतत्वप्रकारकमिदं ज्ञानमितिज्ञानस्य इदं विषये प्रवर्तकत्वे बाधकाभावात् , तादृशज्ञानस्यच बहि र्मुख्यविशेष्यकत्व विरहेण स्वतस्संभवात्, इदंमुख्यविशेष्यकप्रामा

[म] किन्त्विदं इदन्त्वेन रजतत्वेन जानामीति । तत्रेदन्त्वरजतत्वे प्रकारत्वेन भासेते । तत्प्रकारकज्ञानवत्त्वं चात्मनि भासते ।'

---

[दी] ( इदन्त्वेत्यादि ) ननु व्यवसायोपनीतभानविशिष्टं पुरोवर्ति रजतविशेषणत्वेन ज्ञाने भासते ।

---

[ग] व्यग्रहस्य प्रवर्तकत्वे वक्ष्यमाणानुमानेन तदजननात, सन्दर्भाविरोधाच्च । एवं बहिरान्तरोभयमुख्यविशेष्यक मानसज्ञानमात्रा नभ्युपगमे मानसज्ञानस्य ज्ञानविशेषणतापन्नविषयांशे रजतत्वादिवैशिष्ट्या भानस्याभ्युपगतत्वा न्न तस्य विषयांशे निर्विकल्पकत्व प्रसक्तिरिति धर्मिणीदन्त्व रजतत्वप्रकारक ज्ञानविषयत्वभानेन निर्विकल्पकता वारणमपि विरूद्धयेतेति ।

एतेनेदं रजतमिति तादात्म्यारोपव्यावर्तनाय प्रामाण्यशरीरे मुख्यविशेष्यता निवेश्या, मुख्यविशेष्यताच प्रकारतानवच्छिन्नविशेष्यता । तत्रच प्रकारतानवच्छिन्नत्वं न स्वतो ग्राह्यमिति न प्रामाण्यं तथेति मूलाशयवर्णनमपि नसत्, पुरोवर्तिनि रजतत्वादिवैशिष्ट्याभानस्य प्रामाण्यभान प्रयोजकता कथनविरोधाच्चेति ।

मैवं,

बहिर्विशेषणवैशिष्टयं विशेष्यताविशेषणतापन्ने धर्मिणि विशिष्ट विशेष्यताज्ञानाद्यसहकृतं मनो न भासयतीत्येवं हि मूलार्थः । अनुव्यवसायस्य इदन्त्वादिप्रकारक ज्ञानविषयत्वरूपेणेदन्त्वेन ज्ञानविशेषणतापन्न धर्मिविषकत्वोपगमा दिदं रजतत्वेन जानामीत्याकारकता निर्वाहात । अतएवाग्रे धर्मिणि इदन्त्वादिप्रकारक ज्ञानविषयत्व भानेन तदंशे निर्विकल्पकतावारणमिति सर्वं समंजसम् ।

ज्ञानविषयतया भासमाने धर्मिणि व्यवसायो ल्लिखितप्रकारवैशिष्टचमा भासत इति व्यवस्थापयन् प्रामाण्यग्रहस्यास्वतस्त्वं दीधितिकृदाक्षिपति ( नन्वित्यादिना ) विशिष्टम् - इदन्त्वरजतत्वविशिष्टं । ज्ञाने ज्ञानविशेषणतापन्न विषयत्वांशे । विशेषणत्वेन, भासत

[ दी ] भवतां पुरोवर्तिनि रजतत्वप्रकारकं ज्ञानमितिवच्च पुरोवर्ति नि रजते रजतत्वप्रकारकं ज्ञानमित्याकारं तत्र रजतत्वप्रकारक त्व ज्ञानम् । सएव च प्रामाण्यग्रहः । इत्थमेवच पुरोवर्ति नि रजतत्वप्रकारकं ज्ञानं प्रमानवेत्याकारकः प्रामाण्यसंशयः, अर्थसंशयेच तदधीने इदं रजतं नवेत्याकारादिनियमः,

---

[ग] इत्यन्वयः । तद्विशिष्टविशेष्यकत्वमिव तदवच्छिन्नं तत्प्रकारकत्वमपि भासतइत्याह ( भवतामित्यादिना ) इदन्त्ववैशिष्ट्यभानस्याग्रे व्यव स्थापनीयतया भवतां पुरोवर्तिनि रजतत्वप्रकारकं ज्ञानमिति वच्चेति दृष्टान्तः ( पुरोवर्तिनि रजतइति ) पुरोवर्तित्वरूपव्यवसायो ल्लिखितप्रकार विशिष्टविशेष्यकत्वावच्छेदेनैव तादृशरजतत्वविशिष्ट विशेष्यकत्वावच्छे देनापि रजतत्वप्रकारकत्वग्रहे बाधकाभावात्, उपनीत विशेषणविशिष्ट विशेष्यकत्वावच्छिन्न प्रकारिताऽलौकिकप्रत्यक्षे मनसोऽ सामर्थ्ये पुरो वर्तिनि रजतत्वप्रकारकं ज्ञानमित्यनुव्यवसायस्याप्यसंभवादिति भावः ।

नन्विदन्त्वविशिष्टविशेष्यकत्वमेव नानुव्यवसायो गृह्णाति, कुत स्तदवच्छिन्नरजतत्वप्रकारकत्वं, कुतस्तरांच रजतत्ववद्विशेष्यकत्वाव- च्छिन्नरजतत्वप्रकारकत्व मित्यत आह ( इत्थमेवचेति ) अनुव्यवसा यस्य इदन्त्ववति रजतत्वप्रकारकतया ज्ञानावगाहनेनैव चेत्यर्थः । ( इत्याकारकः प्रामाण्यसंशयइति ) इदन्त्ववति रजतत्वप्रकारकज्ञानत्वप्र कारकज्ञानविरहे तद्धर्मितावच्छेदकक संशयायोगात , धर्मितावच्छेदक प्रकारकधियः संशयहेतुत्वादितिभावः । ननु रजतत्वप्रकारकज्ञानं प्र- मा नवेत्याकारक एवानुव्यवसायरूपधर्मिज्ञानहेतुकः संशयः, नतु पु रोवर्तिनि रजतत्वप्रकारकज्ञानं प्रमा नवेत्याकारक इत्यत आह ( अ र्थसंशयेचेति ) ( इदं रजतन्नवेत्याकारादिनियम इति ) तद्धर्मधर्मिता वच्छेदककार्थनिश्चयकालीनतादृशार्थसंशये तद्धर्मवद्विशेष्यकार्थज्ञान त्वधर्मितावच्छेदककप्रामाण्यसंशयोदेतुः , इदं रजतं तच्च रजतमिति निश्चयदशायां तद्विशेष्यकरजतत्वज्ञानं प्रमा नवेति संशयेपीदं रजतं

[दी] अप्रामाण्यस्य दाहसमर्थादिविशेष्यकत्वस्यच ग्रहश्च साधु संगच्छते । इतरथातु सर्वदुर्घटमेवापद्येत ।

---

[ग] नवेति संशयानुदयादिति अनभ्यासदशापन्नस्येदं रजतमिति ज्ञानस्यानुव्यवसायानन्तर मिदंविशेष्यकरजतत्वप्रकारकं ज्ञानं प्रमानवेति संशयानभ्युपगमे तदुत्तर मिदंरजतन्नवेत्याकारकसंशयो नस्यादितिभावः।

ननु तद्धर्मावच्छिन्नविशेष्यताकत्वधर्मितावच्छेदककप्रामाण्यसंशय एव तद्धर्मधर्मितावच्छेदककार्थसंशयोपयोगीवाच्यः , एवञ्चेदन्त्व विशेषितधर्मिविशेष्यकत्वस्यानुव्यवसायेनाग्रहणेपि विशेष्यताया मिदन्त्वावच्छिन्नत्वावगाहिनोनुव्यवसाया दिदन्त्वावच्छिन्नविशेष्यताकत्व धर्मितावच्छेदककसंशया दिदं रजत न्नवेत्याकारकार्थसंशयो भविष्यतीत्यनुशयेनाह ( अप्रामाण्यस्येति ) ग्रह इत्यग्रिमेणान्वयः । उपनीतविशेषणविशिष्ट विशेष्यकत्वस्य मानसानभ्युपगमे बाधकानु पनीत तदभावविशेष्यकत्व भानेन तदभाववति तत्प्रकारकत्वरूप- प्रामाण्यग्रहकथनं विशेषदर्शनोपनीतदाहसामर्थ्यादिरूप व्याप्यधर्मवद्वि- शेष्यकत्वग्रहेण प्रामाण्यानुमापक हेतुग्रहोपपादनञ्च विरुद्धयेतेतिभावः ।

यद्यपि विशिष्टविशेष्यकत्वे मनसः स्वातन्त्र्येणाप्रवृत्ते स्तदभाववद्विशेष्यकत्वस्य दाहसमर्थादि विशेष्यकत्वस्यच तत्रोपनीतभानमेवांगीकरणीयम् मूलकृता, तच्च दाहसामर्थ्यादिविशिष्टस्य विशेष्यतायाश्च विशकलितज्ञानादेव निर्वहतीति न विशिष्टविशेष्यकत्वस्य लौकिकप्रत्यक्षसिद्धिः ; तथापि दाहसामर्थ्यादिविशेष्यकत्वस्योपनय- दशायां कथञ्चिदुपस्थित विपरीतकोटेरपि भानसम्भवेन विना वि- शेषदर्शनं निश्चयासंभवः, विशेषदर्शनञ्चेदन्त्वादिविशिष्टे दाहसाम- र्थ्यादिनिश्चये इदन्त्वादिमद्विशेष्यकत्व निश्चय एव, तदानी मिद- न्त्वादि मद्विशेष्यकत्वे दाहसमर्थविशेष्यकत्व तादात्म्यग्रहेण तत्र- तद्व्याप्यत्वग्रहात्, इदन्त्वादिमद्विशेष्यकत्वस्यच निश्चयो लौकिकप्र त्यक्षरूप स्तन्मूलकस्मरणरूपोवा भ्युपगन्तव्यः, नतु विशकलिते

[दी] अत्राहुः-प्रामाण्यस्य संशयान्यथानुपपत्त्या तद्धर्मविशिष्टे तत्प्रकारकत्वस्यग्राहकत्वेऽनुव्यवसायस्यासामर्थ्यं कल्प्यते । तेन पुरोवर्तिनि रजतत्वप्रकारकमिति ग्रहेऽपि पुरोवर्तिनि रजते रजतत्वप्रकारक

---

[ग] दमाद्युपस्थिति मूलकोपनीतभानरूपः, तत्र तद्विपरीतकोटेरपि भानसम्भवेन निश्चयत्वासम्भवात्, इत्युपनीतविशेषणविशिष्ट धर्मिविशेष्यकत्वस्य लौकिकप्रत्यक्षमावश्यकम् ।

नचैवं - दाहसमर्थविशेष्यकत्वस्यापि लौकिकप्रत्यक्षसंभवेन किं तदुपनीतभानानुसरणेनेति वाच्यम् । अयं वह्निरिति ज्ञाननाशे तन्निष्ठ दाहसमर्थविशेष्यकत्वस्य लौकिकसन्निकर्षासम्भवात्, व्यवसायेस्वोपनीतप्रकारवद्विशेष्यकत्वस्यैव लौकिकप्रत्यक्षोपगमात । ज्ञानांतरोपनीत दाहविशेष्यकत्व वद्विशेष्यकत्वस्यायं वह्निरिति प्राचीनज्ञाने उपनीतभानस्यैव सम्भवात्,

तद्धर्मवद्विशेष्यकत्वस्य तदवच्छिन्न धर्मान्तरप्रकारकत्वस्य चानुव्यवसायग्राह्यतामङ्गीकृत्यैव परतः प्रामाण्यस्य ग्राह्यतामुपपादयन्ति ( अत्राहुरित्यादिना ) अनुव्यवसायस्या सामर्थ्यमिति ) तद्वद्विशेष्यकत्वावच्छिन्नत्वस्य विशेष्यतासंम्बंधेन लौकिकप्रत्यक्षं प्रति तत्प्रकारकत्वभेदस्य हेतुताकल्पनेनेदमुपपादनीयं । नचानुव्यवसायस्य प्रामाण्यविषयकत्वेपि तज्जनितज्ञानगोचरसंस्कारा त्तृतीयक्षणे प्रामाण्यविषयकज्ञानरूपधर्मिस्मरणम् कल्पयित्वा प्रामाण्यसंशयोपपादनसम्भवात् किमेतादृशकार्यकारणभावकल्पनेनेति वाच्यम् । प्रामाण्यसंशयस्थलेष्वनन्तानां धर्मिस्मरणानां कल्पनापेक्षया तादृशैककार्यकारणभावकल्पनाया एवलाघवेनोचितत्वात् ।

वस्तुतस्तु तद्वद्विशेष्यकत्वावच्छिन्न तत्प्रकारकत्वभासकानुमित्यादिसामग्र्या अभावा दलौकिकसन्निकर्षादिघटितसामग्र्या स्तादृप्येण

[म] अन्यथा प्रकारवाचि तृतीयार्थासम्भवः । रजतत्ववैशिष्ट्यस्य तदर्थत्वे व्यवसायेऽपि तृतीयार्थोल्लेखापत्तिः । तथा च धर्मिणीदन्त्व रजतत्वप्रकारकज्ञानविषयत्वे तादृशज्ञानवत्त्वे चात्मनोऽनुव्यवसाय एव मानमिति न विषये तस्य निर्विकल्पकत्वं । अत इदन्त्व रजतत्ववैशिष्ट्यं पुरोवर्त्तिनि नानुव्यवसायविषय इति न स्वतः प्रामाण्यग्रहः । तस्मादनभ्यासदशापन्नज्ञानप्रामाण्यं परतो ज्ञायते, सांशयिकत्वादप्रामाण्यवदित्याचार्य्याः ।

---

[ग] तद्भासकतायाः कल्पकाभावा न्नानुव्यवसायस्य विशिष्टप्रामाण्यावगाहितेति दर्शितकार्यकारणभावोपि नाद्रियते ।

नच - रजतत्वादिप्रकारकत्वप्रकारकानुव्यवसायपूर्वं प्रकारित्वादेः प्रत्यक्षमवश्यमंगीकार्यम् , न्यायमते विशेषणज्ञानं विना विशिष्टज्ञानानुत्पत्तेः । तथाच प्रामाण्यस्य लौकिकप्रत्यक्षनिराकरणेपि तादृशानुव्यवसाये उपनीतप्रामाण्यभान न्दुर्वारमेव, प्रामाण्यघटकप्रकारिताद्युपनायकधीसत्वात , विशिष्टोपनीतभाने विशिष्टज्ञानानपेक्षणात्, अन्यथा कविकाव्यादिमूलभूतापूर्वविशिष्टार्थज्ञानानुत्पत्तेः । तथाच कथं न्यायमत एतादृशानुव्यवसायानन्तरं प्रामाण्यसंशय इति वाच्यम् । प्रकारिताद्युपस्थितिं विनापि तत्संसर्गकानुव्यवसायसम्भवात । अनुपस्थितानां ज्ञानत्वप्रकारित्वादीनां प्रकारतयाभानोपगमे क्षतिविरहाच्च ।

यदिच रजतत्ववद्विशेष्यकत्वावच्छिन्नरजतत्वप्रकारकत्वादिन्न रजतादिविशेष्यकत्वमपि नानुव्यवसायेन गृह्यते, तदनन्तरं तत्संशयस्याप्यानुभाविकत्वात् , प्रामाण्यघटक घटत्वप्रकारकत्वादे निश्चितत्वेन प्रामाण्यसंशयस्य तद्वद्विशेष्यकत्वसन्देह एव पर्यवसानात्, धर्मितावच्छेदकवद्विशेष्यकत्वमेवच गृह्यते, धर्मिणि प्रामाण्यसंशयविरहादिति मतं, तदा तद्वद्विशेष्यकत्वागाहिन्यनुव्यवसाये त-द्धर्मितावच्छेदकव्यवसायो हेतुर्वाच्य इति । अधिकं स्वयमूहनीयम् ।

धर्मान्तर विशिष्टविशेष्यकत्वावच्छेदेन, विशेषणप्रकारकत्व-

[म] ननु स्वग्राह्यत्वेपि कदाचित्परग्राह्यत्वात् स्वस्याप्यन्यापेक्षया परत्वात् भट्टमतेच परग्राह्यत्वात्सिद्धसाधनं। नच ग्राह्यप्रामाण्यापेक्षया परत्वं, ग्राहकस्यापि ग्राह्यप्रामाण्यत्वेन तदपेक्षया परत्वाभावात्,

---

[दी] मिति नग्रहः। वक्ष्यतिच ग्रन्थकारः। करचरणादिमतिशरीर ज्ञानत्वादेरनुव्यवसायेन ग्रहणमिति। परमात्रग्राह्यत्वं वक्तव्यं तत्राह (स्वस्यापीति) स्वस्यापीत्युक्तदूषणस्योद्धारमाशंक्य नि

---

[ग] स्यानुव्यवसायेन ग्रहणे स्वोक्तेमूलकृत स्संवाद न्दर्शयति (वक्ष्यतिचेति) मूले - (स्वग्राह्यत्वेपिकदाचित्परग्राह्यत्वादिति) तज्ज्ञानप्रामाण्यस्य तज्ज्ञानग्राह्यतावादिप्राभाकरमतेपि कदाचित्तस्य प्रामाण्यस्य परेण तज्ज्ञानधर्मिकप्रामाण्यानुमित्यादिना ग्रहादित्यर्थः। सिद्धसाधनमित्यग्रिमेणान्वयः। परग्राह्यत्वादित्यस्यचयत किंचिदपेक्षया परग्राह्यत्वादिति नार्थः; कदाचिदित्यस्यासंगतेः, तथाच स्वस्याप्यन्यापेक्षया परत्वादिति हेतुः प्रकृते न संगच्छतइत्यत आभिप्रायिकशंकानिराकरणपरतया तत् संगमयति (परमात्रेति) उक्तसिद्धसाधनवारणायेत्यादिः। तथासति तज्ज्ञानप्रामाण्यस्य गुरुमते स्वेनापि ग्रहणा न्नपरमात्रग्राह्यत्वमिति नसिद्धसाधनमिति भावः। (तत्राहेति) तत्र-उक्तौ। परपदस्य तज्ज्ञानभिन्नार्थकत्वे दोषविरहेपि किंचिदवधिकपरत्वपरताभिमानेन तस्य केवलान्वयितया मात्रार्थाप्रसिद्धिरूपदूषणमाहेत्यर्थः। नचेत्यादि शंकाया मात्रार्थाघटितसाध्ये सिद्धसाधनपरता नसम्भवति; ग्राह्यप्रामाण्यादयं घट इत्यादिज्ञानात् परेण प्रामाण्यानुमित्यादिना तन्मतेपि प्रामाण्यग्रहात्, अतस्तच्छंकाया स्सामान्यतः परत्वस्य केवलान्वयित्वेपि प्रामाण्यं यत्रज्ञाने ग्राह्यं तदपेक्षया परत्वस्यातथात्वात्तदेवात्र विवक्षणीयम्, तथाच मात्रार्थघटितमेव साध्यमिति नासिद्धसाधनमित्येतत्परत्वमाह (स्वस्यापीत्युक्तेति) मूले (ग्राहकस्यापि ग्राह्यप्रामाण्यत्वेनेति) प्रामाण्यग्राहकानुमित्यादेरपि ग्राह्यं यत्प्रामाण्यादिघटितप्रामाण्यं तदाश्रयत्वेनेत्यर्थः। प्रामाण्यस्य प्रमापदप्रवृत्तिनिमित्तत्वेनानुगतरूपेण निवेश इत्यभिमानेनेदं (तदपेक्षयापरत्वाभावादिति) तथाच परभिन्नतद्ग्राह्यत्वस्य प्रामाण्ये सत्वा न्नपरमात्रग्राह्यत्व न्नचाय

[म]स्वग्राह्यप्रामाण्यापेक्षया परत्वे अप्रामाण्यप्रसङ्गात ।

---

[दी]राकरोति( नचेत्यादिना) ( स्वग्राह्येति ) स्वग्राह्यप्रामाण्यं स्वग्राह्यत्वेन पराभ्युपगतस्य, प्रामाण्यस्य- घटत्ववतिघट वप्रकारकत्वादेराश्रयः । तदन्यमात्रग्राह्यत्वरूपे परतस्त्वे साध्ये तद्ग्राहकस्यानुमितीश्वरज्ञानादे स्तदाश्रयत्वाद्बाधादनुमिते रनुत्पादः, बाधानवतारेच्च जातायाभ्रमत्वं स्यादित्यर्थः ।

---

[ग] मतेपीतिभावः । पक्षीभूत तत्प्रामाण्याश्रयापेक्षया परत्वाविवक्षणा न्नैष दोषइत्यत आह ( स्वग्राह्येति ) ग्राहकाणां सर्वेषामेव प्रामाण्यपेक्षया परत्वात् बहुव्रीहिसमासाभिप्रायेण स्वग्राह्यप्रामाण्यपदं तदाश्रयार्थकतया व्याचष्ट ( स्वग्राह्यप्रामाण्यइत्यादि ) स्वग्राह्यपदस्य यथाश्रुतार्थकत्वे गुरुमत एव प्रामाण्यविषयकस्यायं घट इत्यादेर्व्यवसायस्य न्यायमते- स्वग्राह्यप्रामाण्यत्वाभावा द्विवक्षणीयस्य तदवधिकपरत्वस्यालाभः, अतोग्राह्यपदं ग्राह्यतया प्राभाकराभ्युपगतपरतया व्याचष्टे - (स्वग्राह्यत्वेनेति ) प्रमापदप्रवृत्तिनिमित्तत्वादिना प्रामाण्यनिवेशे ज्ञानमात्रस्यैव परमते स्वग्राह्यप्रामाण्याश्रयत्वमिति पूर्वोक्तदोषानुद्धारात् - प्रामाण्यपदस्य पक्षिभूतविशेषपरतमाह - ( घटत्ववतीति ) मूलोक्तस्य 'परत्व' इत्यस्य परमात्रग्राह्यत्वरूपसाध्यघटकतया विवक्षित इति शेषपूरणाभिप्रायेण व्याचष्टे ( तदन्यमात्रग्राह्यत्वरूपे परतस्त्वे साध्य इति ) अप्रामाण्यप्रसङ्गे हेतुं पूरयति ( तद्ग्राहकस्येति बाधादित्यन्तम् ) बाधः- साध्यघटकनिरुक्तप्रामाण्याश्रयाग्राह्यत्वस्य तद्ग्राह्यत्वज्ञानरूपः, तदाश्रयत्वात् - स्वग्राह्यप्रामाण्याश्रयत्वात् । प्रामाण्यस्य मुख्यविशेष्यताघटितत्वेनुमितिपदमयम् घट इदञ्च ज्ञानं प्रमेति समूहालम्बनानुमितिपरं बोध्यम् ( अनुमितेरनुत्पादइति ) - मूलोक्ताप्रामाण्यपदार्थविवरणम् प्रमासामान्यार्थकपदस्यानुमितिरूपविशेषपरत्वात ; करणताबोधकल्युटश्च फलोपधानपरत्वात्तत्सङ्गतिः । बाधानवतारदशाया मनुमितिसम्भवादाह ( बाधानवतारेति ) ( भ्रमत्वमिति) त-

[म] उच्यते अनभ्यासदशापन्नज्ञानप्रामाण्यं न स्वाश्रयग्राह्यं स्वाश्रयातिरिक्तग्राह्यं वा ।

---

[दी] "अग्राह्यप्रामाण्यापेक्षये"ति पाठेअग्राह्य प्रामाण्यं-स्वाग्राह्यत्वेन नैय्यायिकाभिमतस्य घटत्ववति घटत्वप्रकारक ज्ञानत्वादे राश्रयः । तथाच पूर्वोक्तएवार्थः । अग्राह्यप्रामाण्यं ग्राह्यप्रामाण्यभिन्नं-अप्रामाण्यमितियावत्, तद्भिन्नग्राह्यत्वे-प्रमाग्राह्यत्वे, साध्ये, अप्रामाण्यं-सिद्धसाधनात्प्रमाया-अनुमितेरनुत्पादइत्यर्थः , इत्यपिकेचित् । ( अनभ्यासदशापन्नेति )-हेत्वोः स्वरूपसिद्धिप्रदर्शनाय स्वरूपकथनमात्रम् , नतुतद्विशेषणमेव,

---

[ग] थाच प्रमानुत्पादो भ्रमत्वश्चाप्रामाण्यपदेन विवक्षितमित्याशयः । "स्वग्राह्ये" त्यत्रा ग्राह्येति पाठे अग्राह्यपदस्य यथाश्रुतार्थकत्वे अप्रसिद्धिः, वस्तुमात्रस्यैव ग्राह्यत्वात् । स्वाग्राह्यार्थकत्वे अग्राह्यप्रामाण्यपदस्य स्ववृत्तिप्रामाण्याग्राह्यार्थकतया गुरुमते तादृशज्ञानासिद्धिः- प्रसिद्धौच सिद्धसाधनं अतो व्याचष्टे ( स्वाग्राह्यत्वेनेति ) एतत्पाठपक्षे कस्यचित् व्याख्यामुपन्यस्यति ( अग्राह्यप्रामाण्यमिति ) ग्राह्यप्रामाण्याश्रयभिन्नमित्यर्थः । अत्र ग्राह्यत्वस्याव्यावर्तकतया परित्यज्य- व्याचष्टे ( अप्रमाणमितीति ) अप्रमेत्यर्थः । अप्रमाभिन्नत्वेन प्रमानिवेशोनुचित इत्यतः पर्यवसितार्थमाह ( प्रमाग्राह्यत्वइति ) प्रमाया इत्यस्य विवरण मनुमितेरिति । वस्तुमात्रस्यैव प्रमाग्राह्यत्वात तत्र विवादाप्रसक्ते रनुक्तिसंभवात ( कश्चिदिति ) अनभ्यासदशापन्नत्वस्य पक्षप्रविष्टज्ञाने विशेषणताया निराकारणीयतया तत्पदोपदानप्रयोजनमाह (अनभ्यासेति)(स्वरूपसिद्धीति) पक्षसत्वेत्यर्थः । अनभ्यासदशापन्नज्ञाने तृतीयक्षणे प्रामाण्यसंशयात , प्रामाण्याश्रयज्ञाने अनभ्यासदशापन्नत्वकथनात प्रामाण्ये स्वाश्रयानन्तर तृतीयक्षणवृत्ति संशयकोटिकत्व रूपहेतुसत्वं लभ्यतइति भावः । तत् अनभ्यासदशापन्नत्वं । विशेषणं-पक्ष

[ दी ] अर्थान्तरप्रसंगान्निष्प्रयोजनत्वाच्च । तथाहि – ज्ञानव्य क्तिभेदेपि तत्प्रकारकत्वादे रभेदे यावत्स्वाश्रयविषयत्वतदभावौ कोटी , तत्रच नांशतस्सिद्धसाधनादे रवकाशः । भेदेतु पक्षतावच्छेदकावच्छेदेन विधेः तत्सामानाधिकरण्येनच नि षेधस्य सिद्धे रुद्देश्यत्वान्नतदवकाशः।

---

[ग] तावच्छेदक कोटिप्रविष्टं ( अर्थान्तरप्रसंगादिति ) उक्तविप्रतिपत्तौ तादृशविशेषणाप्रवेशात् तद्घटितधर्मावच्छिन्ने परतस्त्वादिकोटे रजिज्ञासितत्वादितिभावः । तद्विशेषणस्य प्रयोजनसत्त्वे अगत्याविप्रतिपत्तिस्थज्ञानपदस्या नभ्यासदशापन्नज्ञानपरत्वं स्वीकार्यं, तथाच नार्थान्तर मित्याशंक्य तस्य निष्प्रयोजनकत्व न्दर्शयति ( निष्प्रयोजनत्वादिति ) नन्वयं घट इदं ज्ञानं प्रमेत्याद्याकारकानुमित्यादेः प्रामाण्यस्य स्वतोग्राह्यतया तस्य पक्षत्वे विधिसाधनेंशतः सिद्धसाधनं निषेधसाधने बाधः, उक्तहेतो र्भागासिद्धिश्चेति तद्वारणमेव तद्विशेषणफलं । नचाभ्यासानभ्यासकलीन ज्ञानयोर्घटत्ववतीत्यादि प्रामाण्य मेकमेव, तथाचोक्तविशेषणप्रवेशेपि नोक्तज्ञानव्यावृत्तिरिति वाच्यं, ज्ञानव्यक्तिभेदेन प्रामाण्यभेदाभावे विशेषणप्रवेशे अप्रवेशेचोक्तसमूहालंबनानुमिति ग्राह्यत्व मादाय दोषस्य वारणासंभवात् तद्भेदमतमालंब्यैवानुमानस्य व्याख्येयत्वादित्याशंकां निराकुरुते ( तथाहीत्यादिना ) ( यावदिति ) स्वाश्रयपदस्ययावत्स्वाश्रयपरत्वादितिभावः । तथाच तदभेदमते नोक्तदोषावसरः, यावत्स्वाश्रयान्तर्गतान भ्यासदशापन्नज्ञानग्राह्यतया सामञ्जस्यादिति तन्मतवलंब्योक्तानुमानव्याख्यासंभवा न्नोक्तविशेषण मर्थवदिति । तत्रच–तन्मतेच। 'सिद्धसाधनादे' रित्यादिपदात निषेधसाधने विरोधिन्योरंशतोबाधासिद्ध्योः परिग्रहः । अवकाशः – प्रसंगः । घटत्ववति घटत्वप्रकारकत्वादिरूप पक्षतावच्छेदकाक्रान्तस्यैकैकतयांशासंभवादिति भावः ।

ननु तथापि ज्ञानव्यक्तिभेदेन प्रामाण्यभेदमतमवलम्ब्य तद्विशेषणसार्थक्य मुपपादनीय मत आह- ( भेदेत्विति ) न तदवकाशः-

[दी] वस्तुतस्तु ज्ञानव्यक्तिभेदेपि तत्प्रकारकत्वादेरभेदइति मतेनेदम्, भेदेनयेतु तज्ज्ञानप्रामाण्यं तज्ज्ञानग्राह्यमिति बोध्यम् । अन्यथा शब्दमात्रानुगमादिति ।

---

[ग] अंशतस्सिद्धसाधनादेर्नदोषताप्रसक्तिः । अंशे स्वाश्रयग्राह्यतानिश्चयस्यावच्छेदकावच्छेदेन तदनुमितौ सामानाधिकरण्यमात्रेण तदभावानुमितौचाविरोधित्वादिति भावः । ननु अप्रामाण्यग्राहिकया व्यवसायसामग्र्या प्रामाण्यस्य गुरुमतेपि अग्रहात्, प्रामाण्यत्वावच्छेदेन विधे स्तत्सामानाधिकरण्यमात्रेणचाभावस्य साधनं बाधसिद्धसाधनाभ्यान्न सम्भवति; तथाच पक्षतावच्छेदकसामानाधिकरण्येन विधि स्तदवच्छेदेनैवचाभावस्साधनीय इति पक्षसंकोच आवश्यक इत्यत आह ( वस्तुतस्त्विति ) इदं-अनुगतरूपेण प्रामाण्याश्रयज्ञानं साध्यपक्षयोर्निवेश्य मूलोपदर्शितपरतस्त्वानुमानं । तथाचोक्तयुक्त्या पक्षसंकोचवैय्यर्थमिति शेषः । ( इतिबोध्यमिति ) इतिरीत्या तत्तज्ज्ञानव्यक्ती विशिष्य निवेश्यानुमानं बोध्यमित्यर्थः । घटत्ववति घटत्वप्रकारकत्वाद्याश्रयत्वेन साध्ये ज्ञाननिवेशे यावत्त्वस्य तद्विशेषणत्वे समूहालम्बनरूपतादृशयत्किञ्चिज्ज्ञानग्राह्यतया घटत्ववतीत्यादि प्रामाण्यमात्रएव बाधात्, यावत्त्वस्य तद्विशेषणत्वेच प्रत्येकं सकलतादृशप्रामाण्यव्यक्तीनां घटत्वादिप्रकारक यावज्ज्ञानाग्राह्यतया सिद्धसाधनस्य दुर्वारत्वात्; साध्ये विशिष्यतत्तज्ज्ञानोपादानेच पक्षतावच्छेदकावच्छेदेनाभावसिद्धे रुद्देश्यतया मंशतस्सिद्धसाधनस्य सम्भवतोप्यदोषत्वेपि सामान्यरूपेण पक्षत्व मफलं, सामान्यरूपेण पक्षत्वमभ्युपेत्य भागासिद्ध्यादिवारणाय पक्षेविशेषणदानायासोपि प्रक्षाळनाद्धीतिन्यायेनानुचित इति भावः ।

ननु स्वत्वेन सामान्यतः प्रामाण्यनिवेशसम्भवे विशेषरूपेण तत्तत्प्रामाण्याश्रयव्यक्तीना मुपादान मनुचितमित्यत आह ( अन्यथेति ) अन्यथा- स्वपदेन प्रामाण्योपादाने ( शब्दमात्रेति ) मात्रपदेनार्थानुगमव्यवच्छेदः । स्वपदेन प्रामाण्यत्वावच्छिन्नोपादाने पूर्वदो-

[दी] नस्वाश्रयग्राह्यं – नयावत्स्वाश्रयग्राह्यम् । अतोनबाधः । त तद्धर्मघटितप्रामाण्यं ताद्रूप्येण स्वशब्देनाभिधेयम् , अननुगतत्वा त् । प्रमापदप्रवृत्तिनिमित्तत्वादिनानुगमेपि तत्प्रवृत्तिनिमित्ताश्रय यावद्ग्राह्यत्वस्य परेषामप्रसिद्धत्वाद्विशेषपरतया अवश्यं वक्तव्यत्वात् ।

---

[ग] पानुद्धारेण तस्य तत्तद्व्यक्तित्वावच्छिन्नपरतया आवश्यकत्वा त्तदाश्रयज्ञानव्यक्तीनामेव तत्तद्व्यक्तित्वेनोपादानौचित्यमिति भावः । ज्ञानव्यक्तिभेदेन प्रमाण्याभेदपक्ष एव निर्भरः कृत इति मूलोक्ताश्रयपदस्य यावत्स्वाश्रयार्थकतया निर्भरं दर्शयति (नस्वाश्रयग्राह्य-नयावत्स्वाश्रगग्राह्यमिति ) घटादिज्ञानप्रामाण्याना मनुगतरूपेण नसाध्यघटकता अपितु विशिष्यैवेति दर्शयति ( तत्तद्धर्मघटितेति ) ताद्रूप्येण-घटत्ववति घटत्वप्रकारकत्वत्वादिना (अननुगतत्वादिति)तद्वतितत्प्रकारकत्वत्वस्य तत्पदार्थाननुगमेनाननुगततया सर्वेषां प्रामाण्यानामनुगतरूपेणाभिधानासंभवादित्यर्थः । ननु माभूत्तद्वति तत्प्रकारकत्वत्वमनुगतम्, प्रमापद प्रवृत्तिनिमित्तत्वादे रनुगतधर्मस्य सत्त्वा त्तदवच्छिन्नस्यैव स्वशब्दार्थता किन्नेष्यत इत्य आह ( प्रमापदेति ) अनुगमेपि- सर्वप्रामाण्यानां संग्रहसम्भवेपि । परेषां – नैयायिकानां । गुरूणां ज्ञानत्वात्मत्वादौ तत्प्रसिद्धिसंभवात परेषामित्युक्तम् ।

यद्यप्येतदनुमानस्य नैय्यायिकीयत्वा त्तत्पदेन नैय्यायिकाभिधानं दुर्घटतया प्रतिभाति, तथापि यावत्स्वाश्रयग्राह्यत्वरूप साध्यसमभिव्याहारात् तत्साध्यव्यवस्थापकापेक्षया परत्वेन तत्पदान्नैय्यायिक लाभः । एवंच पक्षत्वमपि विशेषरूपेणैव, ननु प्रमापदप्रवृत्तिनिमित्तत्वादिना , एकप्रामाण्ये परप्रामाण्याश्रययाव द्ग्राह्यत्वाभावस्य निर्विवादतयोक्तरूपेण सकलपक्षतायाः अनौचित्यात । अतएवेश्वर योगिज्ञानमात्रवृत्ति तदंकुरप्रकारकत्व घटितप्रामाण्यं बाधासिद्धिवारणायानस्यास इति विशेषण मित्यपास्तं, तादृश विशेषणोपादा

[म] स्वाश्रये सत्यपि तदुत्तरतृतीयक्षणवृत्तिसंशयविषयत्वात्, अप्रामाण्यसंशयाजन्यसंशयविषयत्वाद्वा, अप्रामाण्यवत् ।

---

[दी] तद्धर्मघटितप्रामाण्याश्रय यावद्ग्राह्यत्वञ्च नतद्धर्मिधर्मसम्बन्धे ऽप्योऽन्यस्येति संशयकोटित्वं केवलं तत्रैव व्यभिचारीति तद्वारणाय ( तदुत्तरेति )

---

[अ] नेपि सर्वविषयकत्ववति सर्वविषयकत्वप्रकारकत्वादौ बाधस्य दुर्वारत्वात् । तादृशप्रामाण्ये ऽस्मदादीनां तृतीयक्षणे संशयेन तस्य पक्षतावच्छेदकाक्रान्तत्वात् । हेतुघटकोत्तरतृतीयत्वस्यानुगतस्य दुर्वचतया भागासिद्धिवारणस्याशक्यत्वाच्च ।

घटत्ववति घटत्वप्रकारकत्वत्वादिना प्रामाण्यस्य साध्यघटकत्वे यावत्तदाश्रयग्राह्यत्वस्य प्रसिद्धिस्थलं दर्शयन्नेव हेतुविशेषणव्यावर्त्यं निर्द्धारयति ( तद्धर्मेति ) ( तद्धर्मीति )

नच घटत्ववतीत्यादिप्रामाण्यस्य घटादिरूपधर्मिभेदेन भेदोप्रामाणिक इति प्रत्येकं घटादिव्यक्तौ नैतादृशप्रामाण्याश्रययावद्ग्राह्यत्वमिति कथमेतदिति वाच्यम् । तत्तद्व्यक्तित्वाद्येकैकमात्रवृत्ति प्रकारघटितप्रामाण्यघटित स्थलाभिप्रायेणैतत्संगतेः ।

वस्तुतो विशेष्यताया विशेष्यभेदेन भिन्नतया तद्घटितत्वेन सामान्यतस्तत्तद्धर्मिघटितत्वेनच प्रामाण्यमपि धर्मिभेदात् भिन्नमेव, एवंच घटत्वादिमत्तद्घटादिविशेष्यकत्वावच्छिन्न घटत्वादिप्रकारकत्वत्वेनैव प्रामाण्यं साध्ये निवेशनीयम्, नतु घटत्वादिमद्विशेष्यकत्वावच्छिन्न घटत्वादिप्रकारकत्वत्वेन, सकलघटविशेष्यक घटत्वप्रकारकज्ञानानामेव तादृशघटत्वादिप्रकारकत्वाश्रयतया प्रत्येकं कुत्रापि प्रामाण्ये यावत्तादृशज्ञानग्राह्यत्वासत्त्वेन बाधापत्तेः । एवञ्च तत्तद्घटादिघटितप्रामाण्याश्रययावद्ग्राह्यत्वं तत्तद्घटादौ प्रसिद्धमेवेति ( तत्रैवेति ) विषयान्तरे तद्धर्मघटितप्रामाण्याश्रययावद्ग्राह्यत्वाभावसत्त्वेन व्यभिचारानवकाशात्, ज्ञानत्वादौच हेत्वसत्त्वादिति भावः ( तदुत्तरेति ) तत्पदेन तत्तत्प्रामाण्याश्रयसामान्यविवक्षणे तादृशप्रामाण्याश्र

[ दी ] तदाच ताद्दशप्रामाण्याश्रयव्यक्त्युत्तरतृतीय क्षणे तस्य पुंसः प्रामाण्यसंशयो नतद्धर्मादिषु सा प- रामर्शनीया । तदधिकरणक्षणोत्तरवृत्ति संशयविषयत्वं प्रामाण्य संशयजन्य संशयकोटौ तद्धर्मे व्यभिचारीति (तृतीयेति) स- त्यन्तश्च संशयस्य तद्व्यक्तिसामानाधिकरण्यलाभाय । तथाच

---

[ग] यपूर्वपूर्वज्ञानाधिकरणक्षणध्वंसस्य क्षणमात्र एव सत्वेन ताद्दशज्ञाना धिकरण क्षणध्वंसाधिकरण क्षणध्वंसानधिकरणक्षणाप्रसिद्धिः, यत्किंचि- त्ताद्दशज्ञानाधिकरणक्षणध्वंसनिवेशे चायं घट इत्यादिव्यवसायोत्तर- तृतीयक्षणे यत्र कथंचित् घटादावेव धर्मिणि घटत्वादिसंशय स्तत् कोटितामादाय घटत्वादौ व्यभिचार इत्यत आह ( तदाचेति ) त दा-तच्छब्देन । ( तस्य पुंसः प्रामाण्यसंशय इति ) अत स्तदुत्तरतृती यक्षणवृत्ति तद्व्यक्तिसमानाधिकरण संशयविषयत्वं नासिद्धमिति- भावः ( नतद्धर्मादिष्विति ) अतो नोक्तव्यभिचार इति भावः ( प्रा माण्यसंशयजन्य संशयकोटाविति ) तृतीयक्षणजातप्रामाण्यसंशयोत्तर जातसंशयकोटावित्यर्थः । यद्व्यक्त्युत्तरतृतीयक्षणे प्रामाण्यसंशय स्त- स्याएव हेतुघटकतया तृतीयक्षणे प्रामाण्यसंशयानुधावनं । अर्थसंश यस्य प्रामाण्यसंशयजन्यत्वं व्यभिचारप्रयोजकमिति ध्येयम् .

सत्यन्तस्य स्वाश्रयसमानकालीन त्वार्थकत्वे उत्तरतृतीयक्षणजा तस्य तथात्वाभावादप्रसिद्धिः, स्वाश्रये जाते सतीत्यर्थकत्वे स्वाश्र योत्पत्त्युत्तरत्वपर्यवसितस्य तदर्थस्याव्यावर्तकतया वैयर्थ्य मत स्सतिसप्तम्याः सामानाधिकरण्य परतया तत् सार्थकयति । ( सत्य- न्तश्चेति ) ( तद्व्यक्तीति ) तदुत्तर तृतीयत्वावधि व्यक्तीत्यर्थः । तद्व्यक्तेः यदुत्तरतृतीयक्षणे तदाश्रयस्य पुंसो नघटत्वादौ संश यः पुरूषान्तरस्य तत्र संशय एव सैवोपदेया, अतो नसत्यन्तवैयर्थ्यम् । समुदितहेत्वर्थमाह ( तथाचेति ) यत्संशयविषयत्वं प्रामाण्ये तद्विषय·

[दी] तद्व्यक्त्युत्तरतृतीयक्षणवृत्ति तद्व्यक्तिसमानाधिकरणसंशय-कोटिःत्वादित्यर्थः । तदुत्तरतृतीयत्वञ्च तदधिकरणक्षणध्वंसाधिकर णक्षणध्वंसाधिकरणत्वे सति तादृशक्षणध्वंसानधिकरणत्वं ।

---

[ग] त्वं तद्घटकघटत्वादिसाधारणमिति तत्र व्यभिचारवारणाय( कोटि त्वादिति ) उत्तरतृतीयत्वं उत्तरत्वे सति तृतीयत्वं यदिविवक्षितं, तदा पूर्वोत्तरसाधारणतृतीयत्वस्यैकस्य दुर्वचतया प्रकृते तृतीयत्व मुत्तरतृतीयस्यैवेति उत्तरत्वांशवैय्यर्थ्य मतस्समुदायस्यैवार्थन्निर्वक्ति ( तदुत्तरतृतीयत्वञ्चेति ) सत्यन्तविशेषणाध्यवसायपूर्वकालीनार्थसंशयमादाय नव्यभिचारः । विषयितासंबन्धेन तदधिकरणतद्विषयक-पूर्वोत्पन्नज्ञानादिध्वंसमादाय पूर्वकालेतिप्रसंगवारणाय प्रथमक्षणपदम् कालिकसंबन्धेनाधिकरणतालाभाय । एवंतदधिकरणकालध्वंसविषयक-पूर्वकालीनज्ञानध्वंसमादाय पूर्वकालेतिप्रसंगवारणाय द्वितीयक्षणपद-मपि कालिकसम्बन्धेनाधिकरणतालाभाय । द्वितीयक्षणसाधारण तद-धिकरणकालध्वंसाधिकरणत्वमात्र निवेशे द्वितीयक्षणजातान्यधर्मिक घटत्वादिसन्देहमादाय तत्र व्यभिचारः, यद्व्यक्ते रुत्तरतृतीयक्ष-णेनसंशय स्तद्व्यक्तेर्हेतुघटकतया यद्द्वितीयक्षणे संशय स्तस्याअपि-व्यक्ते हेतुघटकत्वात्, अतो द्वितीयक्षणध्वंसाधिकरणत्व निवेशः । वस्तुतो द्वितीयक्षणसाधारणोक्त भागमात्रनिवेशे मूलोक्तोत्तर तृतीयपदस्य यथाश्रुतार्थपरित्याग इति द्वितीयक्षणध्वंसनिवेशः । यथा सन्निवेशोऽवैय्यर्थ्यात् । अतएव तद्व्यक्तिध्वंसाधिकरणत्वे सती त्यप्युपेक्षितम् । घटादिध्वंसानधिकरणेपि तदुत्तरतृतीयत्वव्यवहारेण तादृशसत्यन्तार्थघटितस्यापदार्थत्वात्, चतुर्थादिक्षणवारणाय विशेष्यदळं ( तादृशेति ) द्वितीयक्षणध्वंसाधिकरणपरं । अत्रापि क्षणपदं कालिक सम्बन्धेनाधिकरणत्वलाभाय, अन्यथा तृतीयक्षणस्यापि द्वितीयक्षणध्वंसविषयकपूर्वज्ञान ध्वंसाधिकरणतया अप्रसिद्धतापत्तेः । मूलोक्तक्ष-णपदंच यथाश्रुतार्थकं, अन्यथा तृतीयक्षणपर्यन्तस्यापि स्थूलकालवृत्तिताया व्यवसायपूर्वकालोत्पन्नार्थसंशयेपि सत्त्वेन व्यभिचारप्रसंगात् ।

[दी] पुरोवर्तिविशेष्यकं घटत्वप्रकारकं ज्ञानं सघटइत्येकं स्मरणम्, अथ – प्रामाण्याप्रामाण्यस्मरणं, अथतज्ज्ञानं प्रमानवेतिसंशय

---

[ग] उत्तरात्तृतीयइतिसमासादरेण स्थितिक्षणापेक्षया तृतीयक्षणविवक्षायामपि यद्व्यक्तेस्तादृशक्षणे प्रामाण्यएव संशयो नार्थे तद्व्यक्तिद्वितीयक्षणोपादानेनार्थे व्यभिचारवारणसम्भवे क्षणस्य तत्तद्व्यक्तित्वेनोपादाने गौरवविरहेपिचाप्रयोजकत्वं दुर्वारमेव, स्वाश्रयक्षणे प्रामाण्यग्रहेपि तन्नाशे प्रामाण्यसंशयसम्भवा दत उत्पत्तिक्षणापेक्षया तृतीयक्षणमात्र वृत्त्युत्तरतृतीयत्वं निरुक्तं । एवंच व्यवसायानन्तरजातानुव्यवसायरूप धर्मिज्ञान तदुत्तरजातकोटिद्वयोपस्थितिभ्यां जनिते व्यवसाये प्रामाण्यसंशयमादाय नपक्षे हेतुसिद्धि रतःस्थलान्तरीयप्रामाण्यसंशय मादाय तामुपपादयति ( पुरोवर्तीति ) ( एकंस्मरणमिति ) ज्ञानघटोभयविशेष्यक चाक्षुषादिज्ञानासम्भवात स्मरणानुधावनम् । अनुमितिशाब्दबोधादे रप्युपलक्षणमेतत् । प्रामाण्याप्रामाण्यस्मरणस्य प्रमाण्यघटकतया घटे घटत्ववत्तावगाहित्वेन घटत्वघटितप्रामाण्याश्रयत्वेपि तद्वितीयक्षणजातसंशये तत्तृतीयक्षणवर्तित्वसत्वेपिच घटमुख्यविशेष्यक घटत्वप्रकारकज्ञान एव घटत्वांशे प्रामाण्यं गृह्यत इत्युक्तौ तादृशज्ञानोत्तर तृतीयक्षणवृत्ति संशयविषयत्वमेव हेतूकार्यं, अन्यथाऽप्रयोजकतापत्तेरिति ज्ञानरूपधर्मिस्मरणस्यघटमुख्यविशेष्यकत्वानुधावनम् ।

वस्तुतो यादृशस्वाश्रयव्यक्ते र्द्वितीयक्षणएव प्रामाण्यसंशयो जन्यते तद्व्यक्ते र्मूलस्थस्वाश्रयपदेन विवक्षा, तथासति द्वितीयक्षणवृत्तित्व मुपेक्ष्य तृतीयक्षणवृत्तित्वानुसरणस्य निर्बीजतापातादिति धर्मिज्ञानस्य प्रामाण्याश्रयत्वमुपपादितम् । एतदेव प्रामाण्योपस्थितेः स्वातन्त्र्येण घटविषयकत्वोपेक्षाबीजं । प्रामाण्यादिकोटिस्मृतेः स्वातंत्र्येण घटविषयिण्या अनन्तरं यत्र तदनुव्यवसायरूपधर्मिज्ञानं तदनन्तरजातसंशयमादाय पक्षेहेतुसत्त्वनिर्वाहेपि साधारणधर्मादिविशिष्टधर्मिज्ञान-

[दी] इति नासिद्धिः । यद्दि च क्वचिद्धर्मविशेषघटितप्रामाण्ये नकदाचिदपि तादृशसंशयसम्भवस्तदातत्पक्षाद्बहिर्भावनीयं । स्वमतेनैवहेत्वभिधानादुभयसाधारणसंशयत्वानिर्वचनेपि नक्षतिरितिसर्वं सुस्थम् ॥

---

[ग] जन्याया एव कोट्युपस्थितेः संशयजनकत्वे धर्मिज्ञानप्राक्कालीन कोट्युपस्थितितो नसंशयस्संभवतीति धर्मिज्ञानोत्तरकोट्युपस्थित्यनुधावनम् । सकलप्रामाण्यस्य उक्तप्रामाण्या तदाश्रयतृतीयक्षणे संशयस्याप्रामाणिकत्वात् प्रामाण्यविशेषे हेत्वसिद्धिरित्याशङ्कां परिहरति ( यदीति ) तत - प्रामाण्यम् । पक्षाद्बहिर्भावनीयं - न पक्षीकार्यम् । प्रामाण्यानां विशिष्यैव पक्षत्वादिति भावः ।

ननु व्यवसायोत्तरतृतीयक्षणवृत्तिनिश्चयप्रकारतामादाय घटत्वादौ व्यभिचारस्य वारणाय मूले संशयपद मुपात्तम् । संशयत्वश्चयद्येकधर्मिणि स्वस्वविरोध्युभयप्रकारकत्वं स्वस्वाभावोभयप्रकारकत्वंवा विवक्षितं, तदा गुरुमते हेत्वसिद्धिः, 'अनन्यथाख्यातिवादिन स्तस्य ज्ञानांशे प्रामाण्यविरोधिकोटे बाधितत्वेन तत्प्रकारकत्वाभावात् । नापि ज्ञायमाने धर्मिणि अगृह्यमाणसंसर्गक स्वस्वविरोधिज्ञानत्वं तन्मते स्वतन्त्रकोटिद्वयोपस्थिता वे तन्मतेच कोटिद्वयविशिष्टज्ञानेपि प्रसिद्धमिति, तन्मते व्यवसाये प्रामाण्यभानेनाप्रामाण्यासंसर्गग्रहसत्त्वा त्तृतीयक्षणे अप्रामाण्यस्यागृहीतासंसर्गकत्वविरहेणासिद्धेः । नापि स्वविरोधिविषयकज्ञानत्वमात्रम् , यद्व्यवसायोत्तरतृतीयक्षणे घटत्वाद्यभावस्य क्वचिद्धर्मिणि ननिश्चयो नापि निर्विकल्पकं ज्ञानं सएव व्यसायस्तत्पदेन विवक्षित इति निर्विकल्पक ज्ञानस्य विपरीतज्ञानाप्रतिबद्धचतया प्रामाण्यस्य व्यवसायेन ग्रहणेपि तत्तृतीयक्षणेतादृश प्रामाण्यज्ञानसंभवेन तादृशज्ञानविषयत्वस्याप्रयोजकतया व्यवसायाविषयत्वासाधकत्वात् । नापि धर्मिसाकांक्षस्वविरोधिकोटिविषयकज्ञानत्वं - आकांक्षाच पदार्थान्तरमिति, न्यायमते तादृशाकांक्षाया अप्रसिद्धेरित्यतआह ( स्वमतेनैवेति ) तथाच एकधर्मिकस्वस्वाभावोभयप्रकारकज्ञानत्वमेव संशयत्वं, संशयस्यान्यथाख्याति

[टी] एतेनदूषणाभासास्समाधानाभासाश्चनादरणीयाः । तेचयथा – ननु स्वाश्रयोत्पत्तिक्षणापेक्षया तृतीयक्षणे नतत्संशयस्संभवति । अथतत्स्थितिक्षणापेक्षयातथा वक्तव्यं ।

---

[ग] रूपतां युक्त्यन्तरेण व्यवस्थाप्य मध्यस्थस्योक्तहेतुमत्तानिश्चयः पक्षे उपपादनीय इतिभावः ।

यद्यप्यन्यधर्मिकसंशयसाधारणरूपेण संशयस्य हेतुघटकत्वे अप्रयोजकत्वं दुर्वारमेव, भिन्नधर्मिकसंशयस्य विरोधिज्ञानाप्रतिबध्यत्वात्। तथाप्यग्रे स्वयमुद्भावयिष्यत एव दोष इत्यदोषः । व्यवसायसमानधर्मिकत्वन्तु संशयस्य विवक्षानर्ह, न्यायमते व्यवसायस्य स्वाविषयकत्वेन तद्धर्मिकप्रामाण्यसंशयस्य व्यवसायसमानधर्मिकत्वविरहेणासिद्धेः । व्यवसायधर्मिकतत्तृतीयक्षणवृत्तिसंशयविषयत्वेन तद्व्यवसायाग्राह्यत्वसाधने प्यप्रयोजकत्वं दुर्वारमेव, अन्यांशे ग्राह्यत्वासाधारणरूपावच्छिन्नग्राह्यत्वाभावमन्तरेणापि प्रामाण्ये पक्षे निरुक्तहेतुमत्ताया उपपत्तेः । तद्व्यवसायांशे तद्ग्राह्यत्वसाधनेच न्यायमते व्यवसायांशे तद्ग्राह्यत्वरूपप्रतियोग्यप्रसिद्धिः । स्वाग्राहकतद्व्यवसायकत्वस्य साध्यत्वोपगमेच स्वत्वाननुगमेन साध्यप्रसिद्धौ कृतार्थता । व्यवसायं पक्षीकृत्य प्रामाण्याग्राहकत्वसाधनप्रकारः स्वयमग्रे दर्शनीयः (एतेनेति) उक्तक्रमेण न्यायमतेपि व्यवसायोत्तरतृतीयक्षणे तद्धर्मिकप्रामाण्यसंशयसंभवादसिद्धिविरहेण, व्यवसायव्यक्तिविशेषोपादाना दर्थे व्यभिचारविरहेणचेत्यर्थः । दूषणाभासाः - असिद्धिव्यभिचारप्रदर्शनरूपाः । तेषामाभासता दर्शितस्फुटतरसमाधानसत्वेन, समाधानानामाभासताच दोषान्तरसंपादकत्वेन प्रकृतदोषनिराकरणाक्षमत्वेनचेति व्यक्तीभविष्यति (सम्भवतीति) न्यायमत इति शेषः । क्रमिकानुव्यवसायात्मकधर्मिज्ञानकोट्युपस्थित्योरपेक्षणादिति भावः । तथाचासिद्धिदोष इति सूचितम् । असिद्धिपरिहारमाशंकते (अथेति) (तत्स्थितिक्षणेति) स्वाश्रयद्वितीयक्षणेत्यर्थः । वक्तव्यं, तदुत्तरतृतीयत्वमिति शेषः । अत्रच द्वितीयक्षणस्य स्वोत्पत्त्यनधिकरण-

[प्र] अर्थनिश्चितेपि न तन्निश्चयानन्तरतृतीय क्षणेऽर्थसंशयो - नवा प्रामाण्यसंशयं विनेति नार्थव्यभिचारः । विवादपदं न- यावत्स्वाश्रयग्राहकग्राह्यं स्वाश्रयनिश्चये सति तत्तदुत्तरतृतीयक्षणेऽ - प्रामाण्यसंशयं विना वा सन्दिह्यमानत्वात् अप्रामाण्यवत् ।

---

[दी] भवतिच घटप्रमा, अथज्ञानत्वविशिष्टस्य ग्राहकोऽग्राहकोवा नु व्यवसायः, अथ प्रमात्वा प्रमात्वस्मरणं , अथ प्रामाण्यसंशय इति चेत् , तथापि स्वाश्रयस्य विषयेविषयेवा धर्म्यन्तरे

---

स्वाश्रयकालत्वेन निवेशः । अनधिकरणान्तानिवेशे उत्पत्तिक्षणस्य स्वाश्रयतया तत्तृतीयक्षणध्वंसाधिकरणचतुर्थक्षणस्य पूर्वोपदर्शितविशेष्यद ळासत्त्वेनासंगत्यापत्तेः(ज्ञानत्वविशिष्टस्य ग्राहकइति ) ज्ञानत्वविशिष्टबुद्धौ ज्ञानत्वज्ञानस्य प्रकारित्वादिविशिष्टबुद्धौ तज्ज्ञानस्यैवा हेतुत्वमित्यभिप्राये ण , ज्ञानत्वस्य व्यवसायकालेयत्र ज्ञानं प्रकारान्तरेण तत्स्थलाभि प्रायेणवा ( अग्राहकोवेति ) विशेषणज्ञानं हेतुः ज्ञानत्वस्य प्रकारा न्तरेण यत्र नोपस्थितिरित्यभि प्रायेण । तथाच सति ज्ञानत्वरूप धर्मितावच्छेदक प्रकारकज्ञानविरहेण तद्घटितधर्मावच्छिन्न धर्मिकप्रा माण्यसंशयासम्भवेपि घटत्वादिप्रकारकत्वादिमात्रं धर्मितावच्छेदकी- कृत्य संशयसम्भवात् तमादायैव प्रामाण्ये हेतुसिद्धि स्सम्भवतीति ज्ञानत्वस्य धर्मितावच्छेदकान्तर्भावो ऽ किंचित्कर इति अनुव्यवसाया न्तरापेक्षया क्षणविलम्बस्य नावकाश इति भावः । ( अथेति ) अनंत रमित्यर्थः । एवमग्रेपि । स्वाश्रयस्य - घटत्ववति घटत्वप्रकारकत्वा श्रयस्यायं घटइत्यादि व्यवसायस्य, विषये विषयेवाधर्म्यन्तरे - पटादौ, तथाविधक्षणे- चतुर्थक्षणे तृतीयक्षणे वा, सन्दिह्यमाने घटत्वादावित्यन्वयः। उक्तव्यवसायस्य समूहालम्बनात्मकत्वेपि तदुत्तरजातपटादिरूपधर्मि- ज्ञानवशात् तद्धर्मिकघटत्वादिसंशय स्सम्भवतीति मिश्रोक्तसमू- हालम्बने ननिर्भरइति सूचनाय " विषयेविषयेवे " त्युक्तम् । तत्र

[दी] स्वाश्रय एव वा तथाविधक्षणे सन्दिह्यमाने स्वाश्रयगृहीते घटत्वगुणत्वादौ व्यभिचारः। अथस्वाश्रयानिवर्त्यसंशय विशेष्ये

---

व्यवसायतृतीयक्षणे तदीय प्रामाण्यसन्देहानुदयात् स्वपदस्य तृतीयक्षणवृत्तिसंशयविषयप्रामाण्यपरतया तत्र प्रामाण्याश्रयग्राह्यत्वसत्वेपि प्रामाण्ये तृतीयक्षण वृत्तिसंशयविषयत्वरूपविशेषणाभावेन हेतुमतिघटत्वादौविशिष्टाभावरूपसाध्यसत्वेन नव्यभिचारइति मिश्रसमाधानमत्र नसम्यक् , तादृशसंशयविषयस्य तस्याप्रसिध्यासाध्याप्रसिद्धेः साध्यसत्ताया दुरुपपादत्वात् । प्रकृतप्रामाण्याश्रयोत्तर तृतीयक्षणवृत्तिसंशयविषयत्वस्वग्राहकाश्रयकप्रामाण्यकत्वोभयाभावत्व तत्प्रामाण्यकत्वसाध्यानुसरणेन साध्याप्रसिद्धिपरिहारेपि तादृशप्रामाण्याश्रयव्यवसायानन्तरतृतीयक्षणे क्वचित्तत्प्रामाण्यस्य संशयात प्रकृतव्यवसायोत्तरतृतीयक्षणजातघटत्वादिकोटिकघटादिधर्मिकसंशयस्यापि तत्प्रामाण्यसंशरूपतासंम्भवेन तत्प्रामाण्ये उभयसत्वेन व्यभिचारस्य दुर्वारत्वात् । न च बाह्याभ्यन्तरोभयविशेष्यकसमूहालम्बन संशयासम्भवः, बहिरिन्द्रियजन्यतदसम्भवेपि उपनीतबहिर्विशेष्यकस्य मानसतादृशसंशयस्य दुर्वारत्वात् । एतेन यदुत्तरतृतीयक्षणमादाय हेतुलक्षणं तादृशस्वाश्रयस्योभयाभावप्रतियोगिकोटिप्रविष्ट तृतीयत्वावधित्वविवक्षणेपि ननिस्तारः। स्वाश्रयांशे संदिह्यमानत्वस्य हेतुत्वेनोक्तौ न घटत्वादौ व्यभिचार इत्यतः स्थलान्तरे व्यभिचारमाह ।( स्वाश्रयएवेति ) स्वाश्रये – गुणत्ववति गुणत्वप्रकारकत्वाद्याश्रये रूपंगुण इत्यादिव्यवसाये , तथाविधक्षणे सन्दिह्यमाने गुणत्वादावित्यन्वयः । व्यभिचारनिर्वाहकं साध्यासत्वं दर्शयति ( स्वाश्रयगृहीत इति ) स्वम् तत्प्रामाण्यम् । मिश्रसमाधानमाशंकते ।( अथेति ) ( स्वाश्रयानिवर्तनीयइति ) स्वाश्रयाप्रतिबद्ध्यइत्यर्थः। गुरुमतेपि प्रामाण्यसंशयस्य प्राक्स्वाश्रयसत्त्वे प्युपपत्ते र्नस्वाश्रयप्रतिबद्ध्यत्व मत स्तद्विशेष्यभूते व्यवसाये स्वाश्रय ग्राह्यत्वाभावसिद्धा वुद्देश्यासिद्धिः । नन्व गुरुम

[दी]नस्वाश्रयग्राह्यत्वमितिसाध्यम्, स्वाश्रयानिवर्त्यनीयश्च प्रामाण्य संशयवदर्थसंशयोपीति तद्वारणाय हेतौ तृतीये इति चेत,

---

ते व्यवसायस्य स्वधर्मिकप्रामाण्यनिश्चयरूपत्वेनस्वधर्मिकप्रामाण्यसंशयस्य तदप्रतिबद्धयत्वासिद्धिः, समानधर्मिकनिश्चयस्य संशयप्रतिबन्धकताया स्सर्वमलसिद्धत्वादिति वाच्यम् । अगत्या यद्व्यवसायोत्तर तृतीयक्षणे व्यवसाये प्रामाण्यसंशयः तद्व्यक्तिभेदादेः प्रतिबन्धकतावच्छेदकशरीरनिवेश मभ्युपेत्य तैरपि तत्तद्व्यक्तीनां प्रामाण्य संशयाप्रतिबन्धकताया उपपाद्यत्वात् । एवंसति तृतीयक्षणवृत्तिसंशयविषयतायाः प्रामाण्ये व्यवसायग्राह्यत्वसत्वेपि सूपपादतया हेतो रप्रयोजकत्व मधिकदूषणं द्रष्टव्यम् । पटादिधर्मिकसन्देहकोटौ घटत्वादौ स्वाश्रयानिवर्त्तनीय तत्संशयविशेष्यपटादौ नस्वाश्रयग्राह्यत्वमिति तत्र नोक्तव्यभिचारावकाशश्चेत्यभिमानः । यद्यपि स्वाश्रयपदस्य यावत्स्वाश्रयपरताया आवश्यकत्वा त्तादृशसंशयविशेष्यपटादौ घटत्ववतीत्यादि प्रामाण्याश्रययावत्ग्राह्यत्वमसिद्धम् । स्वाश्रयाप्रतिबद्धयप्रामाण्यादिसंशयादिविषये व्यवसाये यावत्स्वाश्रयग्राह्यत्वस्य तन्मते ज्ञानत्वादौप्रसिद्धावपि न्यायमते ऽप्रसिद्धिरिति न्यायमते घटत्वादौ तदभावरूपसाध्यसत्वं दुर्घटम्; तथापि तदंशे यावत्स्वाश्रयाग्राह्यत्वस्य तद्विशेष्यतानिरूपित स्वप्रकारकत्वानिरूपक प्रकृतप्रामाण्याश्रयसामान्यकत्वरूपस्य विवक्षणीयत्वा न्नदोषः । स्वपदं यत्र निरुक्तसाध्यसत्व मुपपादनीयम् तत्परं, तृतीयक्षणवृत्ति स्वकोटिकसंशयविषये प्रामाण्याश्रयाग्राह्यत्वस्य साध्यत्वे हेतौ तृतीयक्षणवृत्तित्वविशेषणवैयर्थ्य मुद्भाव्य एतत्कल्पस्य मिश्रैरेवाश्रितत्वा देतत्कल्पे तदवैयर्थ्य मुपपादयति । (स्वाश्रयानिवर्त्तनीयश्चेति) अर्थसंशयोपि - तदाहितार्थसंशयोपि । तद्वारणाय - तादृशार्थसंशयविशेष्यघटादौ स्वाश्रयग्राह्यतया घटत्वादौ व्यभिचारवारणाय (हेताविति) हेतौ तृतीयक्षणवृत्तिसंशयपर्यन्तनिवेशे स्वाश्र-

[दी] विश्राम्यतु तावदर्थान्तरं, घटादीनां स्वाश्रयानिवर्तनीयस्य देव दत्तीयत्वादि कोटिकस्य प्रामाण्यसंशयाहितस्य संशयस्य वि॰ षयतातु केन वार्यतां। अथ स्वकोटिक स्वाश्रया निवर्तनीय स्वाश्रयोत्तरतृतीयक्षणवृत्ति संशयस्य विशेष्ये स्वाश्रयग्राह्यत्वाभावः,

---

याप्रतिबद्धय यत्संशयविशेष्यो घटत्वादिना स्वाश्रयविषयो घटादिः ससंशयो नहेतुघटकइति स्वाश्रयानिवर्त्तनीयसंशयविषयत्वेन घटादे र्नसाध्यघटकतेत्याभिमानः। अयं घटइत्यादि व्यवसाय तृतीयक्षणवृत्तितया हेतावपि घटकस्य घटादिधर्मिकदेवदत्तीयत्वादि कोटिक संशयस्य स्वाश्रयानिवर्त्तनीयस्य विषये घटादौ स्वाश्रयग्राह्यतया हेतौ तृतीयक्षणवृत्तिसंशयनिवेशेपि तादृशप्रामाण्यसंशयाहितघटादि धर्मिकघटत्वादिसंशयस्यापि स्वाश्रयानिवर्त्तनीयत्वेन साध्यघटकताया दुर्वारतया तादृशसंशयविषये घटादौ स्वाश्रयग्राह्यतयापि घटत्वादौ व्यभिचारो दुर्वारइति दूषयति (विश्राम्यत्विति) (अर्थान्तरमिति) विप्रतिपत्तावकोटितया उक्तसंशयविशेष्येस्वाश्रयग्राह्यत्वाभावरूपसाध्यस्या जिज्ञासितत्वेनेत्यादिः। नह्येतादृशपरतोग्राह्यत्वस्यैव नैय्यायिकै रुद्भावना द्विप्रतिपत्तावस्य कोटितासम्भवः, यावत्स्वाश्रयग्राह्यत्वमात्रस्यैव गुरुणा साधनीयत्वा न्निरुक्तस्य तद्विशेषाभावरूपसाध्यस्य तदविरोधितया नैय्यायिकै रुद्भावनायोगात्, तत्कोटिमादाय संशयस्याप्यसम्भवाच्च। हेतौ व्यर्थविशेषणता मपश्यन् दर्शितसंशयद्वयवारकं साध्ये स्वकोटिकत्वतृतीयक्षणवृत्तित्वरूप विशेषणद्वयम् संशये प्रवेशयति। (अथेति)(स्वकोटिकेति) स्वपदं साध्यवत्वेना भिमतपरं। स्वाश्रयेत्यत्र स्वंप्रामाण्यमेव। देवदत्तीयत्वादि कोटिकस्यापि घटे घटत्वावगाहिव्यवसायोत्तरतृतीयक्षणवृत्तिसंशयस्य घटादौ घटत्वकोटिकतासम्भवात् स्वकोटिकत्व विशिष्टसंशयविशेष्यत्वपर्यन्तं विवक्षणीयम्। व्यवसायस्थितिक्षणापेक्षया तृतीयक्षणे व्यवसायरूपप्रतिबन्धकस्या व्यवहितपूर्वकाले अ-

[दी] शब्दमात्रानुगमेन वाच्यइतिचेत् , स्वरूपेण रूपान्तरेणवा तत्र गृह्यमाणस्य अन्यरूपेण संशयस्य तथाविधत्वात् तद्विषये-तादृशस्य गृह्यमाणत्वेन व्यभिचारात् , एवं धर्मितावच्छेदकभेदादिरपि द्रष्टव्यः निर्वक्तव्यः। कुकल्पनासहस्रादरेतु हेतौ व्यर्थविशेषणत्वमितिदिक् ।

---

सत्वेन तद्विषयेपि घटत्वादिप्रकारसंशयसम्भवात् घटत्वादौ व्यभिचारइति स्वाश्रयानिवर्तनीयइति संशयविशेषणं। स्वकोटिकेत्यत्र स्वपदात्थानुगमस्य दुर्वारतया ( शब्दमात्रानुगमेनेति ) स्वाश्रयोत्तरतृतीयक्षणेपि कदाचित् प्रामाण्यसंशयाहितार्थसंशयसम्भवात्-तादृशसंशयविशेष्येस्वाश्रयग्राह्यघटत्वादौ व्यभिचारसत्वेपि दूषणान्तरमाह ( स्वरूपेणेति ) स्वरूपेण गृह्यमाणत्वं- स्वांशे निष्प्रकारकग्रहविषयत्वं। रूपान्तरेण - घटत्वादिना। तत्र - घटादौ। गृह्यमाणस्य- घटत्वादेः। अन्यरूपेण - जातित्वादिना। संशयस्येत्यत्रापि तत्रेत्यनुषज्यते। तथाविधत्वात् - स्वकोटित्वादिविशेषणवत्वात् । तद्विषये - तादृशसंशयविशेष्ये। तादृशस्य - घटत्वादेः, गृह्यमाणत्वेन ( व्यभिचारादिति ) ( धर्मितावच्छेदकभेदादिरपीति ) संशयनिश्चययो धर्मितावच्छेदकादिभेदोपि व्यभिचारप्रयोजकतया द्रष्टव्यः । एकरूपावच्छिन्ने धर्मिणि गृह्यमाणस्य धर्मितावच्छेदकान्तरावच्छिन्ने तत्रसंशयस्य तथाविधत्वा तद्विशेष्येगृह्यमाणतया व्यभिचारइत्यर्थः । आदिपदात् संसर्गभेदपरिग्रहः। ननु यद्रूपावच्छिन्न यत्संसर्गावच्छिन्न स्वनिष्ठकोटितानिरूपकोयः स्वाश्रयानिवर्तनीय स्वाश्रयोत्तरतृतीयक्षणवृत्तिसंशय स्तद्विशेष्यतावच्छेदकावच्छिन्ने तेनरूपेण तत्सम्बन्धेन स्वाश्रयांशेगृह्यमाणत्वविवक्षायां नोक्तदोषः, तादृशविशेष्यतावच्छेदकावच्छिन्ने तद्रूपादिना स्वाश्रयागृह्यमाणत्वंच तदवच्छिन्नविशेष्यतानिरूपित तद्रूपाद्यवच्छिन्नप्रकारकत्वानिरूपक स्वाश्रयसामान्यकत्वं, अतो यथाश्रुते यावत्स्वाश्रयानिवेशे बाधस्य तन्निवेशेच पूर्वोक्तक्रमेणाप्रसिद्धेः सत्वेपि नक्षतिरित्यतआह ( कुकल्पनेति ) ( हेतौ व्यर्थविशेषणत्वमिति ) याव-

[दी] केचित्तु स्वाश्रयोत्तरसमानाधिकरण स्वार्थकोटिकयावत्संश यपूर्वकालीन स्वाश्रयोत्तरसमानाधिकरण संशयकोटित्वादित्यर्थः,

---

त्स्वाश्रयग्राह्यघटत्वादा वप्युक्तरीत्या साध्योपपादनेन्यत्र सर्वत्रैव सा ध्यसत्वाद्विषयत्वमात्रस्यैव हेतुतासम्भवादिति भावः । स्वाश्रयोत्तर- तृतीयक्षणवृत्ति यत्संशयस्य यद्धर्मावच्छिन्ने येनरूपेण यत्सम्बन्धेन यः कोटितया विशेषणम् तद्धर्मावच्छिन्ने स तेनरूपेण तत्सम्बन्धेन नयावत्स्वाश्रयग्राह्यइति सामान्यव्याप्त्यादरेण हेतुविशेषणसार्थक्ये पि यत्तदर्थाननुगमदोषो दुर्वारएव । एवं स्थितिक्षणापेक्षया तृती यक्षणजातस्य प्रामाण्यसंशयानुत्तरस्य तदुत्तरस्यवा संशयस्य विष- यत्वमर्थेपीति व्यभिचारो दुर्वारः, उत्पत्तिक्षणमपेक्ष्य तृतीयत्वनिवेशेपि व्यवसायद्वितीयक्षणे यत्र कथंचित् प्रामाण्यसंशया त्तदनन्तरक्षणेर्थ संशय स्तमादाय व्यभिचारइत्याशयः। केचित्तुचतुर्थादिक्षणोत्पन्नसं- शयविषयार्थव्यभिचारवारकक्षणविशेषण तृतीयत्वोपादानं संशये या वदर्थसंशयपूर्वत्वलाभाय, अर्थसंशयस्तु नतथा तत्पूर्वत्वस्यैव तत्र विरहा दित्याहु स्तन्मतमुपन्यस्यति । ( केचित्त्विति ) चतुर्थादिक्षणजा तार्थसंशयस्याप्युदीच्यार्थसंशयपूर्वकालीनतया तद्वारणाय "यावदिति" संशयविशेषणं। स्वाश्रयोत्तरतृतीयक्षणोत्पन्न प्रामाण्यसंशयस्यापि त- त्स्वाश्रयपूर्वकालीनार्थसंशया दपूर्वत्वा दसिद्धि रतः ( स्वाश्रयोत्तरेति )- उत्तरदळप्रविष्टस्वाश्रयव्यक्त्युत्तरकालीनार्थकं। उक्तप्रामाण्यसंशयस्य द्वि तीयतृतीयक्षणजातपुरुषान्तरीयार्थ संशयपूर्वकालीनत्वाभावा द- सिद्धि रतः ( समानाधिकरणेति ) तद्व्यक्तिसमानाधिकरणार्थकं । नच यादृशव्यवसायद्वितीयतृतीयक्षणे कस्यापि पुंसो नार्थसंशयस्तत्तृती- यक्षणवृत्ति प्रामाण्यसंशयमादायैव प्रामाण्येहेतुसत्वोपपत्तेः समा- नाधिकरणेतिव्यर्थमेवेतिवाच्यं, पुरुषाणामानन्त्यात् यद्व्यवसायद्वितिया दिक्षणेनार्थसंशयस्तस्य दुर्निश्चयतयासन्दिग्धासिद्धे र्दुर्वारत्वात। नचासि द्धिवारकत्वेपि व्यभिचारावारकतया वैयर्थ्यं दुर्वारमेवेति वाच्यम्,

[टी] स्वार्थत्वन्तु स्वाश्रयविषयताप्रयोजक प्रत्यासत्तिशालित्वं

स्वाश्रयोत्तरसंशयमात्रस्यैव स्वाश्रयोत्तरयावदर्थं संशयपूर्वकालीनतया सन्दिग्धासिद्धत्वाद् प्रसिद्धिसन्देहेन व्याप्तिग्रहासंभवा त्तद्वारकस्यापि विशेषणस्यव्याप्तिग्रहौपयिकतया सार्थकत्वात। स्वाश्रयोत्तरसमानाधिकरणप्रामाण्यसंशयपूर्वकालीनत्वस्य तत्राभावादसिद्धिरतः ( स्वार्थकोटिकेति ) प्रामाण्यस्याप्यर्थतया ( स्वार्थेति ) स्वार्थत्वं स्वाश्रयार्थत्वं प्रामाण्य व्यावृत्तमग्रेनिर्वचनीयं। प्रामाण्यसंशयस्यापि प्रामाण्यघटकतया स्वार्थ विषयकत्वात तत्कोटिकत्वनिवेशः। कोटित्वम्मुख्य विशेष्यतानिरूपित प्रकारत्वं। स्वाश्रयजन्य तादृशस्वार्थप्रकारताशालि संस्कारपूर्वतायाः स्वाश्रयोत्तर प्रामाण्यसंशये अभावात् संस्कारवारणाय संशयपदं ज्ञान मात्रार्थकं। प्रामाण्यघटक घटादिरूपधर्मिमुख्यविशेष्यक घटत्वादिनिश्च यस्ययावदर्थांतः पातित्वेपिक्षतिविरहात। यादृशव्यवसायद्वितीयक्षण तृतीयक्षणयो र्यत्र न तादृशनिश्चय स्तत्र तृतीयक्षणजात प्रामाण्य संशयमादायैवहेतुसिद्धिसंभवात , उपदर्शितयावत्संशयपूर्वकालीनं स्वाश्रयपूर्वकालीनं पुरुषान्तरीयस्वार्थ संशयमादायैवार्थे व्यभिचारवारणायस्वाश्रयोत्तरत्व तत्सामानाधिकरण्ययोर्निवेशः। स्वाश्रयजन्यसंस्कारीय मुख्यविशेष्यतानिरूपितप्रकारताश्रये प्रामाण्यघटकतया तत्संशयविषये चार्थेव्यभिचारवारणाय ज्ञानार्थकसंशयपद तादृशप्रकारताश्रयार्थक कोटिपदे। स्वाश्रयाविषयत्वरूप स्वार्थत्वस्यप्रामाण्यसाधारणतयोपदर्शित स्वार्थकोटिकसंशयत्वस्य प्रामाण्यसंशयसाधारणतया तत्पूर्वत्वस्यतत्राभावादसिद्धिरतः प्रामाण्यव्यावृत्तं स्वार्थत्वं निर्वक्ति ( स्वार्थत्वन्विति ) (स्वाश्रयविषयतेति) अत्रस्वाश्रयोयावत्त्वेनविशेषणीयः, अन्यथाप्रामाण्यस्यापि कुत्रचित् स्वाश्रयउपनीतस्यभानात् तद्विषयताप्रयोजकोपनयसन्निकर्षस्यतत्रसत्वेन तद्वारणासंभवात, एवंच स्वार्थघटत्वादिनिष्ठायामनुमित्यादि रूपव्यवसायविषयताया मिन्द्रियप्रत्यासत्ते रप्रयोजकतया प्रत्यक्षत्वेन स्वाश्रयोविशेषणीयः, प्राभाकरानुमता प्रामाण्यनिष्ठाप्रत्यक्षरूपव्यवसाय

[दी]स्वाश्रयविषयत्वेनोभयमते न्यायमतेवा सिद्धत्वमित्याहुः। अन्ये तु स्वाश्रये: सत्यपीत्यादिविरोधप्रदर्शनमुखेन संशये स्वाश्रयाप्रतिबध्यत्वमुक्तम् . स्वाश्रयाप्रतिबध्यसंशयमात्रकोटित्वात् , स्वाश्रयप्रतिबध्यसंशयाकोटित्वादिति यावत् ।

---

स्यापि विषयता, स्वनिष्ठतद्विषयतावत् नेन्द्रियप्रत्यासत्त्यधीना, पूर्वकाले तदाश्रयविरहेण तदाश्रयघटितमनस्सन्निकर्षस्य तदा तत्राभावादिति नासिद्धिः । परेषामतीन्द्रिय विषयक प्रत्यक्षाप्रसिद्धया तद्घटितप्रामाण्य पक्षकस्थले निरुक्तस्वार्थत्वं नप्रसिद्ध्यतीति तद्घटितहेतोरुभयत्र प्रसिद्ध्यर्थं तदन्यथा निर्वक्ति ( स्वाश्रयेति ) यावत्स्वाश्रयेत्यर्थः । तेन प्रामाण्यस्य स्वाश्रयेश्वरज्ञान विषयतयान्यायमतसिद्धत्वेपि तद्वारणं । यावत्स्वाश्रयविषयतया प्रामाण्यं गुरुमतसिद्धमित्येक तरमतसिद्धत्वमुपेक्ष्य उभयमतसिद्धत्वोपादानं । न्यायमतसिद्धत्व निवेशनेनैव प्रामाण्यवारणं सम्भवतीति गुरुमतसिद्धत्व निवेशन मनर्थकमित्यभिसन्धायाह ( न्यायमतेवेति ) अत्रस्वार्थकोटिक संशयमात्रवारणाय कालीनान्तविशेषणस्य स्वाश्रयोत्तरत्वसमानाधिकरणत्वयो रुपादानमपेक्ष्य स्वार्थकोटिकान्यत्वविशेषणोपादानमेवोचितं , प्रामाण्यस्य स्वाश्रयग्राह्यत्वेपि स्वार्थकोटिकान्यसंशयकोटित्वरूपहेतुसत्वं कालान्तरीण प्रामाण्यसंशयमादायोपपद्यतइति स्फुटतरमप्रयोजकत्वमितिचे त्तर्हि तदीयत्वाघटितोक्तहेतोरपि व्यवसायोत्तर चतुर्थक्षणादिवृत्ति प्रामाण्यसंशयमादायोपपत्त्यातद्दोषतादवस्थ्यमित्यस्वरसबीजं ( विरोधप्रदर्शनेति ) यदिप्रामाण्यसंशयः स्वाश्रयप्रतिबद्धयः स्यात्तदा तत्पूर्वं स्वाश्रयेसति तदुत्पत्ति विरुद्ध्येतेत्यर्थप्रदर्शनेत्यर्थः । तथाच तदेवहेतु घटसंशय विशेषणमितिभावः। अर्थसंशयोपि प्रामाण्यसंशयजन्योन्यधर्मिकश्च स्वाश्रयाप्रतिबद्धयइत्यर्थं व्यभिचारमाशंक्य मात्रान्तर्भावेन हेतुंदर्शयति ( स्वाश्रयेति ) अप्रतिबद्ध्यमात्रसंशयकोटित्वं - प्रतिबद्ध्यसंशयाकोटित्वेसति अप्रतिबद्ध्यसंशयकोटित्वं, तत्रवैय्यर्थ्येन विशेष्यदळं परित्यजति (स्वाश्रयप्रातिबध्येति)

[ दी ] न यावत्स्वाश्रयप्रकारइति साध्यं, न तेन धर्म्यांशे व्यभिचारः । यस्यच धर्मस्य कदाचिदपि न तद्घटितप्रामाण्याश्रय प्रतिबध्य संशयस्तद्घटितं प्रामाण्यं पक्षबहिर्भूतमेवेत्याहुः ।

---

[ग] प्रामाण्यस्य व्यवसायग्राह्यत्वेपि व्यवसायस्य ग्राह्यत्वेपि च प्रामाण्यसंशया न्नासौ तत्प्रतिबद्ध्य इत्युभयमते हेतुसिद्धिः । अर्थसंशयः प्रामाण्यसंशयाजन्यः समानधर्मिको व्यवसायप्रतिबद्ध्य इति तत्कोटावर्थे नव्यभिचारः । प्रामाण्यसंशयोपि प्रामाण्यविषयकत्वेनोभयासिद्ध समूहालम्बनरूपव्यवसाय प्रतिबद्ध्य इति यत्किञ्चिदेकधर्मावच्छिन्न विशेष्यकस्वाश्रयनिश्चयसामान्यपरं स्वाश्रयपदं वाच्यम् । अर्थसंशयरूपसमूहालम्बन प्रामाण्यसंशयस्य व्यवसायप्रतिबद्ध्यतया ऽसिद्धिरिति स्वकोटिक यत्किंचिदेकधर्मावच्छिन्न विशेष्यकसंशयत्वव्यापकत द्धर्मावच्छिन्न विशेष्यक प्रकृतप्रामाण्याश्रय निश्चयसामान्यप्रतिबद्ध्य तावच्छेदकविषयिताकान्यत्वादित्येवहेतुर्विवक्षणीयः । एवंचा र्थकोटिकलौकिक निश्चयस्यानुमित्यादिसाधारणव्यवसायसामान्याप्रतिबद्ध्य तया अर्थेनोक्तान्यत्वप्रतियोगिप्रसिद्धिरितिसंशयपदम् । धर्मिकोटिकस्य सम्बन्धकोटिकस्यवा संशयस्य समानधर्मितावच्छेदिकाया अपिघटत्वादिबुद्धेरप्रतिबद्ध्यतया स्वाश्रयग्राह्यधर्मितत्सम्बन्धयो निरुक्तहेतुर्व्यभिचारीत्यतोग्रहप्रकारत्वरूप ग्राह्यत्वविवक्षया तत्र साध्यसत्त्वमुपपादयति ( नयावत्स्वाश्रयप्रकारइति ) ( कदाचिदपि नेति ) सकलविषये संशयस्याप्रामाणिकतया कस्यचिद्धर्मस्य संशयएव नप्रसिद्ध्यति; कस्यचित् प्रामाण्यसंशयानन्तर कालमात्रे तत्प्रसिद्धावपि न निश्चयप्रतिबद्ध्यसंशयः प्रसिद्ध्यतीतिभावः ( पक्षबाहिर्भूतमेवेति ) नपक्षीकरणीयमित्यर्थः । प्रतिप्रामाण्यं पक्षतावच्छेदक भेदादिति भावः । तथाच तत्प्रामाण्याश्रयप्रतिबद्ध्यसंशया प्रसिद्ध्या न तद्घटित-

[ दी ] ( अप्रामाण्येत्यादि )अप्रामाण्यं-तत्तत्प्रामाण्यविरोधि, तत्तत्प्रामाण्याभावस्तद्भ्रमत्वंच ; तत्संशयजन्यसंशयाविषयत्वादित्यर्थः ।

---

[ग ] तत्साधनाप्रसिद्धिरितिभावः । स्वोक्तरीत्यायथाश्रुतेनैवोपपत्तेरीदृशप्रयासोऽव्यर्थ इत्येतत्कल्पेऽस्वरसः । तद्द्वितीयहेतुंव्याख्यातुमुपक्रमते ( अप्रामाण्येत्यादीति ) अप्रामाण्यपदस्य भ्रमत्व प्रमात्वाभावयोरेकतरमात्रपरत्वे यादृशप्रामाण्याश्रयेऽ न्यादृशाप्रामाण्यसंशयादेवार्थ संशयः तत्रोपात्ताप्रामाण्यसंशयजन्यसंशयाप्रसिद्ध्या साधनाप्रसिद्धिरित्याशंकया प्रामाण्यसंशयपदमनुगतरूपेणोभयपरतया व्याचष्टे ( अप्रामाण्यमिति ) विषयभेदभिन्न प्रामाण्यसामान्यविरोधित्वं नक्कापि तादृशप्रामाण्ये, यत्किंचित्प्रामाण्यविरोधित्वनिवेशे प्रामाण्यरूपप्रकारघटितप्रामाण्याविरोधि तादृशाप्रामाण्यसंशयजन्यसंशयविषयतया प्रामाण्येहेत्वसिद्धिरित्यतः (तत्तदिति) प्रकृतार्थकं । प्रामाण्यसंशयजन्यस्येव तदजन्यस्याप्यर्थनिश्चयकालीनार्थसंशयस्य सत्वात् तद्विषयतयार्थेव्यभिचार तादवस्थ्यमितिनञ्व्यत्यासेनव्याचष्टे ( तत्संशयजन्येति ) नच स्वाश्रयेसतीत्यस्यानुषङ्गेण स्वाश्रयसमानकालीनत्वस्य स्वाश्रयाव्यवहितोत्तरत्वस्य वालाभादेवसामञ्जस्ये किं नञ्व्यत्यासेनेति वाच्यम् , नञ्व्यत्यासंविनाऽन्यधर्मिकस्य प्रामाण्यसंशयजन्यसंशयस्य विषयतामादायव्यभिचारस्य दुर्वारत्वात् । स्वाश्रयसमानधर्मिकत्वस्य संशयविशेषणत्वे प्रामाण्यसंशये तथात्वस्य स्वमते असिद्ध्या प्रामाण्येहेत्वसिद्धेः । व्यवसायव्यक्तिविशेषोपादाने अप्रामाण्यसंशयाजन्यत्वविशेषणवैय्यर्थ्येन पूर्वहेत्वविशेषापत्तेः । यद्व्यवसायानन्तरद्वितीयक्षणे कथञ्चित् प्रामाण्यसंशयस्तद्द्वितीयक्षणेच तज्जन्य एवार्थसंशयस्तां व्यक्तिमुपादायाजन्यान्तसार्थक्या व्यभिचारयोरुपपादनसंभवेपि प्रयासबाहुल्यात । तत्संशयत्वेन - तदप्रामाण्यसंशयत्वेन । तथाच तदप्रामाण्यसंशयत्वावच्छिन्नजनकतानिरूपितजन्यतावच्छेदकविषयता शून्यत्वादिति

[दी]तत्संशयस्यच तत्संशयत्वेन जनकत्वंविवक्षितं, तेनधारावाहिकाप्रामाण्यसंशयस्य पूर्वपूर्वतत्संशयजन्यस्य तादृशाप्रामाण्यतदीय ज्ञानप्रामाण्याप्रामाण्योभय समूहालम्बनसंशयस्यच विषयत्वेपि नासिद्धिः । यदिच क्वचिद्धर्मविशेषे प्रामाण्यसंशयाहितोनसंशयस्तदातद्घटित प्रामाण्यं पक्षार्द्धहिर्भावनीयम् ।

---

[ग] पर्यवसितोहेतुः । तेन- तादृशजनकत्वविवक्षणेन ( धारावाहिकाप्रामाण्यसंशयस्येति ) अप्रामाण्यसंशयधारान्तः पातिद्वितीयादिसंशयस्येत्यर्थः । अस्यैव विशेषणम् (पूर्वपूर्वतत्संशयजन्यस्येति)विशेषणज्ञानविधया पूर्वसंशयोयज्जनकस्तादृशस्येत्यर्थः । विषयत्वेपि प्रामाण्यस्य नासिद्धिरित्यग्रिमेणान्वयः । केवलस्य संशयत्वस्या वच्छेदककोटिप्रवेशविवक्षायामीदृशदोषोद्धारसम्भवेन तत्तदप्रामाण्यविषयकत्वपर्यन्तस्य तथात्वविवक्षायाः फलमाह ( तादृशाप्रामाण्येति ) ईदृशसमूहालम्बनस्य प्रामाण्यसंशयंप्रति प्रामाण्यसंशयत्वेनैव जनकता, नतुघटत्वादिप्रकारघटिताप्रामाण्यसंशयत्वेनेति तद्व्युदासः । तदप्रामाण्यसंशयजन्यविषयसंशयरूप समूहालम्बनरूपप्रामाण्यसंशयविषयतयाऽ सिद्धेर्वारणायजन्यसंशयविषयता जन्यतावच्छेदकाविषयतारूपाविवक्षिता । तल्लाभायैवचसंशय पदं । वस्तुतोधर्मितावच्छेदकादिव्यावृत्तकोटि निष्ठविलक्षणविषयता निवेशलाभाय तत् , अन्यथा घटत्वादिप्रकारताघटितप्रामाण्यस्य क्वचित्तादृशसंशयजन्यघटत्वादि संशयधर्मितावच्छेदक प्रवेशेनासिद्ध्यापत्तेः । धर्मितावच्छेदकाविषयताया अपि तद्धर्मावच्छिन्नविशेष्यकज्ञानत्वावच्छिन्न धर्मिकाप्रामाण्यसंशयजन्यतावच्छेदक गर्भनिवेशा दप्रामाण्यसंशयजन्यतावच्छेदकत्व विवक्षया तद्वारणासम्भवात् । यादृशधर्मस्य भ्रमत्वसंशयात् प्रमात्वाभावसंशयाच्च नकदाचिदपि संशयस्तद् घटितप्रामाण्यपक्षकानुमाने साधनाप्रसिद्धि माशंक्याह (यदिचेति) अर्थसंशयवारणायोपात्त

[दी] केचित्तुप्रामाण्यप्रामाण्यमात्रकोटिकसंशयकोटित्वादित्यर्थमाहुः। अत्रच हेतौ-क्वचिदपि हेतावप्रयोजकत्वं, क्वापि च सान्दिग्धासिद्धत्वमिति द्रष्टव्यम् । भट्टमिश्रौ प्रत्याह ( विवादेति) अत्र-

---

[ ग ] प्रामाण्यसंशयाजन्यपदं प्रामाण्याप्रामाण्यकोटिकार्थकं, तावताप्रामाण्यसंशयाहितइवतदनाहितोप्यर्थे कोटिकसंशयोवार्यत इति-केचिदाहुः तन्मतमुपन्यस्यति ( केचित्त्विति ) प्रामाण्यसंशयात्मकसमूहालम्बनरूपार्थसंशये कोटितयार्थे व्यभिचारवारणाय मात्र पदम् । तन्मात्रकोटिकत्वं – तदितराकोटिकत्वं । संशयमात्रस्यैव-प्रामाण्यादीतरकोटितावच्छेदकादिविषयकतया कोटिपदम् । प्रामाण्यादिघटकेर्थे व्यभिचारवारणाय चरमं कोटिपदम् । उदक्षरतात्रा स्वरसबीजम् । हेतुद्वये स्वयंदूषणमाह ( अत्रचेति ) अनयोर्हेत्वो-र्मध्यइत्यर्थः । ( हेताविति ) द्वितीयहेतावित्यर्थः ( अप्रयोजकत्वमिति ) प्रामाण्यस्य स्वतोवगाहनेपि तत्संशयमात्रस्य तत्संशयाजन्यतया तत्राप्रामाण्यसंशयजन्यसंशया विषयत्वरूपहेतुसत्वे विरोधादितिभावः ।

यद्यपि प्रथमहेतोरपि व्यवसायाप्रतिबद्धव्यभिन्नधर्मिकसंशयसाधारणरूपेण संशयनिवेशा दप्रयोजकत्वं दुर्वारमेव; तथाप्यप्रयोजकत्वमित्यस्या प्रयोजकत्वमात्रमित्यर्थकतया न विरोधः ।

अथवा यादृशव्यवसायव्यक्ते स्तृतीयक्षणे न व्यवसायभिन्ने प्रामाण्यसंशयः अपितु व्यवसाय एव; तद्व्यक्तेरेव हेतौप्रवेशात् तत्तृतीयक्षण वृत्तिसंशयविषयत्वं उभयमते व्यवसायरूप धर्मिविशेषणतया स्वाश्रयग्राह्ये तत्र स्वाश्रयग्राह्यत्वोपगमेनोपपद्यतएवेति प्रथमेनाप्रयोजकत्वं (क्वापिचेति) प्रथमहेतावित्यर्थः । व्यवसायानन्तरक्षणेजायमानः प्रमानवेति संशयोधर्मधर्मिज्ञानयोर्भेदाभेदरूपा प्रमात्वप्रमात्वकोटिक एव नतु याथात्थ्यायाथात्थ्यकोटिकः , तादृशश्च व्यवसायनाशेस-

[दी] विप्रतिपत्तौ उपवर्णितेन तदप्रामाण्याविषयकत्वेन ग्राहकं विशेषणीयं । अतो नासिद्धसाधनं । ग्राहकं - ग्रहः । हेतौ-तदा च यावत्त्वाविशेषितस्तादृशोग्रहः परामर्शनीयः । -

---

[ग] त्येव, व्यवसायात्मक तज्ज्ञानजन्य संस्कारजन्यादुद्बोधका कल्पनेन-घटत्वादिना पुरोवर्त्यंविषयकात् पुरोवर्तिविशेष्यक घटत्वादिप्रकारे कज्ञानत्वेन व्यवसायरूपधर्मिविषयक ज्ञानादेव चतुर्थक्षणादौ जाय तइति प्राभाकरैरुपगमात् , याथार्थ्यरूपप्रामाण्ये स्वाश्रयोत्तरतृतीय क्षणवृत्ति संशयविषयत्वस्य उभयवाद्यसिद्धतया सन्दिग्धासिद्धत्वमि ति भावः ( विप्रतिपत्ता वुपवर्णितेनेति ) प्रामाण्याग्राहकत्वेन ज्ञानग्राह कत्वेनच यद्भट्टमतसिद्धं तदन्यत्वरूपेणेत्यर्थः । ग्राहकं - स्वाश्रयग्रा हकम् ( न सिद्धसाधनमिति ) अप्रामाण्यभ्रमरूपानुव्यवसायेन ज्ञानपदजन्य शाब्दबोधादिरूपेणच प्रामाण्याश्रयग्राहकेण ग्रहणाद्या-वत्स्वाश्रया ग्राह्यत्वसत्वेन प्रसक्तं सिद्धसाधनं नेत्यर्थः। ग्राहक ग्राह्यत्वस्य ग्राहकसामग्रीजन्यग्रहविषयत्वरूपस्य निवेशे यावत्सामग्री जन्यग्रहाप्रसिद्ध्या यावत्त्वस्य फलतो ग्राह्यत्वघटक ग्रहविशेषणत्वो पगमे तत्सामग्रीजन्यत्वेन तदुपादानं शिरोवेष्टनेन नासिकास्पर्शतु-ल्यतया ऽनुचितमिति ग्राहकपदस्य ग्रहपरतामाह - ( ग्राहकमिति ) एवंच ग्राह्यत्वमपि विषयत्वमेव, नतु जन्यग्रहविषयत्वं, पूर्वानुमाने-स्वाश्रयाग्राह्यत्वस्य स्वाश्रयविषयत्वाभावरूपता कथनात् नव्याख्या तम् । यावत्त्वविशेषितस्य स्वाश्रयस्य तच्छब्देन परामर्शे कस्यापि-क्षणस्य यावत्स्वाश्रयग्रहोत्तर तृतीयत्वाभावेन यावतो ग्रहान्प्र-त्येकं निवेश्य तदुत्तरतृतीयक्षणानां निवेशे तावत्क्षणवृत्तिसंशयाप्रसि द्ध्या साधनाप्रसिद्धिः, अतः तत्पदपरामर्शनीयग्रहे यावत्त्वविशेषणं जहाति ( तदाचेति ) तादृशग्रहः - प्रामाण्याविषयकत्वेन ज्ञानविष-यकत्वेन भट्टमत सिद्धभिन्नः - स्वाश्रयग्रहः । घटत्वप्रकारकत्वाद्यनव गाहि स्वाश्रयविषयकशाब्दबोधादि तृतीयक्षणे स्वाश्रये संदिह्यमानघटत्व प्रकारकत्वादौ यावदनुव्यवसायादिग्राह्ये व्यभिचारवारणाय भिन्ना-

[म]यद्वा अनभ्यासदशापन्नैतज्ज्ञानप्रामाण्यं एतत्प्रामाण्यसंशयपूर्वं कालीनैतज्ज्ञाननिश्चयाविषयः, एतज्ज्ञाननिश्चयानन्तरं संदिह्यमान त्वात अप्रामाण्यवत् ।

---

[दी] सन्दिह्यमानत्वादित्यस्य तत्रेत्यादिः । शेषं पूर्ववत । ( यद्वेत्यादि) यस्य निश्चयस्योत्तरतृतीयक्षणे व्यवसाये प्रामाण्यसंशय स्स निश्चयपदेन विवक्षितः । तन्निश्चयव्यक्तिपरिच्चियायसाध्येकाली नान्तम् ।

---

[ग]न्तम् । अनुव्यवसायाद्युत्तरतृतीयक्षणे व्यवसायभिन्ने सन्दिह्यमानज्ञान स्वघटत्वप्रकारकत्वादौ व्यभिचारवारणाय पूरयति ( सन्दिह्यमानत्वादित्यस्येति ) तत्रेत्यस्य स्वाश्रयइत्यर्थः । एवं साध्येपि तदंशे ग्राह्यत्व पर्यन्तं निवेशनीयम्, तेन व्यवसायांशे तादृशक्षणे सन्दिह्यमानघट स्वगुणत्वादिरूप प्रकारे न व्यभिचारः । व्यवसायांशे यावदनुव्यवसा यग्राह्यतयोभयवादिसिद्ध घटत्वप्रकारकत्वादा वनुव्यवसाय विषयकात्तदंशे प्रामाण्यसंशयादपि नानुव्यवसायतृतीयक्षणे व्यवसायांशे-संशयइति न तत्र व्यभिचारः । तादृशसंशयस्वीकारेच्च स्वघटिताप्रा माण्यग्रहानन्तर क्षणाभिन्नत्वेन क्षणो विशेषणीयः । ( शेषमिति ) सति सप्तम्यन्तं तदुत्तरतृतीयत्वप्रतियोगि स्वाश्रयनिश्चय सामानाधिक रण्यार्थकं, यत्प्रकारकव्यवसाय विषयकानुव्यवसाय तृतीयक्षणे क्वचि दपि न प्रामाण्यसंशयस्तस्य पक्षबहिर्भावश्चेत्यर्थः । एतज्ज्ञानविषयप्रा माण्यानुमितिरूपनिश्चयस्यापि स्वनाशोत्तरप्रामामाण्यसंशय पूर्वका लीनतया अव्यवहितपूर्वकालएव निवेशनीयः, अव्यवधानंचानुगतन्तु र्वचमिति तत्संशयव्यक्तित्वेन संशयो व्यवधानप्रतियोगितया निवे-श्यः, तथाचानुव्यवसायविशेषादि रूपनिश्चयव्यक्तेरेव विशिष्योपा दानं युक्तमित्याशयेनाह ( यस्य निश्चयस्येति ) नन्वेवं कालीना-न्तवैयर्थ्यमित्यतआह ( तन्निश्चयव्यक्तीति ) निश्चयसंशययोर्विशेष्यतया

[ दी ] तथाच एतज्ज्ञानप्रामाण्यं नात्रज्ञाने तन्निश्चयव्यक्तिग्राह्यं ; तदुत्तरतृतीयक्षणेत्र ज्ञानेसन्दिह्यमानत्वात् । प्रकारज्ञानत्वाद्योर्व्यवसाय तद्विषययोस्तथासन्दिह्यमानयोर्व्यभिचारवारणाय साध्यहेत्वोरत्रेति । अयंव्यवसायस्तत्र प्रामाण्यग्राहकोनवेति

---

[ग] एतज्ज्ञानानिवेशे व्यभिचारस्य दर्शनीयतया तदन्तर्भावेन समुदिताथर्माह ( तथाचेति ) ( प्रकारज्ञानत्वाद्योरिति )प्रकारे - घटत्वादौ । अनुव्यवसाय तृतीयक्षणे व्यवसायरूपधर्मिणि सन्दिह्यमाने व्यभिचारवारणाय साध्ये " अत्रेति ", तथाच घटत्वादेः प्रकारिताविशेषणत्वेन अनुव्यवसायग्राह्यत्वेपि ज्ञानांशे अग्राह्यतया साध्यसत्वान्न व्यभिचारः । ज्ञानत्वादौच तथाविधक्षणे व्यवसायविषयघटांशे सन्दिह्यमाने–तज्ज्ञानांशे तन्निश्चयग्राह्यतया व्यभिचारवारणाय हेतौ " अत्रेति " तथाच ज्ञानांशे सन्दिह्यमानतया तत्र हेत्वसत्वेन न व्यभिचारइत्यर्थः ।

नच यद्व्यक्त्युत्तरतृतीयक्षणे व्यवसायादौ न घटत्वादिसंशयस्तादृशनिश्चय व्यक्त्युपादानेनैव सामंजस्ये किं विशेष्यविधयै तज्ज्ञानविशेषणेनेति वाच्यम् । ज्ञानव्यक्तिभेदेन प्रामाण्यभेदपक्षे एतदनु मानोपगमात्, यज्ज्ञानीयानुव्यवसायोत्तर तृतीयक्षणे ज्ञानादौ घटत्वादे स्संशय स्तत्प्रामाण्ये परतस्त्व साधनार्थे तत्प्रयास सार्थक्यात् । गुरुणा सह विचारे उपपाद्यमानामूलोपदर्शित प्रामाण्यपक्षक विप्रतिपत्तिर्नसाधीयसी, तत्र व्यवसायांशे यावत्स्वाश्रयग्राह्यत्वस्य न्यायमते ऽप्रसिद्ध्यासाध्यत्वोपगमासंभवत्, प्रवृत्त्युपयोगिप्रामाण्यग्रहमधिकृत्यैवस्वतः परतोवासंभवतीत्याक्षेपाद्विशेष्यांशमनन्तर्भाव्ययावत्स्वाश्रयग्राह्यत्व साधनस्यानुपयुक्ततया तस्यापि साध्यत्वायोगात् । एतेनानुमानमपि प्रामाण्यपक्षकंव्याख्यातं, अतः स्वयं गुरुमतेव्यवसायपक्षकं विप्रतिपत्त्यादिकं दर्शयति ( अयमित्यादिना ) घटत्वप्रकारकज्ञानत्वस्य पक्षतावच्छेदकत्वे विधौ स्वप्रामाण्यावगाहिसमूहालम्बनशाब्दादि व्यवसायग्राह्यतयासिद्धसाधनं, तादृशपक्षतावच्छेदकावच्छेदेन साध्यसाधनेच प्रामाण्यग्रहप्रतिबन्धकसमवहितव्यवसायस्य प्रामाण्याग्राहकतयाबाधः । एवं

[दी] विप्रतिपत्तिः । अयं व्यवसायस्तत्प्रामाण्यग्राहकः, तत्प्रामाण्यग्राहकसामग्रीजन्यत्वात्, इतिस्थापनायामयं हेतुस्सन्दिग्धासिद्ध इति जल्पस्य पूर्वरूपं । उत्तरं त्वयं व्यवसायो नतत्प्रामाण्यग्राहकः, तत्प्रामाण्यसंदेहाविरोधित्वात् ;

---

[ म ] घटत्वादिप्रकारकज्ञानत्वरूपप्रामाण्येनरूपेणविशेष्यन्निवेश्य तत्र प्रामाण्यग्राहकत्वं यदि साध्यते तदास्वाभिन्नतादृशज्ञानांशेतद्ग्राहकत्वेनार्थान्तरं, स्वांशेतदवगाहनमेवच व्यवसायस्य प्रवर्तकतायामुपयुज्यते, स्वांशेतद्ग्राहकत्वंचावच्छेदकावच्छेदेन नसाधयितुंशक्यते, स्वत्वघटिततया साध्यस्याननुगमात् ; एकस्य साध्यस्य पक्षतावच्छेदकाक्रान्तेसर्वत्रासत्वात्तस्तत्तद्व्यक्तित्वावच्छिन्ने तत्तद्व्यक्त्यंशे प्रामाण्यग्राहकत्वमेवसाध्यमित्येतल्लाभायपक्षे " अयमिति " साध्येच " तत्रेति "। तत्पदं पक्षीकृतव्यवसायपरम् । तदन्यव्यक्त्यंशे प्रामाण्यग्राहक सामग्रीजन्यत्वस्यतद्व्यक्तौ प्रामाण्यग्राहकत्वरूप साध्यव्यभिचारितया हेतौ " तत्रेति "। यादृशयुक्तिबलाद्व्यवसायग्राहकत्वं तादृशयुक्तितएव स्ववृत्तिप्रामाण्यविशिष्टतद्ग्राहकत्वं साधनीयम् , अनुव्यवसायानभ्युपगमे व्यवसायस्यैव पुरोवर्त्तिविशेष्यकत्वावच्छिन्न घटत्वादिप्रकारकत्व विशिष्टेस्वस्मिन्प्रमाणत्वात , पुरोवर्तिनिघटत्वादि मत्त्वावगाहितायाश्च तत्रोभयसिद्धत्वात् , अतोनहेत्वसिद्धिरित्याशयः । उक्तहेतौ साध्यव्याप्यताया नैय्यायिकेनाप्यभ्युपगमात् कोनदोषः, यत्प्रत्याशयासौ परतस्त्वंसाधयिष्यति, नहिवाद्युपन्यस्तेहेतौ निर्दोषे प्रतिहेतोस्तथात्वसंभवः, विरुद्धार्थग्राहकत्वा दित्याकांक्षायामाह( अयमिति ) इति- उक्तहेतुप्रयोगान्तं। अतोहेतौ उक्तदोषाभिधानस्य वादिनोऽकर्तव्यत्वेऽपिनविरोधः । पूर्वरूपं – पूर्वभागः ( उत्तरन्त्विति ) रूपमित्यनुपज्यते । साध्येग्राहकपदं यदितद्विषयकनिश्चयपरं तदभिप्रायेण प्रथमोहेतुः, अन्यथा प्रामाण्यसंशयाविरोधिनि प्रामाण्यसंशये व्यभिचारात । प्रामाण्यसंशयाविरोधित्वं तत्सामान्याविरोधित्वरूपं वाच्यम , अन्यथा अर्थसंशयरूपसमूहालम्बन प्रामाण्यसंशयविरोधितायां व्यवसायउभयसिद्धतया·

[दी] निश्चयत्वेसति तत्र प्रामाण्यसन्देहाविरोधित्वाद्वा;इत्यादि । अत्रापि सन्दिग्धासिद्धत्वं द्रष्टव्यम् । अयमनुव्यवसायो व्यवसाये प्रामाण्य ग्राहको नवेति विप्रतिपत्तिः ।

---

[ग] असिद्ध्यापत्तेः । तथाच तत्रेति विशिष्या नुपादाने अस्मदादिज्ञाने प्रत्येकं कुत्रापि नानाधर्मिकसंशय प्रतिबन्धकत्वा प्रसिद्धावपि परमेश्वरज्ञानादौ तत्सिद्ध्यतु तदभावस्तु प्रामाण्यानुमित्यादौ व्यभिचारीति तदुपादानं । ग्राहकपदस्य संशयसाधारण तद्विषयकत्वमात्रार्थकत्वमेवयुक्तम् , अप्रामाण्याविषयकत्वेन उभयसिद्धस्य व्यवसायस्य प्रामाण्यविषयकत्वसाधनेनैव प्रवर्त्तकता निर्वाहादिति तन्मात्रसाध्याभिप्रायेण हेतौनिश्चयत्वं निवेशयन् हेत्वन्तरमाह (निश्चयत्वइति) अस्यापि हेतोर्निर्दोषत्वे गुरुमतमसम्भवदुक्तिकमेवेति विचारानवकाश इत्याशयेनाह ( अत्रापीति ) सन्दिह्यमानत्वञ्च पूर्वरीत्याबोध्यम् । मूलानुसारिणि प्रकृतेहेतौ सन्दिह्यमानत्वस्य दुष्परिहरत्वेपि जन्यत्वेसति तत्र प्रामाण्यग्राहकसामग्र्यजन्यत्वेन तत्र प्रामाण्याग्राहकत्वं साधनीयं, व्यवसायादिसामग्र्याः प्रामाण्यादिनिष्ठसन्निकर्षविशेषनिरपेक्षायाः प्रामाण्यादिग्राहकत्वोपगमे इच्छादिवृत्तिप्रकारित्वादि प्रत्यक्षानुरोधेन अवश्यकल्पनीयसन्निकर्षविशेषहेतुतायाः व्यभिचारेणासंभवः, सन्निकर्षंविनावस्त्वंतरग्रहापात्तिश्चेत्यादि दूषणेन व्यवसायसामग्र्याः प्रामाण्यग्राहकत्वंनिराकृत्य प्रामाण्यग्राहकसामग्र्यजन्यत्वरूपहेतुः पक्षेसाधनीयइत्यवधेयं । मिश्रमतेपिप्रामाण्यपक्षकविप्रतिपत्त्यादिकमसत् , न्यायमतेपि प्रामाण्येकेवलघटत्वप्रकारकत्वत्वादिना यावदनुव्यवसायग्राह्यतायास्सत्वात् , विशिष्टविधिकोटिसाधने सिद्धसाधनानवकाशेपि विशेष्यवृत्तेः विशिष्टानुयोगिकाभावानभ्युपगमेन बाधस्यदुर्वारत्वात ; कथञ्चित् वारणसंभवे प्रयासबाहुल्यात् , तन्मते प्रामाण्यग्राहकपक्षकविप्रतिपत्त्यादिक माह ( अयमनुव्यवसायइति ) विशिष्य तद्व्यक्तित्वेन पक्षनिवेशप्रयोजन मुक्त दिशावसेयं(व्यवसायइति)

[म] न च स्वपदस्य प्रामाण्यमात्रपरत्वात्तदाश्रयाग्राह्यत्वेन बाधः; स्वपदस्य सम्बन्धिपरत्वेन समभिव्याहृतपरत्वात् । अन्यथा-स्वस्य परत्वात्परस्य च स्वत्वात् तदेतत्त्वस्य तदेतदन्यत्वस्य च स्व परसाधारणत्वात् स्वतः परतोवेति संशयो न स्यात् । प्रामाण्यस्य स्वग्राह्यत्वे बाधात्परिशेषेणान्यथाग्राह्यत्वं परतो ग्राह्यत्वमिति कश्चित् । प्रथमं च प्रामाण्यज्ञानं व्यतिरेकिणा । ननु प्रामाण्यप्रसिद्धिं विना व्याप्तयग्रहात् कथमनुमानं, अथव्याघातदण्डभयेन प्रमा-तद्विषयसिद्धौ तद्दृष्टान्तेन ज्ञेयत्वादिना वह्नेः प्रमाविषयत्वमनुमेयं, ततश्च सामान्यतस्तत्सिद्धौ न साध्याप्रसिद्धिः ।

---

[दी] शेषं पूर्ववत् । एवं भट्टमतेपि पूर्वोक्तदिशा नेयम् । परन्तु तत्र स्थापनायां पक्षतावच्छेदकावच्छेदेन साध्यसिद्धिरुद्देश्या, प्रतिस्थापनायां तत्सामानाधिकरण्येनेति विशेषः । (अथेत्यादि)

---

[ग] स्वविषयज्ञानांशइत्यर्थः । शेषं- स्थापनादिकं ( एवंभट्टमतइति )( पूर्वोक्तदिशेति ) प्रामाण्यपक्षकोक्त विप्रतिपत्त्युपदर्शित प्रामाण्याग्राहकत्वेन भट्टमतसिद्धं यत्तदन्यज्ञानत्वेन ज्ञाततालिंगकानुमितिं पक्षीकुर्यदित्यर्थः । ज्ञाततालिंगकानुमिते र्नैय्यायिकासिद्धतया विशिष्य पक्षीकरणासंभवात् । नतूक्तरूपस्य पक्षतावच्छेदकत्वे नैय्यायिकादिसिद्धानुमित्यादेः प्रामाण्यग्राहकतयांशतस्सिद्धसाधनमित्यतआह ( परन्त्विति ) तत्र-भट्टमते ( पक्षतावच्छेदकावच्छेदेनेति ) तत्रच नांशतस्सिद्धसाधनन्दोषइतिभावः। तादृशानुमित्यादेः प्रामाण्यग्राहकतया तदभावसाधनेंशतोबाधोपि नदोषइत्याह ( प्रतिस्थापनायामिति ) ( इतिविशेषइति ) गुरुमिश्रमते एकैकव्यक्तेरेवपक्षतया स्थापनायामपि सामानाधिकरण्यमात्रेणैव साध्यसिद्धे रुद्देश्यादितिभावः ।

"व्याघातदण्डभयेने" ति - मूलं तत्र व्याघातः अनुपपत्तिः, सैव

[दी] प्रमाया निषेधे क्रियमाणे तत्सिद्ध्यसिद्धिभ्यां व्याघातः।सिद्धायां प्रमायां सा सविषया ज्ञानत्वात् भ्रमवत् इति सविषयत्वे सिद्धे विषयस्यापि तद्विषयत्वमर्थसिद्धमिति

---

[ग] दण्डः, तद्बलाद्व्यवस्थापनीयेऽर्थे विप्रतिपद्यमान वादिनिराकरणसाधनत्वात् तद्वयेनतद्दर्शनेत्यर्थः । तत्रानुपपद्यमान मनुपपत्तिप्रयोजकंचपूरयति ( प्रमायाइति ) ( निषेधइति ) प्रमानास्तीतिवाक्यप्रयोगरूपइतिशेषः । क्रियमाणे, माध्यमिकेनेत्यादिः । व्याघातइत्यग्रिमेणान्वयः । सप्तमीचात्रषष्ठ्यर्थे । तत्सिद्ध्यसिद्धिभ्यां- प्रमाया स्सत्वासत्वाभ्यां । प्रमायास्सत्वे तदसत्व प्रतिपादकवाक्यस्य प्रमाणरूपस्य व्याघातः, तदसत्वेव्यवहर्तव्यशरीरनिविष्टाया स्तस्याः ज्ञानासंभवेन तादृशवाक्यप्रयोगस्यैव व्याघातः । -

नच - प्रमासत्वे निषेधानुपपत्ति नंतांसाधयति, किंतु तदसत्वेयानुपपत्तिः सैवान्यथानुपपत्तिरूपा तत्साधिकेतिवाच्यम् ; प्रमाणरूपविरोधिवाक्यस्य वस्तुसिद्धिविरोधितया प्रमानास्तीतिवाक्यस्य ;प्रामाण्यानुपपत्तिप्रयोजकं प्रमायास्सत्वं प्रमासिद्धावुपयुज्यतइति सिद्ध्यधीनव्याघातोपदर्शनाविरोधः ।

मिश्रास्तु प्रामाण्यनिषेधरूपस्य परकीयव्याघातस्येत्यग्रिम मूलस्वरसात् प्रमानास्तीति परकीयनिषेधवाक्यमेव व्याघातत्वेन तदनुपपत्तिमेव भयत्वेनव्याचक्षते, एतन्मतेच " प्रामाण्यनिषेधरूपस्ये "ति मूलस्य प्रमानिषेधप्रतियोगिकानुपपत्त्यात्मकस्येत्यर्थकतया विरोधः, उक्तानुपपत्त्या विशेष्यावृत्त्यप्रकारकत्वेन प्रमासद्भावेपि नतद्विषयसिद्धिरिति" "तद्विषयसिद्धा "विति मूलमसंगतमित्याशंकान्निराकरोति ( सिद्धायामिति)(विषयस्यापि तद्विषयत्वमिति)एतेन प्रमाया स्सविषयकत्वसिद्धेः विषयसिद्धिरूपत्वेपि प्रमाविषयत्वेन विषयासिद्ध्या नवह्नौ तत्साधनसम्भवइत्याशंकानिराकृता । उक्तवह्निपक्षकानुमानस्या न्वयित्वमेव, सामान्यतः सिद्धप्रमाविषयरूपान्वयदृष्टान्तकथनादिति तत्रविशि-

[ म ] विशिष्यानिर्णयात्रान्वयित्वासाधारण्ये । न च प्रामाण्यं नानुगतं किन्तु प्रतिज्ञानं विषय प्रकारभेदाद्भिन्नं, तथा च वह्निज्ञानस्य वह्न्यवृत्तिप्रकारानवच्छिन्नत्वादिकं साध्यं तच्चाप्रसिद्धमिति वाच्यम् ।

वह्निज्ञानस्य विशेष्यावृत्तिप्रकारानवच्छिन्नत्वादिकं साध्यमानं पक्षधर्मताबलेन वह्निविषयकप्रमात्वे पर्य्यवस्यतीति चेत ? तर्हि

---

[दी] वह्नेः ज्ञेयत्वे सिद्धे अर्थाज्ज्ञानस्यापि वह्निविषयत्वं सिद्धम् । तथाच लाघवाद्व्यतिरेकिणा तस्यैव प्रमात्वमनुमातुं युक्तमित्याशयेन तत्र दोषं निराकरोति(विशिष्येति )

---

[ग] ष्येत्यादिना अन्वयित्वनिराकरणम् , ज्ञेयत्वहेतौ स्वपक्षसत्वेन विपक्षाप्रसिद्ध्या तद्व्यावृत्तत्वासत्वेन चासाधारण्याप्रसक्त्या तन्निराकरणंचासंगतम् । नचोक्तान्वयिप्रवृत्युत्तरकालीन व्यतिरेक्यनुमान दोषनिराकरणपरतया तत्संगतिः, उक्तानुमानएव विधेयतावच्छेदकतया प्रमात्वभानाद्व्यतिरेकि वैयर्थ्यात्, व्याघाताधीन साध्यसिद्ध्या प्रथमतएव व्यतिरेकिसम्भवेनोक्तान्वयिन एव वा वैयर्थ्याशंकामप नेतुं व्यतिरेकिण्येव निर्भराभिप्रायेण तत्संगमयति ( वह्नेरित्यादिना ) ( ज्ञेयत्वे सिद्धइति ) वह्निपक्षकज्ञेयत्वहेतुकोक्तानुमानानुरोधेन वह्नौ-ज्ञेयत्वसिद्धिस्वीकारइत्यर्थः । ( तथाचेति ) ईदृशरीत्या वह्निविषयक ज्ञानत्वरूप पक्षतावच्छेदकप्रकारेण ज्ञानरूपपक्षासिद्धौ चेत्यर्थः । लाघवात् , अन्तरानुमानान्तराकल्पन इत्यादिः । तस्यैव - वह्निविषयकज्ञानस्यैव । तत्र-ज्ञानपक्षकव्यतिरेक्यनुमाने । "विशिष्यानिर्णादि"ति मूलस्य - प्रमात्वेन सामान्यतः प्रमासिद्धावपि कुत्रापि ज्ञाने इदं ज्ञानं प्रमेति प्रामाण्यनिश्चयासत्वात् नान्वयित्वं, हेतुमति विशिष्यसाध्यनिश्चयाधीनहेतुधर्मिक साध्यसामानाधिकरण्या निश्चयात , हेतुमति साध्यसन्देहसंभवेन हेतौ तत्सामानाधिकरण्य संशयस्यैवोत्पादात , नचासा

[म] प्रथमं कस्यापि स्वार्थं प्रामाण्यानुमानं न स्यात्, प्रामाण्यनिषेधरूपस्य परकीयव्याघातस्य तदा अनुपस्थितेः स्वयं प्रामाण्यनिषेधस्य तद्धीपूर्व्वकत्वात प्रामाण्यमपरिज्ञाय प्रामाण्यनिषेधेन परकीयव्याघातस्याप्यज्ञानाच्च । प्रवृत्तिसंवाद- विसंवादाभ्याम् तद्धेतुज्ञानवैचित्र्यानुमानेपि यथोक्तरूपप्रामाण्यस्य विशेष्याप्रतीतेरिति । उच्यते - प्राग्भवीयसंस्काराद्विशेष्यावृत्त्यप्रकारकत्वं तद्वति तत्प्रकारकज्ञानत्वं वा प्रामाण्यमात्रं स्मृतं वह्निज्ञानादौ साध्यमानं सर्व्वनाममहिम्ना पक्षधर्मताबलाद्वह्निज्ञानस्य विशेष्यावृत्त्यप्रकारकत्वादौ पर्य्यवस्यति । स्वतः प्रामाण्यनिषेधे प्राथमिकप्रामाण्यज्ञानस्यान्यथोपपादयितुमशक्यत्वादिति संप्रदायविदः । वयन्तु ब्रूमः - प्रथममप्रामाण्याभाव एव प्रामाण्यं व्यतिरेकिणा साध्यम्, तत एव निष्कम्पप्रवृत्तेरुपपत्तेः, तदेव वा सिध्यत पक्षधर्म्मताबलेन तद्वति तत्प्रकारकत्वादिकमादाय सिध्यति, तदनन्तरं अर्थाद्वा सिध्यतीति वक्ष्यते । तथाहि-अयं वह्नित्वेना-

---

[दी] ( अयमित्यादि ) अयं - धर्मितावच्छेदकविशिष्टे धर्मि

---

[ग] धारण्यं, हेत्वभावेपि उक्तरीत्या साध्यसामानाधिकरण्या निश्चयात इत्यर्थः । इदंत्वरूपधर्मितावच्छेदक विशिष्टविशेष्यकत्वानवच्छिन्ने वह्नित्वप्रकारकानुभवे अवह्निवृत्तिप्रकारकत्वाभाव रूपसाध्यसाधने न भ्रमत्वशंकाविरोधिनी भ्रमव्यावृत्तधर्मासिद्धेः । वह्नित्वमात्रेण गुंजादिविषयकस्य भ्रमरूपत्वेपि उक्तपक्षतावच्छेदक सहित तादृशसाध्यस्य तत्र निर्वाहात् । एवं ज्ञाननिष्ठस्येदंत्वस्य पक्षतावच्छेदकघटकत्वे एतदनुमानादुदीच्यस्य अगृहीताप्रामाण्याभावक ज्ञानसमानविषयक ज्ञानस्यप्रवर्तकत्वा निर्वाहः, पूर्वज्ञाननिष्ठेदन्त्वघटितस्या प्रामाण्याभावावच्छेदकधर्मस्य तत्राग्रहादित्यालोच्य पक्षस्थेदंपदं धर्मितावच्छेदकेदन्त्वविशिष्टविशेष्यकार्थकतया व्याचष्ट ( धर्मितावच्छेदक इति ) धर्मिणीति - सप्त-

[म]नुभवो वह्नित्वाभाववति वह्नित्वप्रकारको न, अवह्निवृत्तिप्रकार को न, विशेष्यावृत्तिप्रकारको न, वह्नित्वप्रकारकत्वे सति

---

[दी]णि वह्नित्वप्रकारको नुभवइत्यर्थः । (अ वह्निवृत्तीति)यत्र वह्नित्वं

---

[ग]म्यर्थो विशेष्यत्वमनुभव इत्यनेनान्वयि । अनुभवपदं प्रत्यक्षपरम् । अयं वह्निरिति ज्ञानस्योपादानप्रत्यक्षविधया वह्न्यानयनप्रवृत्तिजनकत्वं नत्वन्यथा, तथाच प्रत्यक्षान्यतादृशज्ञाने प्रवर्तकत्वघटित प्रथमहेतोरसिद्धिरिति तद्वारणाय प्रत्यक्षत्वानिवेशः । अवह्निवृत्ति प्रकारकत्वाभावे साध्ये पक्षतावच्छेदकाक्रान्ते द्रव्यत्वादिमति वह्नित्वप्रकारकानुभवे बाधः, उदीच्यज्ञाने अप्रामाण्यशंकानिवर्तकावच्छेदक धर्मदर्शननिर्वाहाय अवच्छेदकावच्छेदेन साध्यसिद्ध्यपेक्षयांशतो बाधस्यापि दोषत्वमिति साध्ये मात्रपदमन्तर्भावयन् पक्षीभूतज्ञाने रूपाद्यंशे अवह्निमात्र वृत्तिरूपत्वादि प्रकारके साध्यसत्वं निर्वाहयितुं वह्नित्वेन स्वविषयधर्म्यंशे प्रवेशयति ( यत्र वह्नित्वमिति ) अत्र साध्ये वह्नित्वेन भासमानगुंजाया वह्निमात्रगुंजामात्रवृत्तीदन्त्व प्रकारके वह्निगुंजयोरिमौ वह्नीइति ज्ञानं लोहितोयं वह्निरिति ज्ञानवत् विशेषणान्तरानिवेशनेन पक्षाद्बहिर्भावनीयम् । हेतोस्तद्व्यावृत्तिश्चाग्रे स्फुटीभविष्यति नच प्रथमे वह्निरूपविशेष्यांशे अवह्निमात्रवृत्ति प्रकारकत्वाभावरूपसाध्य सत्वेन द्वितीयेच स्वरूपतो भासमानवह्नित्वादिप्रकारांशे तादृश साध्यसत्वेन न बाधादिप्रसक्तिरिति वाच्यम् ; एवं सति सर्वत्रैव साध्यसत्वेन एतत्साध्यकनिश्चयत्वरूप हेतुघटकभेदविशेषण संशयांशवैय्यर्थ्यप्रसंगात् , तत्प्रकारकत्वादेरव्याप्यवृत्तित्वे तदवच्छिन्नभेदस्यैव साध्यताया उप गन्तव्यत्वात् ; अन्यथा – साध्यस्य केवलान्वयितया प्रतियोगिव्यधिकरणं साध्याभावाप्रसिद्ध्या तद्घटित व्यतिरेकव्याप्ते रनिर्वाहेण व्यतिरेकिताया अप्यनुपपत्तेः ।

[दी] प्रकारस्तत्र अवह्निमात्रवृत्तिप्रकारको नेत्यर्थः । वह्नित्वभ्रमस्तु धर्मितावच्छेदकविशिष्टे धर्मिणि

---

[ग] यदिच – व्यतिरेकव्याप्त्या अभ्रान्तस्य संयोगादि साध्यकद्रव्यत्वादि हेतुकानुमितेः निर्वाहायसाध्यवैय्यधिकरण्यरूप विशेषणावच्छिन्न साध्याभावव्यापकताया अनुमित्यौपयिकत्वेपि तादृशविशेषणानवच्छिन्न तद्व्यापकताया अपि अनुमितिप्रयोजकत्वमुपेयते – अतिप्रसंगविरहात; अतएवच गुणत्वाद्यभावे संयोगादिव्यापकताज्ञानात् गुणत्वादिना गुणादौ संयोगाद्यभावसिद्धिरप्युपपद्यते ; हेतुवैयधिकरण्याविशेषित हेत्वभावनिष्ठसाध्याभावव्यापकताया एव परमनुमित्यनुपयोगिता ; तथासति संयोगादिरूप व्यतिरेकिहेतुना प्यभ्रान्तस्य पृथिवीत्वाद्यनुमिति प्रसंगात। एतदभिप्रायेणैव चानुमानदीधितौ संयोगाभावे साध्ये विभागाभावः केवलान्वयीत्युक्तं ग्रन्थकृतेति – तत्प्रकारकत्वादेरव्याप्यवृत्तित्वेपि साध्यवैयधिकरण्या विशेषितभ्रमत्वं प्रति हेत्वभावव्यापकताया निर्वाहकतया हेतुविशेषणसार्थक्यसम्भवेन भ्रमत्वाभावस्यैव साध्यत्वमुचितं – तावतैवाप्रामाण्याभावएव प्रामाण्यं व्यतिरेकिणा साध्यमिति यथाश्रुतग्रन्थसंगतेरित्युच्यते ; तथापि उक्तसमूहालम्बनादौ अभावरूपसाध्यसत्वेपि प्रतियोगिरूप तदभावस्यापिसत्वाद्धेत्वभावस्यच तत्रासत्वेच व्यतिरेकव्याप्तिर्दुर्घटैवेति हेत्वभावसत्वं तत्रोपपादनीयमिति भागासिद्धिवारणायोक्त समूहालम्बनादेःपक्षबहिर्भाव आवश्यकः। साध्ये यदंशे वह्नित्वं प्रकारइत्यनेन विवरणमपिरूपादौ रूपत्वादिप्रकारके पक्षे साध्याभावसत्वे हेत्वभावस्य तं प्रति व्यापकता नस्यादिति व्यतिरेकव्याप्ति निर्वाहायैवेति – निरुक्तस्य प्रामाण्यस्य पक्षतावच्छेदकत्वावच्छिन्न विशेष्यताकत्व सहितस्य भ्रमव्यावृत्तत्वमुपपादयति – ( वह्नित्वभ्रमस्त्विति ) (धर्मितावच्छेदकेति ) गुञ्जादिनिष्ठेद्न्त्वादिरूपेत्यादिः। एवमग्रेपि। "धर्मि

[दी] तत्रावह्निमात्रवृत्ति धर्मिता वच्छेदकत्वप्रकारः । अत्र–
मात्रार्थघटका वह्निवृत्तित्वांशस्या नातिप्रयोजनकत्वा

---

णीति" सप्तम्यर्थौ विशेष्यत्वं भ्रमइत्यनेनान्वयि (तत्रेति) वह्नित्वेन भास मानै तादृशधर्मिणीत्यर्थः (अवह्निमात्रवृत्तीति) गुञ्जादौ वह्नित्वादिभ्रमजनकदोषस्य तद्वत्तादन्त्वग्रहाप्रतिबन्धकत्वादितिभावः । अवह्निमात्रवृत्तित्वं वह्न्यवृत्तित्वे सत्य वह्निवृत्तित्वं , तत्र अवह्निवृत्तित्वांशस्य निवेशनमफलत्वं , तत्परित्यागे चषष्ठसाध्याविशेष इत्यतआह (अत्रेति) (मात्रार्थेति) मात्रपदघटित अवह्निमात्रवृत्तिपदार्थे स्यर्थः । एतेन मात्रपदेन प्रकारेवाह्निवृत्तित्व व्यवच्छेदमात्रबोधनादवह्निवृत्तित्वस्य तदघटकत्वेपिनासंगतिः (अनतिप्रयोजनकत्वादिति) अत्रावृत्तिप्रकारकज्ञान साधारणस्य वह्न्यवृत्तिवृत्तिमत्प्रकारकत्वाभावस्य तज्ज्ञानव्यावृत्तवह्न्यवृत्तिप्रकारकत्वाभावातिरिक्ततयावृत्त्यंशस्यानातिप्रयोजनकत्वं, अवह्न्यंशस्यतु वैयर्थ्यमेव, तच्चसाध्यांशीयमपि गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वे अभावाप्रसिद्धिसम्पादकमित्यवधेयम् ।

यथाश्रुत चतुर्थसाध्यस्य वह्न्यविशेष्यकत्व घटितस्य वह्नित्वेन वह्निगुञ्जाविषयकभ्रम साधारण्यं दुर्वारं ; नच तथा सत्यपि नक्षतिः वह्नित्ववति वह्नित्वप्रकारकत्वरूप प्रामाण्य स्यापि तत्रांशतस्सत्वादिति वाच्यम् , भ्रमसाधारण धर्मसिद्धे रप्रामाण्यशंकांप्रति व्यावर्तकधर्मदर्शनविधया विरोधित्वासम्भवेन प्रवृत्तावनुपयोगात् । तद्वति तत्प्रकारकत्वस्य तद्धर्म्यंशभेदेन सत्वात्, तज्ज्ञानसत्वेपि भ्रमत्वशंका यद्यपि नापैति , तथापि तत्तद्विशेष्यांशे तादृशप्रमात्वस्य तदंशे भ्रमत्वविरोधितया तादृशप्रमात्वग्रहस्य भ्रमत्वशंका निवर्तनद्वारातद्विषयकप्रवृत्तावुपयोगएव । वह्न्यविशेष्यकत्वञ्च न वह्निविशेष्यकसमूहालम्बनज्ञाने गुञ्जादिरूप विषयावच्छेदेनापि वर्तते, वह्निविशेष्यकत्वस्य विशेष्यतया वह्नित्वसामाधिकरण्य-

[म] वह्न्यविशेष्यको न, वह्नित्वव्यधिकरणप्रकारावच्छिन्नो न, वह्न्यवृत्तिप्रकारकोनवा;

---

[ दी ] त्षष्ठं वक्ष्यति ( वह्नित्वेति ) वह्नित्वप्रकाराव च्छिन्ना वह्निवृत्तिविषयताकोनेत्यर्थः । तेन वह्नित्वप्रकारका वह्नि-वह्निज्ञाननिरासः । ( न वह्नित्वेति ) अवच्छिन्नत्वं सामानाधिकर ण्यमात्रं ।

---

[ग] रूपस्यापि सामानाधिकरण्यस्याव्याप्यवृत्तितानभ्युपगमेन व्याप्यवृत्तित्वात, अतस्समूहालम्बनभ्रमेव्याप्यवृत्ति वह्न्यविशेष्यकत्वाभावो नैकमंशमादायापि भ्रमत्वविरोधीति नतज्ज्ञानंस्वविषयेव्यवसायेकुत्राप्यंशे भ्रमत्वशंकान्निवर्त्तयितुमीष्टे; वह्नित्वादिमति वह्नित्वप्रकारकत्वश्चाव्याप्यवृत्ति, वह्निघटावित्यादि ज्ञानं वह्न्यंशेवह्नित्वप्रकारकं नघटाद्यंशे इत्यबाधित व्यवहारात ; अतस्तद्वतितत्प्रकारकत्वं तदभाववति तत्प्रकारक समूहालम्बन बुद्धावंशभेदेनैव वर्त्तत इति तस्य तद्व्यावर्त्तकत्वामित्यालोच्य नञ्व्यत्यासेन चतुर्थसाध्यंव्याचष्टे ( वह्नित्वेतीति) वह्निघटावित्यादिप्रमासंग्रहाय तज्ज्ञानविशेषण वह्नित्वप्रकारकत्वमुपेक्ष्य वह्नित्वप्रकारावाच्छिन्नत्वं विषयताविशेषणं दत्तं, तच्चवह्नित्वनिष्ठप्रकारतानिरूपकत्वं ।

पञ्चमसाध्ये वह्नित्वव्यधिकरणधर्मावच्छिन्नत्वं तादृशधर्मप्रकारकत्वरूपं तत्प्रकारकविषयतारूपंवा यदि विवक्ष्यते तदा वह्निघटावित्यादिसमूहालम्बन प्रमाया असंग्रहः, यदिच तादृशधर्मप्रकारक वह्नित्वप्रकारकविषयताकत्वं तत्तदा यत्र वह्नित्वं प्रकारस्तत्रवह्न्यवृत्ति-प्रकारकत्वरूप षष्ठसाध्यीय निरुक्तार्थाभेदः, वैयधिकरण्यस्य तदनधिकरणवृत्तित्वरूपत्वेवह्निर्द्रव्यमिति प्रमाया असंग्रहेण तदधिकरणावृत्तित्वरूप वैय्यधिकरण्यस्यैव प्रवेश्यत्वात् , अतोन्यथा तद्व्याख्यातुमुपक्रमते (नवह्नित्वेतीति) (सामानाधिकरण्यमात्रमिति ) यावत्तदधिकरणवृत्तित्व-

[ म ] दाहसमर्थविषयकप्रयत्नजनकत्वेसति वह्नित्वप्रकारक

[ दी ] तथाच वह्नित्ववृत्तिधर्मसमानाधिकरण वह्नित्वप्रकारक विषयताको नेत्यर्थः । ( दाहसमर्थेति ) तादृशप्रयत्नोपधानमसार्व त्रिकं दुर्ज्ञेयञ्च अगृहीतयत्नज्ञानकार्यकारणभावैः, एवं स्वरूप योग्यत्वमपि तत्वेन, गुरुतरं चेत्यतः तदुपेक्ष्य सुज्ञेयं लघुतरं

[ग] रूपव्यापकता शालिनि तदवच्छिन्नेतिव्यवहारात् प्रकृतेच याव त्वांशान्तर्भाव वैयर्थ्या त्तदंशव्यवच्छेदार्थक म्मात्रपदम् , अवच्छिन्नपद- मवाच्छिन्न वह्नित्वप्रकारकाविषयता कपरमित्याशयेन : समुदितार्थमाह (तथाचेति)प्रथमहेतावनुशयवीजन्दर्शयति (तादृशप्रयत्नेति) दाहसमर्थगो चरप्रयत्नेत्यर्थः । उपधानं-उपधायकत्वं । असार्वत्रिकं - पुरोवृत्तिविशेष्य- क वह्नित्वप्रकारकानुभवत्वरूपपक्षतावच्छेदकाव्यापकमित्यर्थः । तथाच भागासिद्ध्या तदवच्छेदकावच्छेदेनानुमितेरनिर्वाहात् नोदीच्यव्यवसाये प्रामाण्यशंका निवृत्तिरितिभावः । (दुर्ज्ञेयश्चेति)उक्तपक्षइत्यादिः । उक्तफलो पधायकतायाः स्वरूपयोग्यताघटितत्वाद्दाहसमर्थविशेष्यकज्ञाने :, तादृश प्रयत्नस्वरूपयोग्यताग्रहानिर्वाहकः : समानविषयकत्वेन ज्ञानयत्नयोः का र्यकारणभावग्रह स्तत्र : तादृशप्रयत्नफलोपधायकत्व ग्रहेपेक्षितइतिभावः । तथाचतयोः कार्यकारणभावमगृहीतवतां प्रामाण्यानुमित्यसम्भवेन प्र- वृत्त्यनिर्वाहइत्याशया त्तयोः कार्यकारणभावग्रहेपि फलोत्पत्ति पूर्वं- तदुपधायकत्वं दुर्निश्चयमित्यपि द्रष्टव्यं । स्वरूपयोग्यतामात्रस्य हेतुघट कत्वन्दूषयति ( स्वरूपयोग्यत्वमपीति ) तत्वेन - तादृशप्रयत्न स्वरूपयोग्यतात्वेन । उक्तपक्षे " दुर्ज्ञेय मगृहीतज्ञानप्रयत्नकार्यकार णभावै " रित्यनुषंगेणान्वयः । तादृशकार्यकारणभावग्रहं विनापि- जनकतावच्छेदक तत्तद्विषयकज्ञानत्वरूपायाः स्वरूपयोग्यतायास्तादृशज्ञा नत्वत्वादिना ज्ञानसम्भवात्तत्वेनेत्युक्तम् ( गुरुतरमिति ) अग्रिमहे तुप्रविष्टदाहसमर्थविशेष्यकत्वापेक्षयेत्यादिः । अत्रापि तत्वेनेत्यनुषज्यते ।

[म] निश्चयत्वात्, दाहसमर्थविशेष्यकवह्नित्वप्रकारकानिश्चयत्वाद्वा । यन्नैवं तन्नैवं यथा वह्न्यप्रमा ।

---

[दी] चाह (दाहसमर्थेति) प्रथमेसाध्ये दाहसमर्थविशेष्यकत्वावच्छिन्न वह्नित्वप्रकारकत्वमर्थः । अवच्छेदकत्वञ्चान्यूनवृत्तित्वं । दाहसमर्थमात्रे वह्नित्वप्रकारकत्वन्तु फलितार्थः ।

---

[ग] प्रथमे – वह्नित्वाभाववति वह्नित्वप्रकारकत्वावच्छिन्न भेदे तदभावरूपेवा । साध्ये–साधनीये । प्रयुज्यमानस्य प्रकारकत्वान्तस्य हेतुघटकस्येति शेषः । अर्थइत्यग्रिमेणान्वयः । अत्रावच्छेदकत्वं यदि स्वरूपसम्बन्ध विशेषस्तदा दाहसमर्थवह्न्यंशे अवह्न्यंशेच वह्नित्वप्रकारकज्ञाने वह्नित्वाभाववद्विशेष्यकत्वावच्छिन्न वह्नित्वप्रकारकत्वरूप साध्याभाववति हेतुसत्वेन व्यभिचारइत्यत आह (अवच्छेदकत्वंचेति) अन्यूनवृत्तित्वं - व्यापकत्वं । तथाच स्वनिष्ठवह्नित्वप्रकारकत्व व्यापकदाहसमर्थविशेष्यकत्वं समुदायार्थः । अत्रच व्याप्यता तादात्म्येन, व्यापकतावच्छिन्नत्वेन; व्याप्यताऽवच्छेदकत्वसम्बन्धेन, व्यापकता-तादात्म्येनेति वा । वह्न्यवह्न्योर्वह्नित्वप्रकारकज्ञानीय वह्नित्वप्रकारकत्वं-तादात्म्येना वह्निविशेष्यकत्वावच्छिन्न वह्नित्वप्रकारकत्वेसम्बद्धं, तत्र-दाहसमर्थविशेष्यकत्वं नावच्छिन्नत्वसम्बन्धेन; एवन्तादृशवह्नित्वप्रकार-कत्वं अवच्छेदकतया अवह्निविशेष्यकत्वे संबद्धं तत्र दाहसमर्थ विशेष्यकत्वं न तादात्म्येन; अतो दाहसमर्थविशेष्यकत्वे नतज्ज्ञानीयवह्नित्वप्र-कारकत्वस्य दर्शितव्यापकत्वमिति तज्ज्ञानव्युदासः । लाघवमनुसृत्य-पर्यवसितार्थमाह (दाहसमर्थेति) दाहसमर्थेतर विशेष्यकत्वावच्छिन्न वह्नित्वप्रकारकत्व वदन्यत्वमित्यर्थः, ननु दाहसमर्थेतर विशेष्यकत्वानवच्छिन्न वह्नित्वप्रकारकत्वं; वह्न्यवह्न्योर्वह्नित्वप्रकारकज्ञानीय वह्निविशेष्यकत्वावच्छिन्न वह्नित्वप्रकारकत्वस्य तदितरविशेष्यकत्वा-

[दी] तेन वह्न्यवह्न्योर्वह्नित्वज्ञानमात्रे न व्यभिचारः ।

---

[ग] नवच्छिन्नतया तज्ज्ञानाव्यावृत्तेः । तेन- मात्रपदोपादानेन ( ज्ञानमात्र- इति ) मात्रपदं कृत्स्नार्थं, तथाच मात्रपदानुपादाने सर्वत्रैव तादृशज्ञाने व्यभिचारःस्यादिति भावः ।

तत्र वह्न्यंशे अव्याप्यवृत्तितया उक्तभ्रमत्वाभावरूपसाध्यसत्वेपि तत्साधारण भ्रमत्वव्यापकत्वं प्रतियोगिव्यधिकरण हेत्वभावस्य दुर्घटमेव, अवह्निमात्रविशेष्यक वह्नित्वभ्रमेपि प्रकारीभवद्वह्नि- त्वांशे वह्नित्वप्रकारकत्वाभावेन भ्रमत्वाभावस्य केवलान्वयितया, ता- दृशसाध्यव्यधिकरणाभ्रमत्वरूप तदभाववत्वस्या प्रसिद्ध्यातादृशविशे- षणानवच्छिन्नभ्रमत्वव्यापकताया एवगमकतया स्वीकरणीयत्वात् ।

नच तत्प्रकारकत्वस्येव तत्प्रकारकत्वाभावस्यापि विशेष्यरूपाविषय एवावच्छेदको नतु प्रकारोपीतिवाच्यम् ; प्रतियोग्यनवच्छेदकस्यावच्छे द्याधिकरणसंबन्धिनः अव्याप्यवृत्त्यभावावच्छेदकत्वनियमात्, विशेष्यस्ये वप्रकारस्यापि विषयतारूपज्ञानसंबन्धाविशेषात् ।

नच यादृशसंबन्धेनावच्छेद्याधिकरणसंबन्धिनः प्रतियोग्यवच्छे- दकत्वं तादृशसंबन्धेन तत्संबन्धिन एवाभावावच्छेदकत्वं, ज्ञाने अविषयार्थावच्छेदेन वह्नित्वप्रकारकत्वाभावाननुभवात् , विशेष्यप्र- कारयोश्च विषयतानैकजातीयेति विशेष्यावच्छेदेनैव ज्ञानेभ्रम- त्वाभाव इतिवाच्यम् ; विशेष्यताप्रकारतयो र्विषयतात्वेनैव सम्ब- न्धतया सम्बन्धतावच्छेदक रूपस्याविलक्षणतया विशेष्यप्रकारयो- र्ज्ञानसम्बन्धस्यैकजातीयत्वात् ।

नच विशेष्यावच्छिन्नत्वविशिष्टो भ्रमत्वाभावएव साध्यः, तद्वैय धिकरण्यविशिष्ट स्वदभावोऽ वह्निमात्रविशेष्यक वह्नित्वभ्रमे वर्तते - तत्रच न हेतुरिति प्रतियोगिवैयधिकरण्यावच्छिन्न साध्याभावव्याप- कतैव हेत्वभावस्य घटतइति वाच्यम् ; विशिष्टभ्रमत्वाभावस्य यो- भावस्तस्य प्रतियोग्यनात्मकतया भ्रमत्वव्यापकताग्रहस्यानुपयोगप्रसं- गात् , साध्यज्ञानस्यापेक्षणीयतापातात् ।

[ दी ] निश्चयत्वञ्च नोपादेयम् । द्वितीयेच निश्चयत्वमात्रं हेतुः । तच्चैकत्र वस्तुतो विरुद्धोभयावगाहिभिन्नत्वं । तेन लोहितो वह्निरित्यादिभ्रमे न व्यभिचारः ।

---

[ग] तस्मादुक्तरीत्यैव व्यभिचारवारणं सम्भवतीति दाहसमर्थमात्रे वह्नित्वप्रकारकसंशयस्यापि वह्नित्वाभाववति वह्नित्वप्रकारकत्वाभाव रूपसाध्यवत्त्वान्निश्चयत्व निवेशनमफलमित्यालोच्य तदेवात्र साध्ये परित्यजति ( निश्चयत्वमिति ) लोहितो वह्निरित्यादिभ्रमे वह्नित्वेन – भासमान वह्न्यंशे वह्न्यवृत्तिलौहित्यादिप्रकारकतया द्वितीयसाध्यशून्ये विरोधभानघटित संशयत्वशून्यत्व रूपनिश्चयत्वस्य व्यभिचारितया वास्तवविरुद्धत्वघटित निश्चयत्वं प्रकृते निवेशयति ( तच्चेति ) एकत्र – एकधर्मिणि । एतन्निवेशश्च इमौ वह्निघटावित्यादिसमूहालंबने भागासिद्धिवारणाय ।

नचायं लोहितो वह्निरित्यादिज्ञानस्येव तादृशसमूहालम्बनस्यापि पक्षबहिर्भावेनैव सामञ्जस्यमिति किमेकधर्मिकत्व निवेशनेनेति-वाच्यम् , इदन्त्वावच्छिन्ने वह्नित्वमात्रप्रकारकत्वस्य पक्षतावच्छेदकताया द्वितीयसाध्यकानुमाने स्वीकरणीयतया तत्रायं लोहितो वह्निरिति बुद्धेः पक्षबहिर्भावात् , उक्तसमूहालम्बनवारणाय पक्षे विशेषणान्तरप्रवेशानौचित्यात् उपादानप्रत्यक्षविधया प्रवर्तके वह्नित्वज्ञाने वह्नित्वविरुद्धरूपत्वादेरवश्यं प्रकारत्वात् पक्षदुर्भिक्षपरिहाराय एकधर्मिकत्वस्य हेतुभूतभेदप्रतियोगिनि अवश्यनिवेशनीयत्वाच्च ।

नचैवमयं लोहितो वह्निरित्यादिज्ञानस्य पक्षबहिर्भावायेदन्त्वावच्छिन्ने वह्नित्वमात्रप्रकारकत्वस्य पक्षतावच्छेदकप्रवेशोपि न सम्भवति, प्रवर्त्तकोयं वह्निरित्यादिप्रत्यक्षे इदन्त्वावच्छिन्ने वह्नित्वभिन्नरूपादेरपि प्रकारतया पक्षदुर्भिक्षप्रसंगादिति वाच्यम् ; दाहसमर्थावृत्तिप्र-

[दी] एवमेव षष्ठेपि । तृतीये दाहसमर्थमात्रविशेष्यक वह्नित्वप्रकार कनिश्चयत्वमर्थः । तेन वह्नित्वमात्रेण वह्न्यवह्निस्मरणे अवह्नित्वमात्रेणवह्निमात्रस्मरणे–

---

[ग] कारताया एव व्यवच्छेद्यत्वात् ( एवमेवेति )निरुक्तनिश्चयत्वमात्रस्य हेतुत्वमित्यर्थः । तृतीय साध्ये विशेष्यावृत्तित्वं विशेष्यनिष्ठाभावप्रतियोगित्वं, तेनाभावादिरूप विशेष्येप्रकारतावच्छेदक समवाय सम्बन्धेन वृत्तेरप्रसिद्धावपि अभावरूपसाध्यस्य अभावादिविशेष्यक समवायसम्बन्धावगाहि भ्रमव्यावृत्तत्वनिर्वाहः । स्वनिरूपकविशेष्यनिष्ठाभावं प्रतियोगिनिष्ठा या प्रकारता तन्निरूपकोनेति – समुदितसाध्यार्थः । एतादृशसाध्ये मूलोपात्तसकलविशेषणानामेव सार्थक्यमिति दर्शयति - ( तृतीयइति ) मात्रपदव्यावृत्तिमाह ( वह्नित्वमात्रेण वह्न्य वह्निस्मरणइति ) न व्यभिचारइत्यग्रिमेणान्वयः । अवह्नौ वह्नित्वव त्तद्वत्ति वह्नित्वविरुद्धताया अपि प्रकारत्वे वास्तवविरोधघटित निश्चयत्वाभावादेव नव्यभिचारइति " वह्नित्वमात्रेणे " ति मात्रपदं । तादृक्षप्रत्यक्षे ऽवह्निवृत्तिताभाने बाधकाभावात् स्मरणपर्यंतानुधावनं, तत्रतत्तांशस्यदोषसंभवात् । दाहसमर्थमात्रविशेष्यकत्वं दाहासमर्थाविशेष्यकत्वं । पक्षीभूतज्ञानस्यापि दाहासमर्थ वह्नित्वादिविषयत्वा द्विशेष्यतानिवेशः । वह्निघटावित्यादिसमूहालंबनं स्वयमेवपक्षाद्बहिर्भावनीयं । वह्नित्वप्रकारेण दाहासमर्थविशेष्यकान्यत्वं निवेश्यहेतो स्तादृशधीसाधारण्यसंपादनमसत ; तथासति वह्नित्वेन वह्निमात्रं पटत्वादिमात्रेण च पटादिकमवगाहमानेस्मरणे विशेष्यावृत्तिघटत्वादिप्रकारकतया साध्यशून्येव्यभिचारप्रसंगात् । वह्नित्वप्रकारकत्व विशेषणव्यावृत्तिमाह ( अवह्नित्वमात्रेण वह्निमात्रस्मरणइति)अस्यापि नव्यभिचार इत्यनेन सम्बन्धः । अत्रविशेष्यावृत्तेरवह्नित्वस्य प्रकारतया साध्यासत्वं, वह्निवृत्तितयाभानेतस्यावह्नित्वरूप प्रकाराविरुद्धतया निश्चयत्वदळेन व्यावृत्तिरिति प्रथममात्रपदम् । अवह्नित्वेना वह्नेरपि भानेदाहसमर्थमात्र विशेष्य

[ दी ] लोहितोवह्निरिति स्मरणेच नव्यभिचारः । विशेष्यावृत्ति वह्नित्वन्यूनवृत्त्यप्रकारकत्वेन विशेषणात् न तार्णे वह्नौ अतार्णत्ववह्नित्वो भयमात्रप्रकारके स्मरणे व्यभिचारः, अखण्डाभावस्यातिरिक्तत्वा न्नवैयर्थ्यं । अत्र वह्निमात्रविशेष्यका नुभवः पक्षः ।

---

[ग] कत्वदळेन तद्व्यावृत्तिरिति द्वितीयमात्रपदम् । स्मरणानुधावन प्रयोजनंपूर्ववत । ईदृशस्मरणस्या वह्नित्वघटकतया वह्नित्वप्रकारकत्वेपि मुख्यविशेष्यांशे तत्प्रकारकत्व विवक्षयान्युदासः । निश्चयत्वस्यव्यावृत्तिमाह ( लोहितोवह्निरितीति ) अत्र विशेष्यावृत्तिलौहित्यप्रकारकतया साध्यासत्वम् ।

नन्वेवमपि तार्णत्व वह्नित्वरूपा विरुद्धोभयमात्र प्रकारेणातार्णव ह्निविषयकस्मरणे विशेष्यावृत्तितार्णत्व प्रकारकतया साध्यशून्येहेतुघटकोक्तसकलविशेषणवतिव्यभिचारोदुर्वार एवेति अतोविशेषणान्तरपूरणेन तन्निराकरोति ( विशेष्यावृत्तीति ) विशेष्यावृत्ति यद्वह्नित्वन्यूनवृत्ति तत्प्रकारका न्यत्वेनेत्यर्थः । तादृशतार्णत्वप्रकारकतया उक्त ज्ञाननिरासः । पक्षीकृतज्ञानस्य वह्नित्वन्यूनवृत्तीदन्त्वप्रकारकतया तत्संग्रहाय " वृत्तीति "। विशेष्यावृत्त्यप्रकारकत्व निवेशेसाध्याविशेषो हेतुविशेषणान्तर वैयर्थ्यंचेत्यतो विशेष्यदळम् । व्यभिचारावारकतया विशेष्यदळवैय्यर्थ्यप्रसंगं निराकरोति ( अखण्डेति ) अखण्डाभावस्य-विशेष्यावृत्तिवह्नित्वन्यूनवृत्तिप्रकारकत्वाभावस्य । अतिरिक्तत्वात् -विशेष्यावृत्तिसामान्यप्रकारकत्वाभाव भिन्नत्वात् । अत्रवह्नित्वन्यून वृत्तित्वस्थाने वह्निवृत्तित्वमात्र निवेशेपि साध्याविशेषपरिहारोनिर्वहति, किन्तु प्रथमहेतुविशेषणवैयर्थ्यंभवेत् , वह्नित्वेन वह्न्यवह्निस्मरणस्य विशेष्यावृत्तिव ह्निवृत्ति वह्नित्वप्रकारकतया तेनैव विशेषणेनवारणसम्भवात् । एवं पक्षीभूतवह्नित्वज्ञाने अनुमानात्पूर्वं तस्य विशेष्यावृत्तित्वसन्देहेन साध्यस्येव हेतुघटके तद्विशेषणस्यापि निश्चयासम्भवइति वह्नित्वन्यूनवृत्तित्वं निवेशितं । समूहालम्बनेभागासिद्धिं निरस्यति ( अत्रेति )

[ दी ] यद्वा यत्र वह्नित्वप्रकारकस्तत्र न विशेष्यावृत्तिप्रकार कइति साध्यार्थः, हेत्वर्थश्चात्र दाहसमर्थमात्रे वह्नित्वप्रकारकत्वेसति निश्चयत्वं; धर्म्यन्तरे धर्मान्तरभ्रमस्यापि वह्निप्रमायाः पक्षत्वेच दाहसमर्थमात्रे वह्नित्वप्रकारकत्वेसति दाहसमर्थविरुद्धोभयप्रकारकादन्यत्वं वक्तव्यं, अखण्डाभावेच न वैय्यर्थ्यं ।

---

[ग] दाहसमर्थमात्रे वह्नित्वप्रकारकत्वस्य वह्निघटावित्यादिसमूहालम्बने सत्वेन तद्विवक्षया तस्यापि पक्षान्तर्भावं चिकीर्षुः तद्विवक्षणेंशे प्रसक्तस्य-वह्नित्वेन वह्निं घटत्वमात्रेण पटमवगाहमाने स्मरणे उक्तव्यभिचारस्य वारणाय साध्यमन्यथा व्याख्यायतस्य तादृशस्मरणसाधारण्य मुपपादयति ( यद्वायत्रेति ) वह्नित्वेनस्वविषयीभूतं यत्तदंशे तदवृत्तिप्रकारकोनेत्यर्थः । उक्तस्मरणे पटांशेतदवृत्तिप्रकारकत्वसत्वेपि पटस्यवह्नित्वेन तदविषयतया विशिष्टाभावरूप साध्यनिर्वाहः ( दाहेति ) वह्नित्वमात्रेणवह्न्यवह्निस्मरण वारणायैव सत्यन्तं । तदर्थश्च दाहसमर्थेतरांशे वह्नित्वाप्रकारकत्वं । तत्प्रकारकत्वंच पृथङ्नानिवेशनीयं, तदप्रकारकभ्रमेविशिष्टाभावरूपसाध्यसत्वेन व्यभिचारानवकाशात् । निश्चयत्वव्यावृत्तिरपि पूर्वस्थलएव । घटत्वेन पटावगाहिन्यां अयं वह्निरिति वह्नित्वप्रमायां घटत्वपटनिष्ठेदन्त्वरूप विरुद्धद्वयमेकत्रावगाहमानायां निश्चयत्वासत्वेनभागा सिद्धिप्रसंग स्तस्यपक्षबहिर्भावेन निरसनीयः । निश्चयत्व मन्यथा व्याख्यायहेतो स्तत्साधरण्योपपादनसंभवेतस्यपक्षबहिर्भावोनुचितइत्याशयेनाह ( धर्म्यंतरइति ) ननूक्तप्रमायां भागासिद्धिवारणायोपात्तं निश्चयत्वघटकविरुद्धोभय प्रकारकत्व विशेषणं दाहसमर्थविशेष्यकत्वावच्छिन्नत्वरूपं व्यभिचारावारकतया व्यर्थमेवेत्याशंकान्निरस्यति ( अखण्डाभावेचेति ) विरुद्धोभय प्रकारकत्वावच्छिन्नभेदातिरिक्त दाहसमर्थविशेष्यकत्वावच्छिन्न तदुभयप्रकारकत्वावच्छिन्न भेदरूपाभावेचेत्यर्थः । परंपरया विशेषणस्यावच्छिन्नत्वस्येति शेषः ( नवैय्यर्थ्यमिति ) अन्यथा पूर्वकल्पेप्येकधर्मिकत्व विशेषणस्य

[म] तत्र बाधानन्तरं स्मृत्युपनीते भ्रमे वह्नित्वाभाववति वह्नित्वेन म म ज्ञानं वृत्तमित्यप्रामाण्यं मनसैव परिच्छिद्यते मानान्तरेण वेति सर्वसिद्धम् । एवं वह्न्यप्रमायां वह्नित्वाभाववति वह्नित्वप्रकारकत्वादिसमर्थप्रवृत्तिजनकत्वाभावयोर्व्याप्तिग्रहे ऽप्रामाण्यव्यापकहेत्वभावाभावरूपाद्धेतोरप्रामाण्याभावरूपं साध्यं सिद्ध्यति। यद्व्यापकतया हेत्वभावो गृहीतस्तदभाव एव हेतुनासाध्यते । यत्र त्वभावस्य व्यापकता हेत्वभावस्य ज्ञायते तत्र साध्यप्रसिद्धिरंगं, तांविना तदज्ञानात्।

---

[दी] चतुर्थपंचमयोः प्रथमवत ( यद्व्यापकतयेत्यादि ) तत्वं व्यतिरेकिणिवक्ष्यामः ।

---

[ग] तथात्वं स्यादितिशेषः । ( चतुर्थपंचमयोरिति ) वह्नित्व प्रकारकत्वावच्छिन्ना वह्निवृत्तिविषयताकत्वाभाव वह्न्यवृत्तिधर्म समानाधिकरण वह्नित्वप्रकारक विषयताकत्वाभाव रूपसाध्ययोरित्यर्थः। प्रथमवत-प्रथमसाध्यस्येव ।हेतुरितिशेषः। प्रथमसाध्यस्य वह्नित्वाभाववन्निष्ठवह्नित्वप्रकारक विषयताकत्वाभाव पर्यवसितस्य तादृशसाध्यद्वयनियमः, चतुर्थसाध्येवह्नित्वाभावस्थाने वह्निभेदरूपावह्नित्वस्य, पंचमेच तत्स्थानेवह्न्यवृत्तिधर्मस्य तत्समयनियतस्य प्रवेशात्। तथाचैकस्यैव तत्रितयगमकतापिसंभवतीतिभावः। ननुयद्व्यापकतया हेत्वभावोगृह्यते तदभावस्तद्धेतुनाचेत् सिद्ध्यति तदा प्रथिवीत्वव्यापकसंयोगादेरभावेन हेतुना घटादौ प्रथिवीत्वाद्यभावसिद्धिप्रसंगः, वह्नित्वादिना धूमत्वाद्यवच्छिन्नव्यापकस्य वह्न्यादेर्महानसीयवह्नित्वाद्यवच्छिन्नाभावरूपहेतोः पर्वतादौ धूमत्वाद्यवच्छिन्नाभावस्य, वह्नित्वाद्यवच्छिन्नाभावरूपहेतोः ह्रदादौ द्रव्यत्वाद्यवच्छिन्न धूमाद्यभावस्य कथंनसिद्धिः, कथंवासुखत्वेनदुःखाभावविषयकभ्रमरूपोयत्र मुक्त्यभावे तद्व्यापकताग्रहस्तत्र मुक्तिरूपहेतुना सुखाभावसिद्धिरित्यतआह ( तत्वंव्यतिरेकिणि वक्ष्यामइति ) हेत्वभावस्य प्रतियोगिवैयधिकरण्यावच्छिन्नस्यैव व्यापकत्वं

[म] यत्र तु भावव्यापकता हेत्वभावस्य तत्र न तदङ्गं, तेन विनापि व्यतिरेकव्याप्तिग्रहात् । अतएवेतरव्यापकता आकाशत्वाभावस्य गृहीतेत्याकाशत्वेनाप्रसिद्ध एवेतरान्यान्योभावः सिद्धयति । विशेषणज्ञानं विना कथं प्रामाण्यविशिष्टानुमितिरिति चेत् ? प्रथमं न कथंचित् । ज्ञाने प्रामाण्यमित्यनुमित्यनन्तरम् तेनैव हेतुना तत्रैव प्रामाण्यविशिष्टानुमितिः, अभावविशेष्यकप्रतीत्यनन्तर मभाववद्भूतलमिति ज्ञानवत् ।

---

[दी] ( अतएवेत्यादि ) एकव्यक्तिपक्षके पक्षैकदेशे साध्यप्रसिद्धेरसम्भवादिति भावः । ( ज्ञाने प्रामाण्यमित्यादि ) विशेषं पक्षतायां वक्ष्यामः ।

---

[ग] व्याप्याभावसिद्धयौपयिकं, संयोगाद्यभावाभावस्य संयोगादेश्च न प्रतियोगिवैयधिकरण्यसम्भवः, अतो न संयोगाभावेन प्रथिवीत्वाद्यभावसिद्धिः संयोगाद्यभावस्यच व्यतिरेकितया न विभागाद्यभावसाध्यसाधकतापि । हेत्वभावस्य हेत्वभावत्वेन हेतुभूताभावप्रतियोगितावच्छेदकरूपेण च व्यापकतैव व्याप्याभावसिद्धि प्रयोजिका, व्यापकाभावाद्धेतोर्व्याप्यता येन रूपेण तदवच्छिन्नीयत्वेना भावसिद्धिरिति व्यतिरेकिग्रन्थे वक्ष्यामइत्यर्थः । मूले ( अतएवेति ) हेत्वभावव्यापकताग्रहादप्रसिद्धस्याप्यभावस्य सिद्धयुपगमादेवेत्यर्थः । प्रथिव्यादीतरभेदानुमानस्थले पक्षैकदेशे साध्यप्रसिद्धया नुमितिनिर्वाहेण उपष्टम्भनिर्वाहकं तादृशानुमानादाकाशे इतरभेदसाध्यकमूलोपदर्शितानुमानस्यैव व्यक्तिपक्षकत्वरूप विशेषं दर्शयन्नुपष्टंभं संगमयति दीधितौ ( एकव्यक्तिपक्षकइति )ननु ज्ञाने प्रामाण्यमिति साध्यविशेष्यकानुमित्यनन्तरं - विशेषणज्ञानसत्वेन साध्यविशिष्टानुमिते मूलकृतोपगमो नसंगच्छते, प्रथमानुमितेस्सिद्धित्वेन पक्षतावैकल्यादित्यत आह ( विशेषं पक्षतायामिति ) समानाकारकसिद्धेरेव प्रतिबन्धकतया पक्षविशेष्यकानुमितौ-

[म] एवञ्चेदं वह्नित्वप्रकारकज्ञानं तद्वति तदभाववति वेति संशयानन्तरं तदभाववति तत्प्रकारकत्वव्यतिरेकः सिध्यन् तद्वति तत्प्रकारकतामादाय सिद्ध्यति, तृतीयप्रकाराभावेन तेनविना साध्यस्योपसंहर्तुमशक्यत्वात , ज्ञाननित्यत्ववत् ।

---

[ दी ] नन्विदं वह्नित्वप्रकारकं ज्ञानं न वह्नित्वाभाववति वह्नित्वप्रकारकमित्यनुमिते वह्नित्ववति वह्नित्वप्रकारकत्वमविषयीकृत्यापि सम्भवान्न पक्षधर्मताबलम् । प्रथमं बोधस्यानवतारात् ।

---

[ग] साध्याविशेष्यकसिद्धेः न प्रतिबन्धकत्वमिति पक्षताग्रन्थे वक्ष्यामइत्यर्थः । अभावरूपप्रामाण्यसाध्यकानुमितौ पक्षधर्मताबलात् भावरूप प्रामाण्यभानपक्षेनुशयबीजं प्रदर्शयद्धेत्यादिकल्प मवतारयति " नन्वि" त्यादिना '। 'अविषयीकृत्ये"त्यस्य तत्त्वेनेत्यादिः (पक्षधर्मताबलमिति) वह्नित्ववति वह्नित्वप्रकारकत्वस्य तत्त्वेन भानप्रयोजकमितिशेषः । पक्षधर्मताबलेन हि ग्रहीतहेतुव्यापकतावच्छेदकसामान्यरूपाक्रान्तः हेत्वभावव्याप्यतावच्छेदकतया गृहीतधर्मावच्छिन्नाभावत्वरूपाक्रान्तोवापक्षीय विशेषोभासते, भानंचसामान्यरूपेण विशेषरूपेणवा, प्रकृतेच तद्वति तत्प्रकारकत्वं न तादृशरूपाक्रान्तमितिभावः । ननु साध्यस्य यथा एकविशेषबाधबलादपरविशेषस्य भानन्तथापक्षतावच्छेदकस्यापीति वह्नित्वाभाववति वह्नित्वप्रकारकत्वस्य बाधबलाद्वह्नित्वप्रकारकत्वेन पक्षतावच्छेदककोटिप्रविष्टस्य वह्नित्ववति वह्नित्वप्रकारकत्वस्य तत्त्वेन भानंभवेदित्यतआह(प्रथममिति ) अनुमितेरेववाधरूपत्वादितिभावः । नन्वितरबाधसामग्रयपि इतरभानविरोधितया इतरबाधतुल्यैव, वस्तुतो यथा विशेषान्तराभावविशिष्टेपक्षेसामान्यभानसामग्री अपरविशेषभान-प्रयोजिका तथा सामान्यधर्मविशिष्टे विशेषणान्तरविरहभानसामग्रयप्यपरविशेषभान प्रयोजिकोपेयते; वह्निमान् पर्वतोमहानसीय वह्न्यभाववानि-

[दी] विशिष्यविशेषान्तरस्यानुपस्थितेश्च न ताद्रूप्येण सिद्धिः । नह्य ज्ञातसुरभिगन्धस्या सुरभिगन्धबाधे जायमाना गन्धानुमिति र्जा त्वपि सुरभित्वेन गन्धं विषयीकरोति ।

---

[ग] त्यनुमितौ महानसीयान्य वह्नेरपि भानात् , तदुत्तरमपि पर्वतो महानसीये तरवह्निमान्नवेति संशयानुत्पादस्य सर्वानुभवसिद्धत्वात । अतएव द्रव्यसमवेतं द्व्यणुकमनित्यद्रव्यासमवेतमित्यनुमानेनित्यद्रव्यसमवेतत्वपर्यवसानं सकलतान्त्रिकसिद्धं; वह्निमान् पर्वतोमहानसीयवह्न्यभाववानित्यनुमितिसामग्र्या महानसीयेतर वह्निभासकत्वे वह्निमान्पर्वतोमहानासीयेतर-वह्निव्याप्योयो वह्निसहितमहानसीयवह्न्यभावव्याप्य स्तद्वानित्येतादृश-परामर्शस्य महानसीयेतरवह्न्यनुमितिंप्रतिहेतुत्वान्तराकल्पनेन लाघवं । नच तदकल्पनेपि महानसीय वह्निबाधकपरामर्शस्य महानसीयेतर वह्न्यनुमितित्वावच्छिन्नंप्रतिहेतुत्वान्तर कल्पनेन साम्यमिति वाच्यम् । तादृश कारणत्वान्तराकल्पनेपि सिद्ध्यभावादिबलात्तादृशपरामर्शजन्यानुमितौ महानसीयेतरवह्निभानसम्भवादित्यालोच्य दूषणान्तरमाह ( विशिष्य विशेषान्तरस्येति) वह्नित्ववति वह्नित्वप्रकारकत्वरूपविशेषस्य तत्त्वेनानुपस्थितेरित्यर्थः । नन्वनुपस्थितमपि पक्षताधर्मताबलेन भासतएव; नचविशेषण ज्ञानाभावेनानुपस्थितस्य प्रकारतयाभानासम्भव इति वाच्यम् , विशिष्टानुपस्थितावपि तद्घटकसकलपदार्थाना मुपस्थिततया विशेष्ये विशेषणमितिरीत्या विशिष्टस्य प्रकारत्वसंभवात । अभावरूपस्येव भावरूप प्रामाण्यस्यापि प्रथमं विशेष्यतयैव-भानोपगमसम्भवाच्चेत्यतआह ( नहीति ) ( अज्ञातसुरभिगन्धं - स्येति ) सुरभित्वेन गन्धत्वविशिष्टगोचरज्ञानरहितस्य पुंस इत्यर्थः । ( असुरभि गन्धबाधइति ) पक्षे सुरभिगन्धव्यावृत्त जाति विशेषवद्गन्धत्वेन गन्धस्याभावग्रहे जायमाना गन्धत्वावच्छिन्न साध्य कानुमितिरित्यर्थः ( सुरभित्वेनेति ) स्वतन्त्रोपस्थितेनापीत्यादिः । तद ज्ञाने विशेषणज्ञानाभावेन तत्प्रकारकानुमिते रसम्भवात । गन्धं - गन्धत्वविशिष्टं । व्यापकतावच्छेदक रूपभानस्यावश्यकतया केवल-

[म] यद्वा इदं वह्नित्वप्रकारकज्ञानं वह्नित्ववद्विषयकं

---

[दी] कुर्यात्तु कदाचिदसुरभिभिन्नत्वेनेत्यत आह (यद्वेति)

---

[ग] सुरभित्वेनानुमिते रयोगात । तदानींच वह्निसामान्य व्याप्यवत्ताज्ञानात महानसीय वह्निबाधदशायां स्वतन्त्रोपस्थित चत्वरीयत्वेन वह्न्यनुमितेरिव सुरभित्वेन गन्धानुमिते रुत्पादोनुभवविरुद्धः। वस्तुतो महानसीय वह्निबाधबलाच्चत्वरीयवह्नित्वा वच्छिन्नस्योपस्थितस्यापि चत्वरीयमहानसीयान्य वह्निज्ञानदशाया मनुमिति र्यथात्यन्तानुभवविरुद्धा तथा सुरभिगन्धस्योक्तरूपेण बाधबलादतिरिक्ति गन्धसम्भाव नादि दशायां सुरभिगन्धत्वावच्छिन्न स्योपस्थितस्यापि पक्षेनिश्चयोऽनुभवविरुद्धः, तदनन्तरं तत्र सुरभिगन्धसंशयस्य सर्वानुभवसिद्धत्वात्, अतः सुरभिभिन्नत्वेन गन्धबाधसहितएव गन्धसामान्य व्याप्यवत्तापरामर्शः सुरभिगन्धत्वेन गन्धभासकः, एवंच तुल्यन्यायतया वह्नित्ववद्विशेष्यकत्वानवच्छिन्नत्वेन वह्नित्वप्रकारकत्वबाधएव वह्नित्ववद्विशेष्यकत्वावच्छिन्नत्वेन वह्नित्वप्रकारकत्वभासकः , नतु वह्नित्वाभाववद्विशेष्यकत्वावच्छिन्नत्वेन तत्प्रकारकत्वबाध स्तत्सामग्रीवा , ततो वह्नित्वाभाववद्विशेष्यकत्वा नवच्छिन्नत्वेनैव तत्प्रकारकत्व भानसम्भवादिति हृदयम् । ( कदाचिदिति ) व्यापकतावच्छेदकरूपेणैव व्यापकानुमिति रिति नियमानुपगमइत्यर्थः ( असुरभिभिन्नत्वेनेति ) तद्विशेषणविशेषित सामान्यधर्मावच्छिन्न बाधस्य तद्विशेषणवद्भेदतदत्यन्ताभावान्यतर विशेषितसामान्यधर्मावच्छिन्न भासकत्वादिति भावः ।

इदन्तु तत्वं, विशेष्यभासकसामग्रीतो विशेष्यवत्तया निश्चिते पक्षे विशिष्टाभावभासक सामग्रीतश्च विपरीतं विशिष्टं सिद्ध्यति । विपरीतंच विशिष्टं विशेष्यवति यस्य धर्मिणो-

[दी] इदं-दाहसमर्थमात्रविशेष्यकं वह्नित्वप्रकारकंज्ञानं वह्निविशेष्यकं, तेन न तादात्म्येन वह्निप्रकारकतया सिद्धसाधनावसरः ।

---

[ग] यादृशविशेषणाभावप्रयुक्तो विशिष्टाभावस्तद्धर्मिविशेषणतापन्न तादृश विशेषण विपरीतघटितं । विपरीतंञ्च तदभावतद्भेदान्यतरत् । एवंञ्च धर्मिविशेष्यकत्वावच्छिन्न वह्नित्वप्रकारकत्वविशिष्ट वह्नित्वाभाववद्विशेष्यकत्वावच्छिन्न वह्नित्वप्रकारकत्वाभावो-विशेष्ये वह्नित्वाभावरूप विशेषणविरहप्रयुक्त इति विशेष्य विशेषणतापन्नेन वह्नित्वाभाव विपरीतेन वह्नित्वेनघटितस्य-विशिष्टस्य वह्नित्ववद्विशेष्यकत्वावच्छिन्न वह्नित्वप्रकारकत्वरूपस्य सिद्धिर्निष्प्रत्यूहैव । अतएवचा रक्तदण्ड विशिष्ट पुरुष-बाधदशायां दण्डविशिष्टपुरुषानुमिति ररक्तदण्डवदन्यदण्डवत्त्वेनेव रक्तत्वविशिष्ट दण्डवत्त्वेनापि पुरुषमवगाहतइति । वह्नित्वाभाव वद्विशेष्यकत्वघटित हेतुर्वह्निघटावित्यादि समूहालम्बने असिद्धइति, मूलोक्तपक्षे "इद" मित्यनन्तरं तद्व्यावर्तकदाहसमर्थमात्र विशेष्यकत्व विशेषणं पूरयति ( इदमिति ) "वह्नित्वप्रकारकंज्ञान" मिति मूलोक्तानुवादः । वह्नित्वप्रकारकत्वस्य पक्षतावच्छेदकनिवेशश्च तत्सहित वह्निविशेष्यकत्वरूप प्रमात्वसिद्धये । वह्निविशेष्यकत्वमात्रस्य-प्रामाण्यानात्मकत्वात् । साध्यस्थविषयपदं मुख्यविशेष्यार्थकतया अधृत्वैव व्याचष्टे ( वह्निविशेष्यकमिति ) व्याख्याफलमाह ( तेनेति ) वह्नित्वप्रकारक वह्निविषयकज्ञानस्येति शेषः । तादात्म्येन वह्निप्रकारकतया- वह्नित्वविशिष्टप्रकारक भ्रमत्वसम्भवेन । सिद्धसाधनम् -सिद्धस्यैव साधनं, अनुद्देश्यभ्रमसाधारण धर्मसिद्धिः । आदिपदेनोद्देश्य भ्रमव्यावृत्तधर्मसिध्द्यनिर्वाहपरिग्रहः । यथाश्रुते अभेदारोपस्योक्त पक्षतावच्छेदकानाक्रान्ततया सिद्धसाधनानवकाशा दसंगतेः ।

[म] वह्नित्वाभाववदविषयकत्वे सति सविषयकत्वात् , यन्नैवं तन्नैवं यथा वह्न्यप्र मेति व्यतिरेक्यन्तरात्तत्सिद्धिः ।

---

[दी] (वह्नित्वेति ) वह्निभिन्नाविशेष्यकत्वेसति सविशेष्यकत्वा दित्यर्थः । तेन नासिद्धिः।

---

[गं] नचोक्तपक्षतावच्छेदक सहितवह्नित्ववद्विषयकत्वमपि भ्रमव्यावृत्त मिति भ्रमव्यावृत्तधर्मसिद्धये विशेष्यताविशेषणमित्यपि न युज्यतइति वाच्यम् ; उक्तपक्षतावच्छेदकस्य भ्रमव्यावृत्तत्वाग्रहदशायां भ्रमव्यावृत्तत्वेन गृह्यमाणधर्मसिद्धये विशेष्यतागर्भसाध्यादरात ।

वस्तुतः प्रमात्वस्वरूपे उक्तभ्रमव्यावर्तनाय विशेष्यताया निवेशनीयतया साध्ये तदनिवेशे प्रमात्वभिन्नधर्मसिद्धिरेव सिद्धसाधनपदेन विवक्षता, प्रमात्वासिद्धिरेवादिपदग्राह्येत्यवधेयम् । वह्नित्वाभावे वह्नित्वत्वप्रवेशात् - गौरवमिति - तत्स्थाने वह्निभेदं निवेशयन् सविषयकमात्रस्यैव वह्निभिन्न विषयकत्वाद्वह्निभिन्नाविषयकत्व विशिष्ट सविषयकत्वरूप साधनाप्रसिद्धे र्वह्निभिन्नाविशेष्यकत्वविशिष्ट सविषयकत्वस्य विवक्षणे निर्विकल्पके विशेष्यताघटितसाध्यस्य व्यभिचारा दुभयत्रैव विशेष्यत्वं निवेशयति - ( वह्निभिन्नेति ) ( नासिद्धिरिति ) अत्रासिद्धिः साधनाप्रसिद्धिरूपव्याप्यत्वासिद्धिः , तद्भयेन विशेष्यांश परित्यागे स्वरूपासिद्धिः । प्रथमानुमाने अवह्निविशेष्यकत्व विशिष्ट वह्नित्वप्रकारकत्वाद्यभावस्यैव साध्यतया न ततः प्रकृतानुमाने हेतुविशेषणस्या वह्न्यविशेष्यकत्वस्य सिद्धिः, विशिष्टाभावस्यातिरिक्तत्वात; अनतिरेकेपि न तादृप्येणासिद्धिरिति विशेष्यवति विशिष्टाभाववत्त्वेन विशेषणाभावस्यानुमानान्तरं अन्तरास्वीकरणीयं ; तथाच लाघवात पूर्वानुमानहेतुना

[दी] विशेषणसिद्धिस्तु इदं ज्ञानं न वह्निभिन्नविशेष्यकं,दाहासमर्था विशेष्यकत्वात् , यद्वह्निभिन्नविशेष्यकं तद्दाहासमर्थविशेष्यकं यथा वह्निभ्रमइत्यनुमानात्।प्रतिपादयिष्यतेच. व्यापके व्यर्थविशेषणत्व विरहः । ननु यथा वह्नित्वभ्रमे वह्निभिन्नविशेष्यकत्वस्य प्रसिद्धिः , तथा वह्निभिन्नत्व भ्रमे वह्निविशेष्यकत्वस्य सा वाच्या, तथाच सभ्रमोयदि वह्निमात्रविशेष्यकस्तदान्वयि- त्वं, अथावह्निविशेष्यकोपि तदासाधारण्यं , एवं ज्ञानान्तरे त- त्प्रसिद्धावपि बोध्यमितिचेत् ?

---

[ग] दाहसमर्थमात्र विशेष्यकत्वेन तदितराविशेष्यकत्वपर्यवसितेनैव तादृ शहेतुविशेषणसाधनमुचितमित्याशयेनाह ( विशेषणसिद्धिस्त्विति ) एवं- च तदनन्तरमर्थाद्वासिद्धयतीति पूर्वमूलविरोधः कथंचित् परि हरणीयः । यद्वह्निभिन्नविशेष्यकं तद्दाहासमर्थविशेष्यकमितिव्याप्तौ- सविशेष्यकत्वमात्रस्य व्यापकत्वसम्भवेन दाहासमर्थांशवैयर्थ्यमित्यत आह ( प्रतिपादयिष्यतेचेति ) (यथेति ) ( वह्नित्वभ्रमइति ) स्मृ त्याद्युपनीतेत्यादिः । वह्नित्वभ्रमेवह्निविशेष्यकत्वेनभासमाने बाधोपनीत व- ह्निभेदस्य धर्म्यंशेभानेनेत्यर्थः । ( तथेति ) उपनयवशाद्धर्मिविशेष्यकत्वेना वह्नित्वभ्रमेभासमानेबाधोपनीतवह्नित्वस्य धर्मिणिभानेनेत्यर्थः।सा-प्रसिद्धिः। सभ्रमः-अवह्नित्वभ्रमः(तदान्वयित्वमिति) वह्निभिन्ना विशेष्यकत्वेसति सवि शेष्यकत्वस्यहेतोरपि तत्र निश्चयसम्भवेन तस्यैवान्वय दृष्टान्तत्वादितिभा वः । (तदासाधारण्यमिति) साध्यनिश्चयविषय तद्भ्रमव्यावृत्तत्वस्योक्तहे- तौ सत्वादितिभावः । ज्ञानान्तरे - वह्नित्वप्रकारके द्रव्यत्वप्रकारके वा वह्निविशेष्यकप्रमित्यन्तरे । तत्प्रसिद्धौ-वह्निविशेष्यकत्वप्रसिद्धि स्वीकारे । एवं बोद्धयं-तस्य वह्निमात्रविशेष्यकत्वे तद्वयवह्न्युभ- यविशेष्यकत्वे वान्वयित्वमसाधारणत्वंवेत्यर्थः । तादृशप्रमाया एवा-

[ दी ] तस्य भ्रमस्योक्तैकतररूपानिश्चयदशायां व्यतिरेकिप्रवृत्तेरप्रत्यूहत्वात्, उपायान्तरस्य दोषताया मूलएव व्यक्तत्वात् । असाधारण्यस्य दशाविशेषएव दोषत्वात् । सामान्यतउपस्थिते सविशेष्यत्वे वह्निसम्बन्धावगमो मनसेत्यपि कश्चित् ।

यद्यपि वह्नित्वप्रकारकज्ञानस्य वह्निविशेष्यतामात्रं न प्रामाण्यं, वह्न्यवह्न्योरवह्नि वह्निभ्रमेव्यभिचारात् । तथापि वह्नित्वप्रका

---

[ग] न्यय दृष्टान्तत्वाद्धेतोरपि तदात्मकसपक्षव्यावृत्तत्वाच्चेत्यर्थः । ( उक्तैकतररूपानिश्चयदशायामिति ) वह्निमात्रविशेष्यकत्वस्य वह्न्यवह्न्युभय विशेष्यकत्वस्य सतोप्यनिश्चयदशायामित्यर्थः । ( अप्रत्यूहत्वादिति ) पूर्वरूपानिश्चयेनान्वयसहचाराग्रहात्, उत्तररूपानिश्चयेनवासाधारण्यप्रयोजकस्य पक्षेहेत्वभाव निश्चयस्याभावादितिभावः । उपायान्तरस्य - वह्निमात्रविशेष्यकत्वादि निश्चयदशायामनुमानसम्भवस्य । अदोषतायाः - समयान्तरे व्यतिरेकित्वा विरोधितायाः । ननूभयविशेष्यक भ्रमरूपसपक्षे तत्त्वाग्रहेण हेत्वभावस्य तत्राग्रहेपि वास्तव तद्व्यावृत्तत्वरूपमसाधारण्यं हेतौ दुर्वारमेवेत्यतआह ( असाधारण्यस्येति ) दशाविशेषएव - स्वज्ञानदशायामेव । दोषत्वात्-अनुमितिविरोधित्वात् । कस्यचिन्मतमाह (सामान्यत इति ) विशेष्यतात्वरूपसामान्यधर्मप्रकारेणेत्यर्थः । ( वह्निसम्बन्धावगमइति ) तथाच धर्मिविनिर्मोकेनैव वह्निविशेष्यकत्वरूपसाध्यप्रसिद्ध्यानसपक्षस्य प्रसिद्धिरितिनान्वयित्वासाधारण्ये इतिभावः । धर्मिणिसाध्यप्रसिद्धावप्युक्तरीत्योपपत्ते वृथायं प्रयासइत्यस्वरसात् "कश्चि" दिति । उक्तानुमानं न प्रामाण्यग्राहकमित्याशंकते (यद्यपिवह्नित्वप्रकारकज्ञानस्येति) वह्नित्वप्रकारकज्ञानत्वसमानाधिकरण वह्निविशेष्यकत्वमात्रमित्यर्थः । मात्रपदेन तत्प्रकारकत्व तद्विशेष्यकत्वयोरवच्छेद्यावच्छेदकभाव घटितत्वव्यवच्छेदः । वह्न्यवह्न्योरवह्निवह्निभ्रमे-वह्नावह्नित्वमवह्नौच वह्नित्वमवगाहमानेभ्रमे । व्यभिचारात्-अतिप्रसक्त

[दी] रकत्व विशिष्ट वह्निविशेष्यकत्वं सिद्ध्यद्वह्नित्वप्रकारकत्वाव च्छेदेन सिद्ध्यति। पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेः क्लृप्त त्वात्, इति वदन्ति। नव्यास्तु इदं वह्नित्वप्रकारकत्वं वह्नि

---

[ग] त्वात्। (सिद्ध्यदिति)दर्शितवह्नित्वप्रकारकत्वविशिष्टपक्षकानुमानादित्यादिः (वह्नित्वप्रकारकत्वावच्छेदेनेति) अवच्छेद्यतासम्बन्धेन वह्नित्वप्रकारकत्वविशिष्टमित्यर्थः। तादृशंच वह्निविशेष्यकत्वं वह्नित्वप्रमात्वरूपमेव, उक्तसमूहालम्बनभ्रमे वह्निविशेष्यकत्वस्य वह्नित्वप्रकारकत्वेन समं सामानाधिकरण्य सत्वेप्यवच्छेद्यावच्छेदकभावविरहेणानतिप्रसक्तत्वात्। वह्न्यंशेवह्नित्वप्रकारकज्ञाने च तयोरवच्छेद्यावच्छेदकभावसम्बन्धस्वीकार आवश्यकः, तावतैव दर्शितभ्रमात्तादृशज्ञाने विषयतावैलक्षण्यस्योपपत्तेरितिभावः। (पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरिति। अनुमितौ बाधाभावबलात् साध्येपक्षतावच्छेदकीय स्वरूपसम्बन्धरूपावच्छिन्नत्वस्येत्यर्थः। क्लृप्तत्वात् - शिखरावच्छिन्नः पर्वतोवह्निमानित्यादौ दृष्टत्वात्। वदन्तीत्यस्वरसप्रकाशः, सच बाधाभावबलात् साध्येपक्षतावच्छेदकावच्छिन्नत्वस्य प्राचामसम्मतेः; एवं पुरोवर्त्तिनि वह्नित्वप्रकारकं ज्ञानमितिव्यवहाराद्विशेष्यस्य तत्प्रकारकत्वावच्छेदकत्वसिद्धेः धर्मिविशेष्यकत्वस्यापि सम्बन्धविधयातदवच्छेदकत्वं सिद्ध्यतु, वह्नित्वे पुरोवर्त्तिविशेष्यकं ज्ञानमित्यादिव्यवहाराभावाद्वह्नित्वादि प्रकारकत्वस्य न धर्मिविशेष्यकत्वावच्छेदकत्वम्; तथाचोक्तानुमानसिद्धस्य तत्प्रकारकत्वावच्छिन्न तद्वद्विशेष्यकत्वस्य न प्रमात्वरूपतासम्भव इत्यस्वरसबीजं। अतएव स्वयं वह्निविशेष्यकत्वावच्छिन्नत्व विशिष्ट वह्नित्वप्रकारकत्वस्य साध्यविशिष्टपक्षविधया साधकमनुमानमाह (नव्यास्त्विति) (इदमिति) पुरोवर्त्यंशावच्छिन्नमित्यर्थः। एतद्विशेषणप्रवेशात् भ्रमत्वघटक वह्नित्वप्रकारकत्वे नांशतो बाधः, नवा वह्नित्वप्रकारकत्वस्य सामानाधिकरण्य मात्रेण वह्निविशेष्यकत्वावच्छिन्नत्व सिद्धावपि पुरोवर्त्यंशे वह्नित्वप्रकारक

[म] अतिरिक्तविषयतापक्षे अयं वह्नित्वेनानुभवोऽवह्निवृत्तिवह्नित्वप्रकारकविषयताको न,

---

[दी] विशेष्यकत्वावच्छिन्नं दाहसमर्थे वह्नित्वप्रकारकत्ववत्वात ; यन्नैवं तन्नैवं यथा वह्नित्वभ्रमस्य वह्नित्वप्रकारकत्वं । ततश्चेदं ज्ञानं - वह्नि विशेष्यकत्वावच्छिन्न वह्नित्वप्रकारकत्ववत् , दाहसमर्थे वह्नित्वप्रकारकत्वात् ; यन्नैवं तन्नैवं, तद्वदेव( अयमित्यादि )

---

[ग] त्वे वह्नित्वाभाववद्विशेष्यकत्वावच्छिन्नत्व संशयस्य पुरोवर्त्यंशे भ्रमत्वसंशयपर्यवसितस्यानिवृत्त्या पुरोवर्त्तिनि प्रवृत्तेरनुपपत्तिः ( दाहसमर्थे वह्नित्वप्रकारकत्वत्वादिति) दाहसमर्थविशेष्यकत्वावच्छिन्नत्वादित्यर्थः । वह्नित्वप्रकारकत्वत्वन्तु वैयर्थ्यादनुपादेयं । दाहसमर्थांशे धर्मान्तरप्रकारकत्वेपि वह्निविशेष्यकत्वावच्छिन्नत्व साध्यसत्वेन व्यभिचारावारकत्वात् । पुरोवर्तिविशेष्यकत्वावच्छिन्न धर्मान्तरप्रकारकत्व स्यान्वयदृष्टान्ततायाः कदाचित् सम्भवेपि तत्र हेतुसाध्ययोरनिश्चय दशायां तदसम्भवे व्यतिरेक्यनुमानस्यादरणीयतया व्यतिरेक्युदाहरणमाह ( यन्नैवं तन्नैवमिति ) यद्वह्निविशेष्यकत्वानवच्छिन्नं तद्दाहसमर्थविशेष्यकत्वानवच्छिन्नमित्यर्थः । ( यथा वह्नित्वभ्रमस्य वह्नित्वप्रकारकत्वमिति ) गुञ्जादिविशेष्यकत्वावच्छिन्नं तादित्यर्थः । घटादेर्दृष्टान्तस्य सौलभ्येपि भ्रमात्मकज्ञानीय वह्नित्वप्रकारकत्वे पक्षे बाधहेत्वसिद्धिभ्यां नैतदनुमानसम्भव इत्याविष्कर्तुं व्यतिरेकदृष्टान्ततया तदुपन्यासः । एतावतापि भ्रमत्वशंकानिवृत्त्याप्रवृत्तिनिर्वाहे सम्भवाभिप्रायेण ज्ञानविशेष्यकप्रामाण्यग्रहप्रकारमाह (ततश्चेति ) उक्तानुमानात् साध्यप्रसिद्धौ सत्यांचेत्यर्थः । ( इदं ज्ञानमिति ) पुरोवर्त्तिविशेष्यकं ज्ञानमित्यर्थः । पुरोवर्त्तिविशेष्यकत्वावच्छेदेन प्रामाण्यभानादेव उक्तानुमानात् प्रवृत्तिनिर्वाहइत्यवधेयम् । वह्नित्वभ्रमवह्निविशेष्यकद्रव्यत्वादिज्ञानयो र्व्यभिचारवारणायहेतौ दळद्वयम् । ज्ञानान्तरे प्रामाण्यस्या गृहीतत्वदशायामन्वयित्वासंभवाभिप्रायेण व्यतिरेक्युदाहरणमाह (यन्नैवं तन्नैवमिति) स्फुटोर्थः । तद्वदेव-वह्नित्वभ्रमवदेव । " अयं

[म] वह्नित्वासमानाधिकरण वह्नित्वप्रकारकविषयताको न,

---

[दी] पुरोवर्ति वह्निविषयताकोनुभव इत्यर्थः । अवह्निः–वह्निभिन्नः । अत्र हेतुर्दाहसमर्थवति वह्नित्वप्रकारक विषयताकान्यत्वम् । नच वह्निघटसमूहालम्बनप्रमायामसिद्धिः, विशेष्यभेदेन वियताभेदात् । ( वह्नित्वासमानाधिकरणेति ) वह्न्यवृत्तीत्यर्थः ।

---

[ग] वह्नित्वेनानुभव" इतिमूले 'अय'मित्यस्य वह्निवृत्तिविषयताकइत्यर्थः । 'वह्नित्वेने' त्यस्य ज्ञानान्वयिवह्नित्वप्रकारकत्वार्थकत्वेतिरिक्तविषयता वादिमते विषयताया एव सप्रकारकत्वाद्विरोध इति विषयताया मेव वह्नित्वप्रकारकत्वं विवक्षणीयमित्याशयेन व्याचष्टे ( पुरोवर्त्तीति ) पुरोवर्त्तिगोचरप्रवृत्त्यौपयिकस्य वह्नित्वप्रकारकपुरोवर्त्ति वृत्तिविषयतायां वह्निवृत्तित्वस्यं प्रामाण्यघटकस्य पक्षधर्मताबलेन सिद्ध्येवह्नित्वप्रकारकपुरोवर्त्तिवर्तिविषयताकत्वस्य पक्षतावच्छेदकत्वानुसरणम् । योयत्रप्रवृत्तिविषयस्सएव पुरोवर्त्तिपदेन विवक्षितः । वह्निगुञ्जयोर्वह्नित्वप्रकारकज्ञानेंशतो बाधवारणायतद्व्यावर्तक विशेषणमपि प्रवेश्यम् । अवह्निपदस्य बहुव्रीहिणावह्निशून्यार्थकता भ्रमं निराकर्तुमाह ( वह्निभिन्नइति ) ज्ञानस्यैतन्मतेनिष्प्रकारकतया दाहसमर्थमात्रे वह्नित्वप्रकारकत्वरूपोक्तहेतुर्नसम्भवतीति विषयताया वह्नित्वप्रकारकत्व घटितं हेतुमाह ( अत्रहेतुरिति ) इमौ वह्निघटावित्यादिसमूहालम्बनेंशतोऽसिद्धिवारणाय वह्नित्वप्रकारकत्वानिवेशः । साध्येपि तत्रांशतोबाधवारणायतन्निवेशात, तादृशसमूहालम्बने उभयविशेष्यसाधारणविषयतायाऐक्ये दाहासमर्थघटवृत्तिविषयताया वह्नित्वप्रकारकत्वादसिद्धिमाशंक्य विषयताभेदेन समाधत्ते "नचेत्या" दिना । विषयतायाऐक्येबाधोपि द्रष्टव्यः । द्वितीयसाध्येवह्नित्वासमानाधिकरणत्वं यदि वह्निभिन्नवृत्तित्वं तदापूर्वसाध्याविशेषइत्यतोव्याचष्टे ( वह्न्यवृत्तीति ) वह्नित्वेन वह्निगुञ्जाविषयकभ्रमे विशेष्यद्वयवृत्तिविषयतैक्येवह्न्य

[ म ] विषयताश्रयावृत्तिप्रकारको न वेति साध्यं, वह्निवृत्तिवह्नित्वप्रकारकविषयताकत्वं विषयताश्रयवृत्तिप्रकारकत्वं वा अर्थात् सिध्यति, न तु प्रथमं,

---

[ दी ] वह्न्यवह्न्योर्वह्नित्वज्ञानन्तु वह्न्यवृत्तिवह्निनिष्ठ वह्नित्वप्रकारक विषयताकम् । हेतुः पूर्वोक्तः । ( विषयतेति ) स्वव्यधिकरणप्रकारक विषयताकोनेत्यर्थः । तेन वह्न्यवह्न्योरवह्निवह्निभ्रमस्य निरासः । हेतुश्च दाहासमर्थवृत्ति विषयताकान्यत्वे विशेष्यावृत्तिवह्नित्वन्यूनवृत्तिप्रकारक विषयताकान्यत्वेच सति वह्नित्वप्रकारकनिश्चयत्वं । अत्र दाहसमर्थमात्र विशेष्यकोनुभवः पक्षः । सर्वत्र व्यावृत्तिः पूर्वोक्ता बोध्या ।

---

[ग] वृत्तिविषयताकत्वाभावस्तत्साधारणइतिभ्रमं विषयताभेदेन निराकुरुते ( वह्न्यवह्न्योरिति ) ( पूर्वोक्तइति)दाहासमर्थवृत्तिवह्नित्वप्रकारकविषयताकान्यत्वरूपएवेत्यर्थः । विषयताया एवसप्रकारकत्वेयथाश्रुततृतीयसाध्यं निष्प्रकारकतया भ्रमेप्यस्तीति तदन्यथाव्याचष्टे ( विषयतेति ) स्वंविषयता, तथाच स्वानधिकरणवृत्तिधर्मप्रकारिकास्वाधिकरणावृत्तिधर्मप्रकारिकावायाविषयता तत्प्रतियोगित्वाभावः साध्यः । ज्ञानंस्वत्वेनापादायस्वविषयताश्रयावृत्तिप्रकारकत्वानुपादानबीजमाह ( तेनेति ) ( व्युदासइति ) तादृशभ्रमविषयताया अवह्नित्वप्रकारिकाया आश्रयत्वस्य वह्नौसत्वेपि अवह्निमात्रएव तादृशवह्नित्वप्रकारकविषयतायाः सत्वात्तस्य स्वव्यधिकरणप्रकारकतया निरुक्तविषयताकत्वाभावस्य तत्रासत्वादितिभावः । वह्नित्वेनवह्न्यवह्निविषयकज्ञानेप्रमाभ्रमरूपे साध्यसत्ताया आपाततइष्टत्वं संभवतीति तद्व्यावृत्तिर्नाभिहिता । वह्निघटावितिसमूहालम्बने हेतुघटकप्रथमसत्यन्ताभावादसिद्धिरितिपक्षं संकोचयति ( [illegible]ति ) ( व्यावृत्तिःपूर्ववदिति ) वह्नित्वमात्रेण वह्न्यवह्निस्मरणे तार्णत्ववह्नित्वोभयमात्रेणातार्णवह्निस्मरणे अवह्नित्वमात्रेण

[दी] तादात्म्यसमवायाभ्यां वह्निवह्नित्वप्रकारिकाया अवह्निवृत्ति विषयताया विशेषणीभूतवह्निवृत्तित्वात् द्वितीयसाध्येसिद्ध- साधनम् ,

---

[ ग ] वह्निमात्रस्मरणे लोहितोवह्निरिति स्मरणेच क्रमेणविशेषण चतुष्टयस्यव्यावृत्तिरित्यर्थः । मूले गुंजादौ वह्नितादात्म्यारोपस्य विषयतायावह्न्यवृत्तित्वं साध्यस्य तादृशभ्रमव्यावृत्तत्वसंपादनायोक्तं, तन्नसंगच्छते, साध्यस्य तादृशभ्रमसाधारण्येपि तादृशभ्रमस्य पुरोवर्तिगुंजादिनिष्ठविषयताया वह्नित्वप्रकारकत्वविरहेण निरुक्तपक्षतावच्छेदकानाक्रान्तत्वात, साध्यस्य तत्साधारण्ये क्षतिविरहात् ।

नच वह्निगुंजयो र्विशेषणविशेष्ययो र्विषयत्वाभेदे वह्न्यंशेवह्नित्वप्रकारकत्वेपि पुरोवर्त्तिगुंजानिष्ठविषयताया अपि वह्नित्वप्रकारकत्वमक्षतमितिवाच्यम् ; तथासत्यपि तत्रपुरोवर्त्तिनिष्ठविषयतात्वेन वह्नित्वप्रकारकत्वविरहात्तावतैव तत्रतत्रविशेष्यांशे विशेषणतावच्छेदकाप्रकारकत्वोपपत्तेः, पक्षतावच्छेदकेपि तथा विवक्षणेनसामंजस्याद्तोयादृशभ्रमस्य वह्नित्वेनापि पुरोवर्त्तिविषयकत्वं तत्परतयापि सिद्ध साधनं प्रसंजयन्मूलं संगमयति ( तादात्म्येति ) तादात्म्येन वह्निप्रकारिका या समवायेन वह्नित्वप्रकारिका अवह्निवृत्तिविषयता तस्याइत्यर्थः । वह्नेरप्रकारकत्वे ऽ वह्निवृत्तिविषयताया नवह्निवृत्तित्वप्रसक्तिर्वह्नित्वस्य तथात्वेच नोक्तपक्षतावच्छेदकाक्रान्तत्वं भ्रमस्येत्युभयप्रकारकत्वोक्तिः (विशेषणीभूतवह्निवृत्तित्वादिति) विशेषणविशेष्ययोरेकविषयतयैव निर्वाहे तद्भेदेमानाभावादितिभावः । तादृशभ्रमेगुंजानिष्ठविषयतायावह्निप्रकारकत्वेन तदभिन्नवह्निनिष्ठविषयतायां वह्निप्रकारकत्वेपि तस्योक्तरीत्या वह्न्यंशे वह्न्यप्रकारकत्व व्यवहारउपपादनीयः । द्वितीयसाध्येवह्निवृत्तिवह्नित्वप्रकारक विषयताकत्वाभावरूपे गुंजावह्निवृत्तिविषयतयोरैक्येपि तादृशवह्नित्वप्रकारकविषयताया अवह्निवृत्तित्वात् व्यधिकरण वह्निप्रकारकत्वाच्च नप्रथमतृतीय साध्ययोस्तत्साधारण्यमिति तत्साध्यपरित्यागः । ( सिद्धसाधनमिति ) स्याध्यस्योक्तभ्रमसाधारण्य

[म] साध्याप्रसिद्धेः । वह्निभ्रमे च विषयताश्रयो न वह्निः, विषयताया विशेष्यवृत्तित्वादिति भ्रमत्वेन न सिद्धसाधनम् ।

---

[दी] विषयभेदेन विषयिता भेदानभ्युपगमादिति विशेषणस्य विषयता नाधिकरणत्वेन तन्निराकुरुते ( वह्निभ्रमेचेति ) विशेष्यवृत्तित्वात्-विशेष्यमात्रवृत्तित्वात् । विशेषणेतादृश

---

[ग] ग्रहेण पक्षेतत्सिद्धेः, तच्च तादृशभ्रमत्वशंकानपनायकत्वात्, प्रत्युत साधारणधर्मदर्शनतया तच्छंकाप्रयोजकतया पक्षेसिद्धस्य वह्नित्वप्रकारकत्वादेः साधनतुल्यं तत्साधनमित्यर्थः । एवञ्च " भ्रमत्वेने " ति मूलस्यापि द्वितीयसाध्यवतोपि तादृशाभेदभ्रमत्वसंभवेनेत्यर्थः । वह्निरूपपुरोवर्त्तिविषयताघटित पक्षतावच्छेदकस्य तादृशभ्रमे असत्वा तस्यपक्षतावच्छेदकाक्रान्तत्वेपि तत्रसाध्यानिश्चयदशायां साध्याप्रसिद्धि दशायामेववा पक्षेतादृशसाध्यानुमितेः प्रवृत्त्यर्थमुपगमाद्यथाश्रुतसिद्ध साधनासंगतिः बोध्या । वह्निरूपपुरोवर्त्तिविषयताघटितपक्षतावच्छेदक संवलितं तादृशसाध्यं तादृशभ्रमव्यावृत्तमेवेति दर्शितरीत्यान्याख्यापि नसाधीयसीतितुनशंक्यम्, तादृशभ्रमव्यावृत्तस्य वह्निरूपपुरोवर्त्ति विषयता प्रतियोगित्वस्य पुरोवर्त्तित्वमात्रेण वह्निं विषयीकृत्यप्रमारूपपक्षे गृहीतत्वेपि इदं ज्ञानं वह्निरूपपुरोवर्त्ति विषयकमित्यग्रहात् तत्रोक्तपक्षतावच्छेदकसहितसाध्यस्य निश्चयेपि यथाऽभेदारोपोमुख्यविशेष्यांशे वह्नित्वप्रकारकोवह्न्यवृत्ति वह्नित्वप्रकारविषयताकान्योपि न वह्निप्रमा इदमपि ज्ञानं तादृशमेववातथात्वेत्य प्रामाण्यशंकाया विशेषणविशेष्य वृत्त्येकविषयता पक्षे दुरुच्छेदतया असंगतेः । ननु वह्निवह्नित्वरूपविशेषणभेदाद्गुंजारूपविशेष्यतद्विशेषणवह्न्योर्विषयता वह्न्यवृत्तिरेव तथा वह्नित्वप्रकारिकापि, तावतैवपक्षतावच्छेदकस्य तत्साधारण्यादितिनोक्तसाध्यस्य तद्भ्रमसाधारण्यमित्याशंकान्निरस्यति ( भेदेनेति ) मूले ( विशेष्यवृत्तित्वादिति ) विशेष्यमात्रवृत्तित्वादित्यर्थकतया व्याख्येयम्, अन्यथा प्रकृतानुपयो-

[दी] विषयता विरहेपि ज्ञाने नतादृशविषयताकत्वस्य विरह इति-न सिद्धसाधनं । तद्भदन्योन्याभावोवासाध्यः । पृथिवीत्वेन-जलान्योन्याभावस्यैवोक्तहेतौ स्तस्यापि सिद्धिसम्भवात् । यद्य-प्युक्तहेतुमति तथात्वासम्भवेन

---

[ग] गादिति तदर्थं स्पष्टयति (विशेपणस्येति)ननु विशेषणस्य वह्नेर्विषयतानाधारत्वे उक्तभ्रमस्य तदवच्छेदेन विषयता प्रतियोगित्वाभावसत्वात् साध्यस्य तत्साधारण्यंदुर्वारमेव ।

नच विषयताप्रतियोगित्वस्य व्याप्यवृत्तित्वान्नेदं युज्यत इतिवाच्यम् ; गुञ्जानिष्ठविषयता प्रतियोगित्वस्य गुञ्जात्वादिसामानाधिकरण्यरूपतया अव्याप्यवृत्तित्वात । सामानाधिकरण्याव्याप्यवृत्तितायाः संयोगाभावादेर्गुणादौ प्रतियोग्यसामानाधिकरण्यमभिहितवतो मणिकारस्यैव सम्मतत्वात् ।

नच विषयताप्रतियोगित्वस्याव्याप्यवृत्तित्वेपि विशेपणस्य ज्ञानासम्बन्धित्वेन तदवच्छेदेन तत्राभावोदुर्घट इतिवाच्यम् । विशेषणज्ञानस्य विषयता विरहेपि परंपरासम्बन्धसम्भवादित्याशंकामत्र-सामानाधिकरण्यस्य व्याप्यवृत्तित्वमेव मणिकारानुमतमित्याशयेन-निरस्यति ( विशेषणइति ) सामानाधिकरण्यस्या व्याप्यवृत्तित्वेपि तद्व-ति तद्भेदस्यानभ्युपगमात् भेदस्यैव प्रकृते साध्यतोपगमात न दोषइत्याह (तद्भदन्योन्येति ) ननुभ्रमत्वव्यापकाभावेन व्यतिरेकिणात दत्यन्ताभावः सेद्धुमर्हति नतुभ्रमान्योन्याभाव इत्यतआह ( पृथिवीत्वेनेति ) अथातादात्म्यसम्बन्धेन जलं प्रति पृथिवीत्वाभावस्य व्यापकताग्रहात् पृथिवीत्वेन जलभेदसिद्धि स्तथातादात्म्येन भ्रमत्वावच्छिन्नं प्रतिप्रकृतहेत्वभावस्य व्यापकताग्रहात [illegible]त्सम्बन्धावच्छिन्नप्रतियोगिताकस्य भेदरूपभ्रमाभावस्यापि सि[illegible]र्थः । उक्तहेतुमति – दाहासमर्थवृत्तिवह्नित्वप्रकारका[illegible]माति । तथात्वासम्भवेन–वह्निगुञ्जोभयवृत्ति वह्नित्व प्रकार[illegible]

[म] अन्ये तु वह्निभ्रमे या विशेषणवृत्तिर्विषयता सा विशेष्यवृत्ति विषयताया अभिन्नेति न सा वह्नित्वासमानाधिकरणधर्म्मानवच्छिन्नेति न सिद्धसाधनमिति ।

---

[ दी ] न सिद्धसाधनादेः प्रसक्तिः, तथापि - विशेषादर्शनदशायां गमकतौपयिकरूपभ्रमेण ततोधर्मान्तराद्धाताद्दशानुमितिसम्भवेपि न सिद्धसाधनावकाश इति दर्शितं । ( नसेति ) तथाच वह्नित्वासमानाधिकरण धर्मावच्छिन्न वह्नित्वप्रकारकविषयताकोनेतिसाध्यम् । अवच्छेदकत्वंच सामानाधिकरण्यं । वह्निभिन्नवृत्तिवह्नित्व प्रकारकविषयताकोनेति तु फलितार्थः ।

---

[न] भ्रमत्वासम्भवेन(नासिद्धसाधनादेः प्रसक्तिरिति)हेत्वभावेन तादृशभ्रमे तथाविध साध्यसिद्ध्यसम्भवेन तथाविधस्य साध्यभ्रमसाधारण्याग्रहात् प्रमायां तदनुमिते भ्रमत्वशंकाप्रयोजकत्व तदविरोधित्वयो रप्रसक्तिरित्यर्थः। विशेषादर्शनदशायां–तादृशभ्रमेहेत्वभावा निश्चय दशायां। गमकलौपयिकरूपभ्रमेण–तादृशभ्रमरूपपक्षधर्मताभ्रमेण । ततः – प्रकृतहेतोः । धर्मान्तराद्धा–तद्भ्रमं विनापि तद्वृत्तिहेत्वन्तराद्धा(तादृशानुमितिसंभवेपीति) उक्तसाध्यस्य तादृशभ्रमसाधारण्यग्रहेपीत्यर्थः । भ्रमेतादृशसाध्यानुमितिसम्पादनंचेदंसम्भवाभिप्रायेण, वस्तुतोभ्रमसाधारण्याग्रहेपि भ्रमव्यावृत्तत्वाग्रहेणोक्तसाध्यासिद्धे भ्रमत्वशंकायामविरोधिताप्रसक्तिदुर्वारैवेति बोध्यम् । अन्येत्वित्यादिमते उक्तभ्रम विषयताया वह्नित्वासमानाधिकरणधर्मावच्छिन्नत्वेन सिद्धसाधनं परिहृतं, तादृशसाध्याभिप्रायेण तत्साध्यंस्पष्टयति(तथाचेति) (वह्नित्वासमानाधिकरणेति)वह्न्यवृत्तीत्यर्थः । तादृशसाध्यस्य मूलोक्तसाध्यत्रितयानन्तर्भावे मूलविरोधः, उक्तसाध्यएव सिद्धसाधनस्य प्रसंजितत्वादिति अवह्निवृत्तीत्यादि प्रथमसाध्यएवपर्यवसानाय व्याचष्टे (अवच्छेदकत्वंचेति ) (सामानाधिकरण्यमिति ) अवच्छेदकत्वस्य तथात्वे विषयताया अवह्नि वृत्तित्वपर्यवसानादिष्टं व्याख्यातं । " वह्निभिन्नवृत्ती "ति विषयताविशेषणं ( फलितार्थ इति )

[ दी ] यद्यपि भेदेऽप्युक्तसिद्धसाधननिरासो भवत्येव, तथापि पुरोवर्तितदितरसाधारणवह्नित्व प्रकारकविषयताकत्वेन पक्षतायां वह्न्यभेदारोपे सिद्धसाधनं माभूत, माऽभूदुपदर्शित द्वितीयसाध्ये तदिति तथाभिधानम् ।

---

[ ग ] वह्न्यवृत्तिधर्मनिष्ठसामानाधिकरण्य प्रतियोगित्वरूप तादृश धर्मावच्छिन्नत्वस्य वह्निभिन्नवृत्तित्वव्याप्यतया अतो विषयताया वह्नि भिन्नवृत्तित्व लाभादिति भावः ( भेदेपीति ) विशेष्यविशेषणभूतयो गुं जावह्न्योर्विषयताया इत्यादिः ( सिद्धसाधननिरासइति ) अवह्निवृत्तिविषयताया वह्निवृत्तिवह्नित्वप्रकारक विषयतातो न्यत्वेन वह्न्यभेदारोपस्य वह्नित्वप्रकारकपुरोवर्ति निष्ठविषयताकत्वरूप पक्षतावच्छेदका नाक्रान्तत्वात्पुरोवर्ति गुञ्जानिष्ठ विषयतायावह्नित्व विशिष्टप्रकारकत्वेपि वह्नित्वस्य प्रकारतावच्छेदक भावतया वह्नित्वा प्रकारकत्वात्तादृशारोपे पुरोवर्तिन्यपि वह्नित्वभाने वह्निभिन्नवृत्ति वह्नित्वप्रकारक विषयताकत्वसत्वेन तदभावरूपसाध्यस्यैवासत्वादिति - भावः । ( पुरोवर्तितदितरसाधारणेति ) पक्षतावच्छेदकप्रविष्टविषयतायां पुरोवर्तिवृत्तित्वस्या निवेशनीयत्वादिति भावः ( वह्न्यभेदारोपे सिद्धसाधनमिति ) (माभूदिति ) तदभिधानमित्यग्रिमेणान्वयः । तथाच विषयताभेदे वह्न्यभेदारोपस्य पक्षतावच्छेदकाक्रान्तत्वमस्त्येव, एवंच गुंजानिष्ठाया वह्निप्रकारकविषयताया वह्नित्वप्रकारकत्वाभावेन साध्यमस्तीति सिद्धसाधनस्य दुर्वारतया विषयताया अभेदानुसरणमित्यर्थः । विषयताभेदे वह्न्यवृत्तिवह्नित्वप्रकारक विषयताकत्वाभावरूप द्वितीयसाध्ये सिद्धसाधनं दुर्वारंस्यात, तदनुरोधेनापि तदभेदोक्ति रित्याह ( माचभूदिति ) तत - सिद्धसाधनं । नच विषयताया अभेदेपि सिद्धसाधनं दुर्वारमेव, तादृशभ्रमविषयताया वह्न्यवृत्तित्वविरहेण वह्न्यवृत्ति विषयताकत्वाभावरूप साध्यसत्वादिति कथमेतदिति वाच्यम् ; सामानाधिकरण्यस्या व्याप्यवृत्तितामते वह्निवृत्तिविषयताया मवह्न्यव

[ दी ] विशेषणे विशिष्टज्ञानविषयत्व व्यवहारादे स्समानाकार धारावहनबुद्ध्यादे श्चानुपपत्ति स्तत्र विषयताभ्युपगमे बीजम् ।

---

[ग] च्छेदेन वह्न्यवृत्तित्वसत्वात् तन्मताभिप्रायेण तदभिधानात् । अथवाद्वितीयसाध्ये वह्न्यवृत्तिवह्नित्व प्रकारकवियताकत्वरूपे पर्यव सितसाध्ये वह्निगुञ्ज्ञानिष्ठविषयतयो भेदे वह्निवृत्तिविषयतामादाय सिद्धसाधनं स्यात्तयोरभेदे यथाश्रुते तत्साध्ये सिद्धसाधनापरिहारेपि वह्निवृत्तीत्यस्य वह्निमात्रवृत्तित्वार्थकत्वोपगमे तत्परिहारस्सम्भवतीत्य र्थः । स्वर्यविशेषणस्य विशिष्टबुद्धिविषयतां व्यवस्थापयति ( विशेष णइति ) विषयत्वासत्वेपि भाक्तस्य सविषयत्वव्यवहारस्य सम्भवात् युक्त्यन्तरमाह ( समानाकारेति ) घटत्वाद्येकप्रकारकेत्यर्थः । (अ नुपपत्तिरिति ) प्रथमद्वितीयघटत्वादिविशिष्टबुद्ध्योर्निर्विकल्पकघटत्वज्ञा नात्सम्भवेपि चतुर्थादिविशिष्टबुद्धेरव्यवहित प्राक्काले निर्विकल्पक विनाशेन घटत्वादिविशिष्टबुद्धे स्तदविषयकत्वे विशेषणविषयकज्ञान विरहेण चतुर्थादि विशिष्ट बुद्धेरसम्भवादिति भावः ।

नच-प्रथममिव विशिष्टबुद्ध्यनुरोधेनान्तरान्तरा निर्विकल्पक म ङ्गीकार्यमतो नानुपपत्तिरिति वाच्यम् ; तथा सति धारोच्छेदात् ।

नच-विशिष्टबुद्धिजनकविशिष्टबुद्धौ निर्विकल्पकीय विषयता स्वी कार्या, अतोविशिष्टबुद्धिधारोपपत्तिरितिवाच्यम् ; तथा सति कस्याश्चि द्विशिष्टबुद्धौ तादृशविषयता कस्याश्चिन्नेत्यत्र नियामकाभावाद्विशिष्टबुद्धि मात्रस्यैव विशेषण विषयकत्वसिद्धे रविवादात् ।

ननु-जातित्वाद्युपस्थितिदशायामपि घटादिना चक्षुरादिसंयोगात् घटइत्याकारकं प्रत्यक्षं कदाचिज्जायत इत्यनुभवसिद्धमिति, जातित्वा दिना घटत्वादिविषयकबुद्धावपि स्वरूपतोघटत्वादि प्रकारकज्ञानप्रयोजि का निर्विकल्पकीय विषयतास्वीकार्या; तथाच स्वरूपतोघटत्वादे विषय तायान्तदंशे धर्मान्तरभान सामग्र्यभावस्यानुगतस्य नियामकतानसं भवति, इत्यनायत्यानुगतमेव तन्नियामकं वाच्यमिति- निर्विकल्प-

[दी] वस्तुतोतिरिक्त विषयतावादिनामपि विशेष्यत्वप्रकारत्वा दयो विषयता भेदा एवेति ।

---

[ग] कीय घटत्वादिविषयता घटइत्याद्याकारिकायां क्वचिदेवविशिष्टबुद्धौ न सर्वत्रेति नियमोपपत्तिरित्याशंक्य "आदे" रित्युक्तम् । तत्परिग्राह्यश्च घटत्वादिप्रकारकस्मृत्यादि जन्यतद्विषयकोपनीत भानादिकं । निर्विकल्पक विषयताप्रयोजक चक्षुस्सन्निकर्षाद्यजन्ये स्मरणादौ तादृश विषयता विरहेण तदुपनीतभानासम्भवादिति भावः । नन्वतिरिक्तविषयतावादिना स्वरूपतो घटत्वादिप्रकारक विषयताशालि स्मृत्यादि सामग्र्यामपि निर्विकल्पकविषयता प्रयोजकत्वमुपगन्तव्यमिति नोक्तानुपपत्तिरित्यतआह ( वस्तुतइति ) ( विषयताभेदाएवेति ) तथाच प्रकारतादेः पदार्थान्तरस्य विषयतायाश्चातिरिक्तायाः कल्पनमपेक्ष्य लाघवेन प्रकारतादीनां विषयतात्वसिद्धौ विशेषणस्यापि विशिष्टबुद्धि विषयत्व न्दुर्वारमेवेतिभावः ।

नच-निर्विकल्पकसाधारणक्लृप्त विषयतयैव विशिष्टबुद्धेः क्वचित्क्वचिद्विशेषणविषयकत्वोपपत्तौ प्रकारतायां विषयतात्वं निर्युक्तिकम् , एवं विशेष्यतायामपि, निर्विकल्पकीय विषयताया विशेष्यविशेषणभावभेदेनाविलक्षणत्वेपि प्रकारताविशेष्यता विशेषकृतएवच ज्ञानस्यविशेषोभविष्यति,तयोरपिज्ञानसंबन्धत्वोपगमादिति वाच्यम्; अनन्तज्ञानेषु निर्विकल्पकसाधारणविषयताकल्पनमपेक्ष्यतदपेक्षया अल्पीयस्योः प्रकारताविशेष्यतयोरेव विषयतात्वकल्पनौचित्यात् । जातिरित्याद्याकारकज्ञाने निर्विकल्पकसाधारण घटत्वादिविषयत्वोपगमे ततोघटइत्यादिविशिष्टबुद्ध्यापत्तेः।प्रकारतायां विषयतात्वास्वीकारे घटत्वादिरूपविशेषणज्ञानस्य घटत्वादिप्रकारकविषयताकत्वं कार्यतावच्छेदकं, तत्स्वीकारेच तत्प्रकारकत्वमेवेत्यपि लाघवमितिदिक् ।

यत्तु अविषयस्यापि विषयताप्रकारताया विशिष्टज्ञानवैलक्षण्यनिर्वाहकत्वोपगमे ज्ञानलक्षणप्रत्यासत्त्यसिद्धिः, स्मरणादिविषय-

[म] न च मणिज्ञानस्य प्रामाण्यानुमाने मणिप्रभायां मणिभ्रमेण प्रवृत्तस्य मणिप्राप्तौ मणिगोचरप्रयत्नजनकमणित्वप्रकारकनिश्चयत्वमनैकान्तिकमिति वाच्यम् । मणिप्रभाविषयकज्ञानेन भिन्नविषयतया मणिगोचरप्रयत्नानुत्पादात् । मणिप्राप्तिस्तु नान्तरीयकत्वात् । ज्ञानप्रयत्नयोरसमानकालत्वेऽप्यनुभवस्मरणयोरिव मनसा कार्यकारणभावग्रह इति नासिद्धिः । अभावसाध्यके च-निर्विकल्पकस्य प्रथमं सपक्षत्वेनानिश्चयान्नासाधारण्यम् ।

---

[ दी ] निर्विकल्पकस्येत्युपलक्षणं , घटादेरपि तथात्वात् ।

---

[ग] तत्तादि प्रकारके दन्त्वाद्यवच्छिन्न विषयताया स्तत्तादिस्मारके दन्त्वाद्यवच्छिन्न विषकानुभवे स्वीकारेणैव ततो विशिष्टव्यवहारादि निर्वाहात् ; तत्तास्मरणादिजन्यस्य सएवायमित्याकारकस्य ज्ञानान्तरस्यानुपगमे क्षतिविरहादिति जितं प्राभाकरैरेवेति । तन्न - तादृशविषयताशालिज्ञाने तत्तादिज्ञानस्याहेतुत्वे अयमित्याद्याकारक सकलज्ञानस्यैव तादृशविषयताशालित्वापत्त्या सोयमितिव्यवहारादि कार्याकारितापत्तेः, तत्तादिज्ञानसहित तादृशज्ञानस्य तत्तत्कार्यजनकत्वोपगमे गौरवात् , नायं सइत्यादि बाधकालीना दयमित्यादि ज्ञानात्तत्तत्कार्यस्य तावतापि वारणासम्भवाच्च ।

ननु बाधकालीनज्ञाने तत्तादिप्रकारिकाविषयतैव नास्ति, तच्छालिज्ञाने बाधादेः प्रतिबन्धकत्वादिति वाच्यम् ; यत्रायमिति प्रत्यक्षद्वितीयक्षणे नायं सइति स्मरणं, तदुत्तरक्षणे तत्तत्कार्यप्रसंगस्य पूर्वकालीनबुद्धेस्तादृशविषयताविरहे उत्तरकालीनबाधस्या प्रयोजकतया दुर्वारत्वादिति । अधिकमन्यथाख्यातौ विवेचयिष्यामः । मूले ( अभावसाध्यकइति ) भ्रमत्वाभावरूप प्रामाण्यसाध्यकइत्यर्थः । निर्विकल्पकस्य सपक्षत्वेनानिश्चयेपि घटादिरूपसपक्षव्यावृत्ततया हेतो रसाधारण्यं - दुर्वारमिति शंकोद्धाराय व्याचष्टे दीधितौ( निर्विकल्पकस्येति ) तथात्वात् -प्रथमं सपक्षत्वेनानिश्चयात । नासाधारण्यमिति शेषः । सपक्षत्वेनानिश्च

[म] तथायं पृथिवीत्यनुभवः पृथिवीत्वाभाववति पृथिवीत्वप्रकारको न, अपृथिवीवृत्तिप्रकारको न, विशेष्यावृत्तिप्रकारको न, पृथिवीत्वप्रकारकत्वे सति पृथिव्यविशेष्यको न, पृथिवीत्वव्यधिकरणप्रकारावच्छिन्नो न, पृथिव्यवृत्तिप्रकारको न वा ; गन्धवद्विशेष्यकपृथिवीत्वप्रकारकनिश्चयत्वादिति व्यतिरेकी । पृथिवीत्वभ्रमः पृथिवीत्वाभाववति पृथिवीत्वप्रकारक इति न भ्रमत्वे न लिङ्गसाधनं, न वा गन्धवद्विशेष्यक इति न व्यभिचारः ।

---

[दी] साध्याप्रसिद्ध्या सपक्षत्वेन- साध्यवत्त्वेनानिश्चयात् । तथा निश्चयेऽपि न क्षतिः, व्यतिरेकिणि साध्यसामानाधिकरण्यग्रहस्या किञ्चित्करत्वात् । भ्रमत्वस्य चोक्तहेतौ विरोधनिश्चयेन-पक्षे भ्रमत्वव्यापकाभाववत्वानिश्चयात् विरोधिव्याप्तेश्चाप्रयोजकत्वेना निश्चयात् । संशायकत्वेन दूषकतायाश्च निरस्यत्वात् ।

---

[ग] ये हेतुं पूरयति (साध्याप्रसिद्ध्येति) निश्चयांशज्ञानस्यादूषकतया तं-परित्यज्य सपक्षपदार्थं व्याचष्टे ( साध्यवत्वेनेति ) " अनिश्चयादि " ति मूलोक्तानुवादः । अभ्युपेत्याह ( तथानिश्चयेपीति ) न क्षतिः - नासाधारण्यं प्रकृते दोषः । साध्यसामानाधिकरण्य ग्रहविरोधितया सत्प्रतिपक्षोत्थापकतयावा संशायकतयावा ऽ साधारण्यंदोषः, तत्र नाद्य इत्याह ( व्यतिरेकिणीति ) व्यतिरेकव्याप्त्या गमक इत्यर्थः । द्वितीयोपि नपक्षइत्याह ( भ्रमत्वस्यचेति ) वह्नित्वाभाववति वह्नित्वप्रकारकत्वादिरूप भ्रमत्वाश्रये दाहसमर्थमात्रे वह्नित्वप्रकारकत्वरूपहेतुसत्वे दाहसमर्थता वह्नित्वं व्यभिचरेदिति तर्केण हेत्वभावे भ्रमत्वव्यापकता निश्चयेनेत्यर्थः ( पक्षइति ) हेतुमत्वेन निश्चीयमानइतिशेषः । (भ्रमत्वव्यापकाभाववत्व निश्चयादिति)तादृशनिश्चयघटित भ्रमत्वाभावानुमिति सामग्रीसमवधानादित्यर्थः (विरोधिव्याप्तेरिति)हेत्वभावे भ्रमत्वाभाव व्याएकतायाइत्यर्थः । अनिश्चयात् - अनिश्चयेनभ्रमत्वानुमिति सामग्र्य समवधानात् । प्रतिपक्षसंवलनाभावादितिशेषः । तृतीयपक्षन्दूषयति(संशायकत्वेनेति ) ( निरसिष्यमाणत्वादिति ) ग्राह्यसंशयस्य तत्सामग्र्याश्चानु

[म] पृथिवीत्ववति पृथिवीत्वप्रकारकत्वादिकमर्थात् सिध्यति । विषयतापक्षे अयं पृथिवीत्वेनानुभवः अपृथिवीवृत्तिपृथिवीत्वप्रकारकविषयताको न, पृथिव्यवृत्तिपृथिवीत्वप्रकारकविषयताको न, पृथिवीत्वासमानाधिकरणपृथिवीत्वप्रकारकविषयताको न,

---

[दी] ( अयं पृथिवीत्वेनेत्यादि ) अत्र हेत्वादिकं पूर्वोक्तदिशावसेयं । ( पृथिवीत्वासमानाधिकरणे त्यादि ) पृथिवीत्वासमानाधिकरणः - पृथिव्यवृत्तिः , यः, प्रकारः - धर्मः, तदवच्छिन्नविषयता-

---

[ग] मित्यविरोधादितिभावः । अन्येत्वित्यादिमतीयं साध्यं व्याख्यातुमुपक्रमते(पृथिवीत्वेति )पृथिवीत्वासमानाधिकरणत्वस्य पृथिवीत्वानाधिकरणवृत्तित्वरूपस्य धर्मविशेषणत्वे पक्षीभूतज्ञानीय पृथिवीनिष्ठविषयतायाअपि तादृशद्रव्यत्वावच्छिन्नतया तदवच्छिन्नविषयकत्वाभावस्य पक्षेबाधइत्यसमानाधिकरणांत व्याचष्टे ( पृथिव्यवृत्तिरिति ) स्वरूपसत्पृथिव्यवृत्तिधर्मस्य सामानाधिकरण्यरूपावच्छिन्नत्वस्यापि निवेश्यतया तादृशधर्मस्यप्रकारत्व कथनासंगतिरित्यतोव्याचष्टे ( प्रकारोधर्मइति ) तदवच्छिन्नत्वमिहयदि सामानाधिकरण्यमात्रं तदातद्भेदवृत्तिधर्मवत्त्वस्य तद्भेदसमनियततया पृथिव्यवृत्तिधर्मसामानाधिकरण्यं पृथिवीभिन्नवृत्तित्वपर्यवसितमिति पृथिवीभिन्नवृत्तिविषयताकान्यत्वं साध्यं पर्यवसितं, अवच्छिन्नत्वस्य तत्प्रकारकत्वरूपत्वे पृथिव्यवृत्तिधर्मप्रकारकविषयता-कान्यत्वं, तत्रप्रथमसाध्ये यथाश्रुतो हेतु र्जलपृथिव्याविति ज्ञाने व्यभिचारी, तदीय पृथिवीवृत्तिविषयताया गन्धासमानाधिकरणाप्रकारकत्वात्; गन्धसमानाधिकरणप्रकारकत्वाच्च; तद्वारणायगन्धासमानाधिकरणा प्रकारकविषयताप्रतियोगित्वस्य गन्धासमानाधिकरण विषयताकान्यत्वार्थकतायाः आवश्यकत्वे गन्धसमानाधिकरणप्रकारकेत्यस्य हेतुप्रविष्टस्यवैय्यर्थ्यं, तादृशविषयताकान्यत्वे तादृशसाध्यव्यभिचाराप्रसक्तेः ; द्वितीयसाध्येपि यथाश्रुतो हेतुरुक्तसमूहालम्बनएव व्यभिचारी, तद्वारणाय गन्धासमानाधिकरण प्रकारक विषयताकान्यत्वस्य गन्ध-

[ दी ] कान्यत्वं । उभयथाच धर्मस्यावच्छेदकत्वं , प्रकारतया सामानाधिकरण्येनचेति ;

---

[ग] समानाधिकरणेत्याद्यर्थकता स्वीकारे तावन्मात्रस्यैव उक्तसाध्यो व्यभिचारितया अप्रकारकान्त वैय्यर्थ्य मित्याशंक्योभयसार्थक्याय साध्यं संकोचयितुं मवच्छिन्नत्वं द्विरूपतया व्याचष्टे ( उभयथाचेति ) अन्यतरवद्विषयताकान्यत्वमिति पाठः । पृथिव्यवृत्तिधर्मप्रकारकविषयताकान्यत्व सहितस्य पृथिवीभिन्नवृत्तिविषयताकान्य त्वस्य साध्यत्वे तादृशसाध्याभावो न प्रतियोगिरूपः किन्त्वातिरिक्तः साध्यानिरूप्यो भावइति व्यतिरेकिण्यपि साध्यप्रसिद्धि रपेक्षणीया स्यादित्यन्यतरवत्वेन विषयताद्वयमनुगमय्यैकभेदस्य - साध्यत्वमुपपादितम् । धर्मिद्वयान्यतरत्वस्यानुगमकत्व सम्भवेपि तादृशान्यतरत्वस्य प्रकृते धर्मभेदापेक्षया गुरुशरीर धर्मिभेद घटितत्वेन गौरवाद्धर्मद्वयान्यतरवत्वेन धर्मिणोनुगमः कृतः । क्वचिदन्यतराभावाभाववद्विषयताकान्यत्वमिति पाठः । तत्रान्यतराभावान्तं तादृशधर्मयोः – प्रत्येकरूपावच्छिन्नाभाव द्वयपरं । तथाच तादृशाभावयोः द्वित्वावच्छिन्नाभाव वद्विषयताकान्यत्वं समुदितार्थः । अन्यतरत्वावच्छिन्नाभावाभाववत्वेन विषयतयोरनुगमस्तु घटस्य घटाभावाभाववत्वेनोपादानसमः । अतएवान्यतरत्वावच्छिन्नाभावाभाववद्विषयता कान्यत्वमित्ययं पाठोऽपपाठएव । अखण्डान्यतरत्वावच्छिन्नाभाव निष्ठ तद्व्यक्तित्वावच्छिन्नाभावत्वेन धर्मद्वयमनुगमय्य धर्मिणोर्विषयतयो रनुगमपरतया तादृशपाठव्याख्यापि नसाधीयसी, अखण्डाभावस्य तद्व्यक्तित्वेन निवेशे तद्व्यक्तित्वे नान्यतरत्वरूपाखण्डभेदं निवेश्य धर्मयो धर्मिणोर्वानुगमो पेक्षाया निर्बीजत्वापातात् । गन्धासमानाधिकरणेत्यादि हेतौ पृथिवीत्वेन पाथः पृथिवीविषयकज्ञाने व्यभिचारवारणाय गन्धवद्वृत्ति पर्यवसितार्थकाप्रकारकान्तानन्तरं मात्रपदं पूरणीयं, तथाच तदन्तस्य तदुत्तरविषयतान्तपदेन कर्मधारयोपगमे मात्रपदेन गन्धवदवृत्ति गन्धसमानाधिकरण प्रकारकविषयतासम्बन्धएव व्यवच्छेद्यः, अन्यत्वविशेषित मात्रा

[प्र] विषयताश्रयावृत्ति प्रकारको न वेति साध्यम् । पृथिवीत्व-समानाधिकरण पृथिवीत्वप्रकारकविषयताकत्वादिकम् अर्थात् सिध्यति ।

अन्ये तु पृथिवीत्वासमानाधिकरणप्रकारावच्छिन्नविषयता-कत्वाभावः साध्यः, गन्धासमानाधिकरणाप्रकारकगन्धसमाना-धिकरणप्रकारकविषयताप्रतियोगिज्ञानत्वात् ।

---

[ दी ] तथाच पृथिव्यवृत्ति धर्मप्रकारकत्व पृथिवी-भिन्न वृत्तित्वान्यतर वद्विषयताकान्यत्वमित्यर्थः । ( गन्धासमाना-धिकरणेति ) तादृशाप्रकारिका या विषयता याच तादृशप्रकारिका, तदुभयप्रतियोगित्वमर्थः ।

---

[ग] र्थविशेष्यतावच्छेदकता पर्याप्त्यधिकरणधर्मावच्छिन्न सम्बन्धव्यव च्छेद बोधकतायाएव तत्पदस्य व्युत्पन्नत्वात । तथाच पृथि वीत्वेन पृथिवीविषयके जलनिर्विकल्पके व्यभिचारः, जलमित्यादिज्ञा-ने व्यभिचारवारणाय गन्धसमानाधिकरणेत्यादि विशेष्यदळविवक्षा-या आवश्यकत्वात् ; प्रकारकान्तस्य द्विधा निवेशात गौरवश्च; अतो प्र-कारकान्तप्रकारकान्तयो द्वन्द्वपूर्वको विषयतापदेन कर्मधारयः, विष यतापदार्थस्या प्रकारकान्तप्रकारकान्तयोः प्रत्येकान्वयात् गन्धासमा नाधिकरणा प्रकारक गन्धसमानाधिकरण प्रकारक विषयताद्वय - लाभ इत्याशयेन व्याचष्टे ( गन्धासमानाधिकरणेतीति ) ।

नचाप्रकारकान्त प्रकारकान्तयोः कर्मधारयमुपगम्य तदनन्तर-मेव मात्रपदं पूर्यतां; तावताचगन्धवद्वृत्तिगन्धसमानाधिकरण प्रकार-कान्यविषयत्वा प्रतियोगित्वलाभात्तन्मात्रहेतुतयैवसामञ्जस्यं लाघवंचेति वाच्यम् ; विशेषणपदयोः कर्मधारयस्य गुणानांचेति न्यायविरुद्धत्वात् ।

[ दी ] गन्धासमानाधिकरणः प्रकारो – धर्मितावच्छेदको धर्मिवृत्तिर्यस्यास्तदन्या , गन्धसमानाधिकरणेति यावत । तत्प्रतियोगित्वं । यद्यपीदं पाथः पृथिव्योः पृथिवीति बुद्धौ इमे पाथः पृथिव्याविति ज्ञानेचास्तीत्यतिव्याप्तं; तथापि

---

[ ग ] ( " गुणानांच परार्थत्वादसम्बन्धस्समत्वात्स्यात , " परार्थत्वात्-उद्देश्यमात्रान्वयि स्वार्थबोधकाकांक्षो त्थापकपदोपस्थाप्यत्वात । असंबंधः-तदर्थविषयत्वावच्छिन्न विषतानिरूपकत्वं । समत्वात –एकधर्मितावच्छेदेकावच्छिन्न निरूपितप्रकारत्वात ) गन्धासमानाधिकरणाप्रकारकत्वं गन्धसमानाधिकरणत्व पर्यवसितम् , तद्वद्विषयताप्रतियोगित्वं विषयतापदपूर्वं मात्रपदपूरणेन गन्धासमानाधिकरणविषयता कान्यत्वपयर्वसितं वाच्यम् , तथाच गन्धसमानाधिकरणधर्मप्रकारक विषयताया मप्रकारकान्तस्य विशेषणत्वे मात्रपदव्यवच्छेद्यघटकभेदप्रतियोगिनि गन्धसमानाधिकरणे निष्प्रयोजनकगन्धसमानाधिकरण प्रकारकत्वनिवेशोधिकस्स्यादिति कर्मधारय गर्भकर्मधारयोपेक्षा बीजं बोद्धव्यम् ।

पृथिवीत्वमात्रेण जलविशेष्यकज्ञाने गन्धासमानाधिकरण प्रकारकविषयताकभिन्ने व्यभिचारवारणाय प्रथमदळं व्याचष्टे ( गन्धासमानाधिकरणइति ) प्रकारकइत्यस्य व्याख्या " धर्मितावच्छेदक"इति । " धर्मिवृत्ति" रिति तदर्थकथनं । " यस्या " इति धर्मिण्यन्वितम् । एतावता गन्धवदवृत्तिधर्मसमानाधिकरणत्वमेव गन्धासमानाधिकरणप्रकारकत्वं, तच्चविषयताया विषयभेदेन भेदाद्गन्धवदवृत्ति धर्मव न्निष्ठविषयताया गन्धवदवृत्तित्व नियमात् गन्धवदवृत्तित्वपर्यवसितं, गन्धवदवृत्तिभिन्नत्वं गन्धसामानाधिकरण्यमेवेत्याशयेना प्रकारकान्तपर्यवसितार्थमाह ( गन्धसमानाधिकरणेतीति ) तत्प्रातियोगित्वं –गन्धसमानाधिकरणविषयता प्रातियोगित्वं, एकदळार्थं इतिशेषः । इदं-एतद्दळम् । (अस्तीति ) तथाच तत्र विशेष्यदळस्यापि सत्त्वेन साध्यस्य चासत्वेन व्यभिचारइतिभावः । तत्र प्रथमज्ञानीयजलविषयतायां पृथिव्यवृत्तिधर्मप्रकारकत्वासत्त्वेपि पृथिवीभिन्नवृ

[दी] तन्मात्रविषयताप्रतियोगित्वं । तदन्यविषयताप्रतियोग्यन्यत्व मितियावत्। तन्मात्रंच पृथिव्यां न पृथिवीति पृथिवी नवेतिच ज्ञाने व्यभिचारि, अतो गन्धसमानाधिकरणेत्यादि । गन्धसमानाधिकरण प्रकारकत्वंच प्रकारत्वव्यापक गन्धसामानाधिकरण्यकत्वं -

---

[ग] तित्वसत्वेन उक्तान्यतरवत्वं, द्वितीयज्ञानीयजलनिष्ठविषयतायां-च उभयसत्वेनैवान्यतरवत्वमिति भेदेनोभयोपादानम् । यद्यपि गन्ध समानाधिकरणेत्यादे र्यादृशार्थोविवक्षणीय स्तावतापिगन्धासमानाधि-करणयाव त्स्वप्रकारकज्ञानव्यावृत्तिसम्भवस्तथापि तद्दळस्य यथाश्रु-तार्थकत्वाभिप्रायेण तत्र व्यभिचारप्रसञ्जनं । तन्मात्रविषयता प्रति-योगित्वं- गन्धवद्वृत्तिमात्रविषयता प्रतियोगित्वं । तत्र गन्धवद्वृत्तिवि-षयत्वाप्रतियोगित्वरूपमात्रपदळभ्य व्यवच्छेद्मात्रविवक्षयैव सामञ्जस्या त् भावपदंपरित्यजति ( तदन्येति ) गन्धवद्वृत्त्यन्येत्यर्थः । उ-क्तस्थलयोश्च जलवृत्तिविषयताया गन्धवद्वृत्तितया नतादृश -विषयताप्रतियोग्यन्यत्वमिति नव्यभिचारइतिभावः । दळान्तरव्यावृत्ति-माह ( तन्मात्रंचेति ) (पृथिव्यां नपृथिवीतीति) ज्ञानइत्यग्रिमेणान्वयः। पृथिवीमात्रविशेष्यके पृथिवीत्वज्ञानइत्यर्थः । तादृशभ्रमविषयताया यथाश्रुत गन्धसमानाधिकरण प्रकारकत्वदळेनैव वारणसम्भवाद्यथा विवक्षणीयस्य व्यावृत्तिस्थलन्दर्शयति ( पृथिवीनवेतिचेति ) अ-त्रापि पृथिव्यामितिप्राक्तनमभि सम्बध्यते, तथाच पृथिवीमात्रविशे-ष्यके पृथिवीत्वतदभावज्ञानइत्यर्थः ( प्रकारत्वव्यापकेति ) स्वप्र-कारत्वव्यापकेत्यर्थः । उक्तसंशयीयपृथिवीनिष्ठविषयता प्रकारत्वम-पृथिवीत्वनिष्ठमपि तत्रगन्धसामानाधिकरण्याभावा न्नतादृशविषयताया न्निरुक्तदळसत्वमिति नव्यभिचारइतिभावः ।

नचैवमपि घटः पृथिवी पटोन पृथिवीतिज्ञाने व्यभिचारोदुर्वारः, तदी यघटनिष्ठविषयतायाः प्रकारतात्वव्यापक गन्धसामानाधिकरण्यकत्वादि-तिवाच्यं; स्वविषयताप्रकारत्वव्यापक गन्धसामानाधिकरण्यकत्वस्यैव

[म] तेन संशयव्यवच्छेदः । निश्चयत्वं वा विवक्षितमित्याहुः ।

[दी] तेन -तादृशप्रकारकत्वविवक्षणेन । संशयस्य-पृथिवीत्वादि संशयस्य । व्युदासः - तत्र व्यभिचाराभावः । निश्चयत्वंवा विवक्षितं ज्ञानपदेन, निश्चयपरं ज्ञानपदमिति यावत् । अतो ज्ञानपदा वैयर्थ्यमिति भावः । निश्चयत्वंच प्रागुक्तं बोद्धव्यम् ।

[ग] गन्धसमानाधिकरण प्रकारकविषयता प्रतियोगित्वपर्यन्तेन विवक्षणीयत्वादिति ।

तेनेति मूलंव्याचष्टे ( तेनेति ) तादृशप्रकारकत्व विवक्षणेन-प्रकारत्वव्यापक गन्धसामानाधिकरण्यकत्वस्य प्रकारकान्तेन विवक्षया । घटादावयं घटोनवेत्यादिसंशये साध्यसत्वेन व्यभिचारानवकाशात् संशयपदं तद्विशेषपरतया व्याचष्टे ( संशयस्येति ) व्युदास इत्यस्य व्यावृत्तिरित्यर्थकत्वे तद्व्यावृत्तेः प्रयोजनाकांक्षाया अनिवृत्तेस्तत्पदं व्याचष्टे ( तत्रव्यभिचाराभावइति) तेन व्यभिचारवारणस्य फलत्वलाभात् नोक्ताकांक्षेतिभावः । निश्चयत्वस्य स्वातन्त्र्येण हेतुघटकत्वे ज्ञानपदवैयर्थ्यमितिं तत्पदमेव तदर्थकतया सार्थकयितुं पूरयति ( ज्ञानपदेनेति ) ( अतोज्ञानपदावैव्यर्थ्यमिति ) पूर्वकल्पेच्चागतया तत्परित्याज्यमेव । घटोनपृथिवीत्यादि निश्चये व्यभिचारन्निराकरोति ( निश्चयत्वञ्चेति ) (प्रागुक्तमिति) भ्रमव्यावृत्तं स्वविषयताप्रकारविरुद्ध प्रकारकविषयताकान्यत्वरूपमित्यर्थः । ननु विरुद्धोभय प्रकारकविषयताकान्यत्वं, अपृथिवीत्वमात्रेणपटादिविषयके घटत्वादिनाच घटादिविषयके ज्ञानेव्यभिचारात् । अपृथिवीत्वमात्रेण पटादिमात्रविषयक ज्ञानेव्यभिचारवारणायच गन्ध समानाधिकरण प्रकारकविषयताकत्वं मध्यमदळं यथाश्रुतमेवेत्यवधेयं ।

केचित्तु विरुद्धोभयप्रकारक विषयताकान्यत्वमेव निश्चयत्वं, गन्धसमानाधिकरण प्रकारक स्वीयविषतासामान्यकत्व म्मध्यमदळार्थः, अपृथिवीत्वमात्रेण पटादिविषयके घटत्वादिना घटादिज्ञाने निश्चयत्वसत्वेपि तज्ज्ञानविषयतासामान्या न्तर्गत पटादिविषयताया गन्धसमानाधिकरणा प्रकारकत्वेन मध्यमदळाभावान्न व्यभिचारइत्याहुः । पाथः

[दी] गन्धवन्मात्रविशेष्यकज्ञानस्य पक्षत्वेन नांशतो बाधभागासिद्धी, केचित्तु गन्धासमानाधिकरण प्रकारक विषयता कान्यत्वेसति गन्धासमानाधिकरण विषयताप्रतियोग्यन्यत्वं फलितार्थः । तेन- सत्यन्तपदोपादानेन । पृथिवी नवेति संशयस्य पृथिव्यां नपृथिवीति भ्रमस्यच व्युदासः । सत्यन्तं परित्यज्य वानिश्चयत्वं, विवक्षितं- विवक्षणीयं ज्ञानपदेन । निश्चयत्वं निश्चयस्य धर्मविशेषः, सच- पृथिव्यां तदवृत्त्यप्रकारकत्वमित्याहुः । अन्येतु पृथिवीभिन्नवृत्ति विषयताकत्वाभाव स्साध्यार्थः । करकायां पृथिवीज्ञानस्य वारणाय हेतावप्रकारान्तम् । जलनिर्विकल्पकवारणाय प्रकार-

---

[ग] पृथिव्याविति ज्ञाने बाधासिद्धीपक्षसंकोचेन वारयति ( गन्धवन्मा- त्रेति ) गन्धासमानाधिकरणा प्रकारकेत्यत्रा प्रकारकपदं तत्प्रकारक विषयताकान्यार्थकं, तदन्यत्वंच सामानाधिकरण्य सम्बन्धेन तदुत्तर दळार्थे विशेषणं, उत्तरदळंच प्रकारकपदस्य स्वरूपार्थकतया समा नाधिकरण पदोत्तरं मात्रपदपूरणेन गन्धासमानाधिकरण विषय त्वाप्रतियोग्यर्थक मिति व्याचक्षाणानां केषांचिन्मतमाह ( केचित्त्वि- ति ) ( फलितार्थइति ) प्रतियोग्यन्तस्येत्यादिः । ज्ञानपदंचैतत्कल्पे विवक्षितार्थकमेव । सत्यन्तानुपादाने पृथिव्यान्न पृथिवीति भ्र- मेपि व्यभिचाराद्न्यूनताभंगाय पूरयति ( न पृथिवीति ) निश्चयत्वनिवे शे पूर्वदळस्यैव वैयर्थ्यात् वाकारस्य तद्दळनिवेश व्यवच्छेदार्थकता माविष्करोति ( सत्यन्तमिति ) उक्तभ्रमवारणाय व्याचष्टे ( निश्चयत्व मिति ) ( तदवृत्तीति ) पृथिव्यवृत्तीत्यर्थः । तथाच पृथिव्यवृत्तिप्रकार क पृथिवीवृत्तिविषताकान्यत्वं प्रकृते निश्चयत्वमिति समुदितार्थः । रूपवती पृथिवी त्यादिज्ञानस्य पक्षत्वे पृथिव्यवृत्तिरूपत्वादि प्रकारक रूपादिनिष्ठ विषयताके सिद्धिवारणाय विषयतायां पृथिवीवृत्तित्व- निवेशनम् । अखण्डाभाव घटकतयाचावैय्यर्थ्यं । विशेषणान्तरविशेष्ये विशेषणे विषयतानभ्युपगमेतु तदनुपादेयमेव ( करकायामिति ) तादृश ज्ञाने करकामात्रवृत्तीदंत्वादेः प्रकारतया अप्रकारान्तेन तद्वारण

[मू] शीता पृथिवीत्यनुभवः पृथिव्यंशे प्रमैव,

---

[दी] कान्तमित्याहुः । तच्चिन्त्यं । पृथिवीभिन्नवृत्ति पृथिवीत्वप्रकारक विषयताकोनेति साध्ये शीता पृथिवीति भ्रमे प्रमात्वापादनं इष्टापादनत्वेन निराकुरुते ( शीतेति ) पृथिव्योरेवैते पाथः पृथिव्याविति भ्रमे व्यभिचारं

---

[ग] मितिभावः ( तच्चिन्त्यमिति ) एतन्मते पृथिवीत्वेन करकास्मरणे करकामात्रवृत्ति धर्मभानानियमा दप्रकारकान्तेन तत्रव्यभिचारवारणासंभवः, जलनिर्विकल्पके व्यभिचारस्य सप्रकारकविषयतानिवेशनैव वारणसंभवात् प्रकारिगन्धसामानाधिकरण्य विशेषणस्य वैयर्थ्यंचेतिचिन्ताबीजं । अन्येत्वित्यादि मतसाध्यस्यप्रमात्वस्य विषयताश्रयावृत्तिप्रकारकत्वाभावरूप प्रमात्वस्यच तादृशभ्रमसाधारण्यापत्तिशंकानिराकरणपरतया 'शीते' त्यादि मूलंव्याचष्टे ( पृथिवीभिन्नेति )

ननु ' प्रमाभ्रमरूप ' इत्यादि मूलस्य पृथिवीत्वेन पृथिव्यपृथिवीविषयकभ्रमेव्यभिचारवारणपरतानसंभवति, गन्धवन्मात्रविषयताकत्वरूप हेत्वभावादेव व्यभिचाराप्रसक्तेः; हेतौमात्रार्थानन्तर्भावे पृथिव्यंशे तत्रभ्रमत्वाभावसत्वेपि अन्यांशेभ्रमत्वसत्वेन भ्रमत्वंप्रति प्रतियोगिव्यधिकरण हेत्वभावस्य व्यापकत्वायोगेन तदन्तर्भावस्यावश्यकत्वात् ।

अथ जलादिमात्र विषयकभ्रमे पृथिवीभिन्नमात्रविषयताकत्वाभावस्य विषयरूपावच्छेदकाभावेना सत्वात्तत्र साध्यव्यधिकरणभ्रमत्वरूप तदभावस्य प्रसिद्ध्यातादृशभ्रमत्वं प्रति हेतुव्यधिकरणहेत्वभावस्य व्यापकता संभवतीतिमात्रान्तर्भावोनर्थकइतिचेत् ? तथाऽपि समूहालम्बनं पृथिव्यंशे नापृथिवीवृत्तिविषयताकमिति व्यवहारस्य पृथिव्यां तादृश विषयताकत्वावच्छेदकत्वाभाव विषयताकत्वेनाप्युपपत्तेरुक्त भ्रमत्वस्याऽव्याप्यवृत्तिताया अप्रामाणिकतयानुपगमेंऽशभेदेन भ्रमत्वाभावसत्व मुपगम्यसिद्धान्तो नसाधुरतोप्रमाभ्रमरूपइत्यादिमूल मन्यथावतार्यान्यथा व्याचष्टे ( पृथिव्योरेवेति ) ( व्यभिचारमिति ) तादृशसमूहालम्बनस्य पाथस्त्वां

[म] प्रमा-भ्रमरूपे च समूहालम्बने न व्यभिचारः, अंशे तस्यापि प्रमात्वात् ; विशेष्यभेदेन विषयताभेदाच्च ।

---

[दी] निरस्यति ( प्रमेति ) अंशे- पृथिवीत्वांशे । अथ तथापि विषयताश्रयावृत्तीति साध्ये पाथः पृथिव्योरिमे पृथिव्यावित्याकारक भ्रमत्वेन सिद्धसाधनमर्थान्तरंवा , पाथोवृत्तिविषयतायाः पृथिवीवृत्तित्वेन पृथिवीत्वस्य तदाश्रयवृत्तित्वात , अतआह ( विशेष्यभेदेनेति ) अथ विशेष्यस्येव विशेषणस्यापि भेदेन विषयताभेदः , तथाच विषयताश्रयावृत्तीति साध्ये हेतोर्निश्चयत्वेन घटितत्वात्तद्घटकोभय प्रकारकविषयताया असिद्धत्वेना

---

[ग] शेभ्रमतया तत्रप्रमात्वरूपं साध्यन्नास्तीत्यभिमानेन प्रसक्तं गन्धवन्मात्र विशेष्यताकत्व हेतोर्व्यभिचारमित्यर्थः ( निरस्यतीति ) अभिमानंनिरस्येत्यादिः ( पृथिवीत्वांशइति ) तथाच पृथिवीत्वरूप प्रकारघटित प्रमात्वरूपस्य उक्तसाधनीय साध्यस्य तत्रसत्वान्नव्यभिचारइतिमूलार्थः । विशेष्यभेदेन विषयताभेदानभ्युपगमे पृथिवीत्वेन पृथिव्यपृथिवी विषयकज्ञाने पृथिव्यंशेपि साध्यसत्वन्ननिर्वहतीति ' विशेष्यभेदेने ' ति मूलावतरण मुक्तरीत्या पूर्वग्रन्थव्याख्यायांनसंभवतीत्यन्यथा तदवतारयति (अथतथापीति) इत्याकारकभ्रमत्वेन-उक्तसाध्यवति तादृशभ्रमत्वसत्वेन । सिद्धसाधनं - सिद्धतुल्यस्यैवसाधनं, अनुपयुक्तसिद्धिकस्यसाधनमित्यर्थः । भ्रमसाधारण धर्मस्यानुपयुक्तसिद्धिकत्वादितिभावः । अर्थान्तरं - अनुपयुक्तसाधनं । वाकारस्समुच्चये । उक्तसाध्यस्यभ्रमसाधारण्यं घटयति ( पाथोवृत्तीति ) ( पृथिवीवृत्तित्वेनेति ) विषयताभेदकप्रकारभेदविरहेण पृथिवीवृत्तिविषयत्वा भिन्नत्वेनेत्यर्थः (तदाश्रयेति ) तज्ज्ञानविषताश्रयेत्यर्थः । विशेष्यभेदेन विषयताभेदे प्रकारभेदेन तद्भेदेपि कथितसमाधानसंभवात् ' नच प्रकारभेदेन विषयताभेद ' इति मूलमनुपपत्त्यन्तराशंकया ऽवतारयति ( अथ विशेष्यस्येवेति ) ( तद्घटकोभयप्रकारक विषयतायाइति ) विरुद्धोभयप्रकारक विषय-

[म] न च प्रकारभेदेन विषयता भेदः, मानाभावात् ।

---

[दी] प्रसिद्धिरत आह ( नचेति ) (मानाभावादिति)पाथःपृथिव्योरिमे पृथिव्याविति ज्ञानं विषयताश्रयावृत्तिप्रकारकं, नतु पाथः पृथिव्या वितीति सार्वलौकिकोव्यवहारादिः , ननु संशयो न विरुद्धोभ

---

[ग] ताकान्यत्वरूपनिश्चयत्व घटकीभूतायाः स्वप्रकारविरुद्धप्रकारक विषयताया इत्यर्थः । अप्रसिद्धिः-साधनाप्रसिद्धिः । विशेष्यभेदप्रकारभेदयोरेकस्य विषयताभेदकत्वं प्रामाणिकं नापरस्येति विशेषः कथमित्याकांक्षायामाह ( पाथइति ) एतदेवव्यवहाराकारकथनम् । प्रकारकम्-प्रकारकविषयताकम् । विशेष्यभेदेन विषयताभेदविरहे पृथिवीत्वस्य तज्ज्ञानविषयताश्रयावृत्तित्व विरहेण तादृशव्यवहारानुपपत्तिरितिभावः ।

नच - विशेष्यभेदेन विषयताभेदेऽपि पृथिव्यास्तत्तज्ज्ञानविषयताश्रयत्वानपायात् पृथिवीत्वस्य विषयताश्रयावृत्तित्व न्दुर्घटमिति तादृशव्यवहारानुपपत्ति तादवस्थ्यमितिवाच्यम् ; विषयतापदस्य विषयताश्रयावृत्ति प्रकारकत्वेनोपादेय विषयताव्यक्तिपरत्वात् । एतदेवाविष्कर्तुमाह ( नत्विति ) पाथः पृथिव्योः पाथः पृथिव्याविति ज्ञानं विषयताश्रयावृत्ति प्रकारकमिति व्यवहारादिरित्यनुषंगेणान्वयोबोद्धव्यः । विषयतापदस्य तज्ज्ञानविषयतासामान्यपरत्वे जलत्वपृथिवीत्वाभ्यां पृथिवीजलादिविषयकभ्रमे नविषयताश्रयावृत्तिप्रकारकमिदं ज्ञानमितिव्यवहारापत्त्या तज्ज्ञानीय यत्किञ्चिद्विषयतापरत्वस्यैव स्वीकारे उक्तसमूहालम्बन प्रमायामपि तदनुपपत्ते स्तत्र तत्र विषयतापदं समभिव्याहृतपरमेवेतिभावः ।

यद्यप्याश्रयपदस्य यत्किञ्चिदाश्रयपरत्वे पाथः पृथिव्योरिमे पृथिव्याविति ज्ञानं विषयताश्रयावृत्तिप्रकारकमिति व्यवहारस्य विषयत्वाभेदे प्युपत्तिः; तथापि तथासति पृथिव्या अपि तदाश्रयतयाश्रयपदस्य तत्परतया

[दी] यप्रकारक विषयताकइति कस्यापि, प्रत्युतविपरीतएवेतिभावः।

---

[ग] नाविषयताश्रयावृत्ति प्रकारकमिति व्यवहारस्यापत्ति र्दुर्वारैवेति-बोद्धयम् ।

एकप्रकारकस्या प्युभयविषयकज्ञानस्य उभयवृत्त्येकविषयता स्वीकारे तत्प्रकारकप्रत्येकविषयकज्ञानीय प्रत्येकवृत्तिविषयता द्वयातिरिक्तविषयताकल्पने गौरवमिति विषयताभेदमते प्रत्येकविषयकज्ञानस्थ प्रविषयता द्वयादेवोपपत्तिरितितु तत्त्वम् । 'नतु कस्यापि व्यवहारादि' रित्यनुषंगेणान्वयः।

नच प्रकारभेदेन विषयताभेदेपि विरुद्धोभयप्रकारकविषयताया अप्रसिद्धया नविरुद्धोभयप्रकारक विषयताकइति व्यवहारस्य नापत्तिरितिवाच्यम् ; तथासति तत्प्रकारकविषयतायां तद्विरुद्ध प्रकारकत्वाभाव तात्पर्येण तथाव्यवहारापत्तेः, तादृशशब्देन तथाविषयतायां तादृशाभावस्या बोधनात्। विषयताभेदे नोक्तबाधक संभवइत्यत उभयप्रकारक विषयतायां अभेदसाधकमाह (प्रत्युतेति) (विपरीतइति) संशयउभयप्रकारकविषयताक इत्याकार इत्यर्थः । व्यवहारादिरित्यनुषज्यते ।

नन्वाश्रयभेदेन रूपभेदेपि यथोभयरूपं पश्यतीति व्यवहारो द्वित्वेनोपस्थितयो धर्मिणोः प्रत्येकमाधेयत्वयो रन्वयात्तयोः प्रत्येकं रूपद्वये अन्वयादबाधितार्थक स्तथा विषयताभेदेप्युभयप्रकारक विषयताकइति व्यवहारोपि ; नच प्रकारभेदेन विषयताभेदे गौरवाल्लाघवेनैकविषतासिद्धि रिति वाच्यम् , एकैकप्रकारक विषयताद्वयस्य प्रत्येकनिश्चये क्लृप्तत्वादुभयप्रकारक ज्ञाने एकविषयतास्वीकारएवाधिक विषयताकल्पने न गौरवात्।

नच - भावाभावोभयप्रकारक संशयस्या व्याप्यवृत्तित्व ज्ञानासत्वे विरोधानुपस्थितिदशाया मप्यानुभाविकतया विरोधाविषयकस्य तदुभयप्रकारक समुच्चयवैलक्षण्यायसंशये उभयप्रकारकैक विषयताकल्पनमावश्यकमिति वाच्यम् ; एवं सति समुच्चये प्रकारभेदेन विषयता

[दी] वस्तुतो विशेषणभेदेन विषयताभेदेपि एकधर्मिकामिथो विरुद्ध प्रकारकविषयताद्वय प्रतियोगित्वं संशयत्वं सुवचं । स्वव्यधिकरण पृथिवीत्व प्रकारक विषयताको न, गन्धासमानाधिकरण पृथिवीत्वप्रकारक विषयताकान्यत्वादित्यपि प्रकारस्सम्भवति। अत्रच पृथिवी तदितरविशेष्यक समूहालम्बनप्रमायाः पक्षत्वेपि

---

[ग] भेदस्यावश्यकत्वे तत्रैव विरुद्धोभयप्रकारक विषयताकान्यत्वरूप निश्चयत्वघटित हेतो विषयताश्रयावृत्तीत्यादि साध्यव्यभिचारित्व मावश्यकम् ।

वस्तुतः शुद्धद्रव्यत्वावच्छेदेन पृथिवीत्वं निर्गन्धद्रव्यत्वावच्छेदेन तदभावमवगाहमाने संशयेपि विशेष्यतावच्छेदकन्यूनाधिकभावेन विशेष्यवृत्ति विषयताभेदस्यावश्यकतया संशयसमुच्चयवैलक्षण्यमन्यथैवोपपादनीयमित्यालोच्य स्वयं प्रकारभेदेन विषयताभेदमभ्युमगम्यापि-प्रकृतहेतुघटक निश्चयत्वमन्यथा निर्वक्ति ( वस्तुतइति ) ( एकधर्मिकेति ) स्वनिरूपितविषयताप्रकारविरुद्ध प्रकारकविषयताकत्व मित्यर्थः । विरुद्धत्वं वास्तवं ( संशयत्वं सुवचमिति ) तथाच तादृशसंशयत्व शून्यत्वमेवा व्याप्यवृत्तित्व भ्रमविषयविरुद्धोभयप्रकारक समुच्चयादपि व्यावृत्तं निश्चयत्वं हेतुप्रविष्टमिति भावः । हेतौ निश्चयत्वमनिवेश्यापि विषताश्रयावृत्तीत्यादि साध्ये पृथिवीत्वात्मक प्रकारं - निवेश्य तत्साधकमनुमानं परिष्करोति ( स्वव्यधिकरणेति ) स्वं - विषयता । पृथिवी नवेति संशये पृथिवीवृत्तिविषयतायाः स्वव्यधिकरणपृथिवित्वाभाव प्रकारकत्वेपि तद्वैयधिकरण्यं न पृथिवीत्वरूपप्रकारस्येति जलादौ पृथिवीत्वभ्रमविषयतैव स्वव्यधिकरणपृथिवीत्वप्रकारिका, तादृशविषयताकान्यत्वरूपं साध्यं तत्संशयअक्षतमेवेतिभावः । पाथः पृथिव्योरिति वक्ष्यमाणसमूहालम्बन साधारण्याय हेतौविषयतायां पृथिवीत्वप्रकारकत्वं विशेषणं, तथाच तादृशसमूहालम्बने पृथिव्यां पृथिवीनवेति संशयेच्च तदानीं हेतुसाध्ययोःसत्वेनपक्षान्तर्भावएव सम्भवतीत्याह ( अत्रचेति ) नन्वेवंयत्र

[प्र] यत्त्वियं पृथ्वीत्वनुभवः पृथिवीत्वसमानाधिकरणधर्मावच्छि-न्नपृथिवीविशेष्यकविषयताकः, पृथिवीत्वव्यधिकरणधर्मानवच्छि न्नपृथिवीविशेष्यकविषयताकः , पृथिव्यवृत्तिधर्मानवच्छिन्नपृ-थिवीविशेष्यकविषयताको वा ; गन्धासमानाधिकरणधर्मप्रका रकविषयताप्रतियोगिज्ञानत्वात् , अगन्धवदवृत्तिपृथिवीत्वप्रकारक विषयताकत्वात् , गन्धसमानाधिकरणविषयताप्रतियोगिज्ञानत्वा-द्वेति । तन्न , साध्याप्रसिद्धेः । किन्त्वर्थादेव तत्सिद्ध्य-ति । एवं यत्प्रकारव्याप्यतया यद्गन्धस्नेहसमर्थप्रवृत्तिजनक-त्वकरम्बरूपाद्दिकमवगतं तद्वति तत्प्रकारकज्ञानत्वमेव प्रामाण्ये लिङ्गम् । ननु वह्निज्ञानस्य दाहसमर्थविषयत्वं न दाहसम-र्थोऽयमितिव्यवसायगम्यं ज्ञानविषयतयोस्तदविषयत्वात् । ना पि तदनुव्यवसायगम्यं पुरोवर्तिदाहसामर्थ्यस्य तदगोचरत्वा त् । व्यवसायोपनीतदाहसामर्थ्यस्य च भाने तदसामर्थ्यात् । अन्यथा व्यवसायोपनीतस्य पुरोवर्तिनि वह्नित्वस्य अनुव्यव-सायविषयत्वे स्वतः प्रामाण्यग्रहापत्तेः । एवं पृथिवीजलज्ञा नयोर्गन्ध-स्नेहवद्विषयकत्वग्रहोऽप्यनुपपन्न इति । उच्यते । व ह्नित्वप्रकारकज्ञानानुव्यवसाये सति

---

[दी] न क्षतिः ( समर्थप्रवृत्तिजनकत्वेति) प्रामाण्यज्ञान प्रामाण्यानुमा नाभिप्रायेणेति सम्प्रदायः ।

---

[ग] कारव्याप्यतयेत्यादि निखिलज्ञानप्रामाण्यसाधक लिंगसंगमनपरमूले-समर्थप्रवृत्तिजनकत्वस्य गन्धादिसमभिव्याहारेणोपादानमनुपपन्नं, ताव-तएव ज्ञाननिष्ठस्य प्रामाण्यलिंगतया तद्वतितत्प्रकारकत्वं प्रामा-ण्यलिंगमित्यत्र तत्पदेन तत्परामर्शविरोधात् , वह्निरित्यादिज्ञानस्य समर्थप्रवृत्तिजनकत्ववद विशेष्यकत्वादित्याशंकायां सम्प्रदायसमाधा नमाह ( प्रामाण्यज्ञानप्रामाण्येति ) सर्वादिप्रवृत्तिजनकत्ववति प्रा-माण्यप्रकारकत्वस्य तादृशप्रामाण्यलिंगत्वसम्भवेना विरोधादितिभा -

[म] तत्र विषये दाहसामर्थ्यज्ञानानन्तरं स्मृत्युपनीते वह्निव्यवसाये

[ दी ] परंतु वह्निज्ञानस्य दाहसमर्थगोचरप्र - वृत्तिजनकतावच्छेदकं जननियामकं विषयनिष्ठं दाहसामर्थ्यमि त्यर्थः । अतो नविषयवृत्तिगन्धादिसमभिव्याहार विरोधइत्याहुः ( ज्ञानानन्तरमिति ) तदनुव्यवसाये सतीति वस्तुस्थितिः । केचित्तु उपस्थितयोर्दाहसमर्थ वह्नित्वप्रकारकज्ञानयो र्विषयविष यिभावो मनसा गृह्यते, अनन्तरं - तेनैव विशिष्टमित्याहुः ।

[ग] वः । एतद्व्याख्याने पृथिवीत्वादिप्रकारक ज्ञानइव वह्नित्वप्र- कारकज्ञाने प्रामाण्यसाधकानुमानलिंगस्या कथनात् न्यूनतेति- समर्थप्रवृत्तिजनकत्वेत्येतद्वह्निनिष्ठ दाहसामर्थ्यपरतया वर्णयतान्मत- माह ( परंत्विति ) ( जननियामकमिति ) जननप्रयोजकमित्यर्थः । वह्नित्वप्रकारकज्ञानजन्यप्रवृत्ते र्दाहसमर्थविषयता प्रयोजकमितिसमु- दितार्थः । विषयनिष्ठन्तु-वह्नित्वप्रकारकज्ञानविषयनिष्ठम् । ( दाहसाम- र्थ्यमिति ) तादृशज्ञानविषये दाहसामर्थ्यासत्वे तज्जन्यप्रवृत्तिविषयेपि तत्स त्वन्नस्यात्, प्रवृत्तेर्जनकज्ञानसमानविषयकत्व नियमादिति तज्ज्ञानविषय स्य दाहसामर्थ्यं प्रवृत्तेर्दाहसामर्थ्य विषयता प्रयोजकमितिभावः । " वह्नि त्वप्रकारकज्ञानानुव्यवसायेसति " इत्यादिमूलेस्मृत्युपनीत वह्नित्व- प्रकारक ज्ञाने स्मृत्युपनीत दाहसमर्थविषयकत्वं विशिष्टं मनसा प- रिच्छिद्यतइति यदुक्तं तद्दाहसमर्थविषयकत्वस्य पूर्वमननुभवे स्मरणा योगात् न संगच्छत इत्यत आह ( तदनुव्यवसायेसतीति ) दाहस मर्थत्वज्ञानाद्व्यवसाये सतीत्यर्थः ( वस्तुस्थितिरिति ) व्यवसाये स त्यनुव्यवसाय इत्युत्सर्गलब्धमित्यर्थः । तथाच तादृशव्यवसाये दाह- समर्थविषयकत्वं भासते, तद्वद्विषयकत्वावच्छेदेन तत्प्रकारकत्वम्य हएव ज्ञानप्रत्यासत्त्य सहकृतमनसो सामर्थ्यादित्युत्तरकालं तस्य - स्मरणसम्भवइति भावः । दाहसमर्थविषयकत्वरूप विशिष्टस्य स्मर णमन्तरेणापि तदुपनीतभानमुपपादयता मन्येषाम्मतमाह ( केचित्त्वि- ति ) ( उपस्थितयोरिति ) इदन्त्वावच्छिन्न विषयतानिरूपित वह्नित्व

[दी] 'जन्यज्ञानग्राह्यत्वादि' ति क्वाचित्कपाठे प्रामाण्यग्रहस्येत्यनन्तरं जननइत्यध्याहार्यम् ।

---

[ग] प्रकारताशालिज्ञानत्वेन ज्ञानस्य दाहसमर्थस्यच उपस्थितौ इदन्त्वावच्छिन्नविषयतांशे दाहसामर्थ्यविशेषित धर्मिविशेषणकं मानसम्प्रथमनुत्पद्यते, तावता दाहसमर्थविषयतारूपविशिष्ट विशेषणोपस्थितौ निरूपितत्वसम्बन्धेन तादृशविशेषणविशिष्ट वह्नित्वप्रकारकत्वरूप हेतोर्मनसैव परिच्छेद इत्यर्थः । एवंचानुव्यवसायस्य ज्ञानानुपनीतव्यवसायप्रकार विशिष्टधर्मि विषयकत्वमात्र ग्रहएवा सामर्थ्येऽपि न क्षतिरिति भावः। एवंचसति "स्मृत्युपनीत दाहसमर्थविषयत्व" मिति-मूलस्यस्मृत्युपनीतो यो दाहसमर्थस्तद्विशेष्यतया मानसज्ञाने भासमानं यत स्मृत्युपनीत विषयत्वं तस्य स्मृत्युपनीतव्यवसायीय वह्नित्वप्रकारकत्वे मानसो निश्चयइति मूलार्थः । ननु विशिष्टविषयत्वं स्मृत्युपनीतमिति । अत्रच वह्नित्वप्रकारकस्येव दाहसामर्थ्यप्रकारकस्यापि ज्ञानस्यानुव्यवसायेसति विशिष्टस्यैवानुभूततया स्मरणसम्भवेन स्मृत्युपनीत-दाहसमर्थ विषयत्वमिति मूलस्य यथाश्रुतपरतासम्भवे किमेतावता प्रयासेन, व्यवसायप्रकारविशिष्ट धर्मिविषयकत्वस्यच तत्प्रकारकत्वावच्छेदकत्व विनिर्मुक्तस्य ग्रहे ऽनुव्यवसाय सामर्थ्यं प्राग्व्यवस्थापि तमेवेत्य स्वरसबीजम् । मनसाचैवं प्रामाण्यग्रहस्य तज्ज्ञानविषयकजन्यज्ञानजन्यत्वादिति मूलपाठः सुगमएव । जन्यज्ञानग्राह्यत्वादिति मूलपाठेग्रहस्य ग्राह्यत्वाभिधानमसंगतं, तद्विषयप्रामाण्यस्यैव ग्राह्यतायाः प्रकृतत्वादतस्तत्पाठं संगमयति ( जन्यज्ञानग्राह्यत्वादिति ) ( जननइत्यध्याहार्यमिति ) एवंच-एवंरीत्याप्रामाण्यग्रहस्य मनसाजनने सतीत्यर्थः । नपरतस्त्वहानिरित्यत्र प्रामाण्यस्येत्युभयपाठ एव पूरणीयतया तस्य ग्राह्यतालाभाज्ज्ञानयोरेतस्य पूरणीयत्वमभिहितम् । इदं शरीरज्ञानं प्रमेत्यत्र भ्रमत्वाभावरूपप्रामाण्यस्य साध्यत्वे शरीराशरीरयो श्शरीरत्वभ्रमेव्यभिचारः , भावरूपप्रामाण्यस्य पूर्वं प्रसिद्ध्या तत्साध्यतयै-वोपपत्तौ करादिमन्मात्रविशेष्यकत्वपर्यन्तस्य हेतुप्रवेशोनुचितः , अभा-

[ म ] स्मृत्युपनीतदाहसमर्थविषयकत्वम् , एवं जल-पृथिवी ज्ञानयोः स्मृत्युपनीतयोः ज्ञानोपनीत –स्नेहगन्धवद्विषयकत्वं मनसा परिच्छिद्यते; गन्धादि मत्येव मम पृथिवीत्वाद्यनुभव इति गन्धादि मत्त्वपरिच्छेदानन्तरमनुभवात । स्मृत्युपनीते धूमादौ व्याप्तिपरिच्छेदवत् चक्षुषा चन्दनेसौरभज्ञानवच्च । तर्हि पृथिवीत्वज्ञाने गन्धवद्विशेष्यकत्ववत् चक्षुषा गन्धवति पृथिवीत्वोपनयानन्तरमियं पृथिवीति पृथिवीत्वप्रकारकानुभवे उपनीते पृथिवीत्ववति पृथिवीत्वप्रकारकत्वं, तथा तत्रैव ज्ञाने घटत्वप्रकारकताविरहवत् पृथिव्यवृत्तिप्रकाराभाववत्त्वं , विशेष्यावृत्तिप्रकाराभाववत्त्वं वा प्रामाण्यं मनसैव परिच्छिद्यतामिति स्वतएवं प्रामाण्यग्रह इति चेत ? न , ज्ञानान्तरोपस्थापितज्ञानवृत्तिप्रामाण्यग्रहे परतस्त्वानपायात् । यावज्ज्ञानग्राहकसामग्रीग्राह्यत्वम् , यावस्त्वाश्रयग्राहकग्राह्यत्वम् , तज्ज्ञानविषयकजन्यज्ञानाजन्यजन्य ज्ञानग्राह्यत्वं वा स्वतस्त्वम् , तदन्यथाग्राह्यत्वन्तु परतस्त्वं, मनसा चैवं प्रामाण्यग्रहस्याभ्युपगमे तज्ज्ञानविषयकजन्यज्ञानजन्यज्ञानग्राह्यत्वान्न परतस्त्वहानिः । व्यतिरेक्यनन्तरं तज्जातीयत्वेनान्वयिना प्रामाण्यानुमानम् । यथा-इदंशरीरज्ञानं प्रमा, कर-चरणवति शरीरज्ञानत्वात् ; स्वशरीरज्ञानवत ।

---

[दी] प्रमा – शरीरत्ववति शरीरत्वप्रकारकं ज्ञानम् । करचरण योः प्रत्येकमेव हेतौ प्रवेशः ।

---

[ग] वरूपप्रामाण्यस्य साध्यत्वे हेतुघटकशरीरत्वप्रकारकत्वस्यापि वैय्यर्थ्यमित्याशयेन व्याचष्टे ( शरीरत्ववतीति ) शरीरत्ववद्विशेष्यकमित्यर्थः । हेतुप्रविष्टज्ञानत्वसार्थक्याय साध्येपि ज्ञानत्वमन्तर्भावयति (ज्ञानमिति) करचरणयोः प्रत्येकमेव शरीरत्वव्याप्यतया एकत्रोभयप्रवेशे वैयर्थ्यमित्याशयेनाह ( करेति ) मूले प्रमापदस्य विशेष्यावृत्तिप्रकारकान्यत्वपरताभिमानेन बाधितकरादि विषयक शरीरत्व विशिष्टज्ञानेव्यभिचार-

[म] न च कर-चरणान्तरवति कर-चरणान्तरवत्त्वज्ञाने व्यभिचारः, शरीरांशे तस्य प्रमात्वात् ।

एतेन कर-चरणवति शरीरज्ञानत्वादित्यत्र कर-चरणवत्त्वं नोपलक्षणं, व्यावृत्तोपलक्ष्याभावात्;न च विषयतया ज्ञानविशेषणं, कर-चरणवत्त्वप्रकारकशरीरज्ञानत्वस्य व्यभिचारात्, शरीरमिति ज्ञाने तदसिद्धेश्च । विषयविशेषणत्वे कर-चरणवद्विषयकशरीरज्ञानत्वस्य व्यभिचारात्, शरीरभ्रमस्यापि वस्तुतः करादिमद्विषयकत्वात्; नापि कर-चरणादिशून्ये यच्छरीरत्वेन ज्ञानं तदन्यत्वे सती

---

[ दी ] ( व्यावृत्तेति ) भ्रमव्यावृत्तेत्यर्थः ।

---

[ग] शंका(नचेति) अभिमाननिराकारणेनसमाधानम् (शरीरांशइति) (नोपलक्षणमिति ) नेत्यनन्तरं ज्ञानइतिबोद्धव्यं । तदुपलक्षणत्वंच तद्व्यावर्त्तकधर्मान्तरोपस्थापकत्वं । व्यावृत्तोपलक्ष्याभावात्-व्यावृत्तस्य-उपस्थाप्यस्याभावात् ; व्यावृत्ततया सुग्रहस्य धर्मान्तरस्यानुपस्थापनादितियावत् ।

एतेन वस्तुतोभ्रमव्यावृत्तस्य विषयताविशेषस्य विषयतात्वतद्व्यक्तित्वादिना उपस्थितिसम्भवेपि नक्षतिः ।

विषयतादेर्निर्विषयकादि व्यावृत्तत्वं सुग्रहमेवेति व्यावृत्तपदं विशेषपरतया व्याचष्टेदीधितौ ( भ्रमेति ) भ्रमव्यावृत्तत्वं -भ्रमावृत्तित्वं, तदग्रहेच भ्रमसाधारण्यशंकया व्यभिचारशंकाया अनिवृत्तिरितिभावः । “ ज्ञानविशेषण ” मिति मूलं अतोज्ञानव्यावर्तकमित्यर्थकं । व्यभिचारात् - भ्रमसाधारण्यात ( शरीरमिति ज्ञाने-करादयविषयके । तदसिद्धेः-विषयितया करादिमत्वासिद्धेः ( विषयविशेषणत्वइति)आश्रयतया शरीरभिन्नशरीरत्वारोपविशेष्याद्विषयितया ज्ञानविशेषणविषयस्य व्यावर्त्तनेन ताद्दशभ्रमात् स्वघटितहेतोर्व्यावर्त्तकत्वेपीत्यर्थः। करचरणवद्विषयकशरीरज्ञानत्वस्य इदानीमभिमतस्यताद्दशज्ञानत्वरूपहेतोः । व्यभिचारात् - शरीराभेदभ्रमेव्यभिचारात् । व्यभिचारं स्फुटयति (शरीरभ्रमस्यापीति) ( करादिमद्विषयकत्वादिति ) विशेषणतयेत्यादिः ।

[म] ति विवाक्षितम्, शून्य इत्यत्र विषयत्वं सप्तम्यर्थ इति कर-चरणशून्यविषयकशरीरज्ञानान्यशरीरज्ञानत्वादित्यर्थः, तथाचासिद्धिः, शरीरज्ञानस्य तच्छून्यशरीरत्वादिविषयकत्वानियमात्। न वा कर-चरणशून्ये यच्छरीरत्वेन ज्ञानं न भवतीति विवक्षितं,

---

[दी] असिद्धिः – अप्रसिद्धिः । (नवेति) आद्येसप्तम्यर्थेनात्रच तृतीयार्थेन व्यभिचारवारणे तात्पर्यान्नाभेदः ।

---

[ग] 'तथाचासिद्धिरि' त्यत्रा सिद्धिपदस्य पक्षेहेत्व सिद्धिपरता नसम्भवति, हेतोरेवाप्रसिद्धेरिति तद्व्याचष्टे (असिद्धिरिति) नवेत्यादिनाग्रिमेणशंकनीयस्य पूर्वं नचेत्यादिनैवाशंक्यनिराकृतत्वात् पौनरुक्त्यमाशंक्याह (आद्यइति) सप्तम्यर्थेन, व्यभिचारवारणे तात्पर्यादितियोजना । "करचरणशून्य" इति सप्तम्यन्तेन यत्प्रतिपाद्यतेतस्योक्तभ्रमेसत्वात्तदन्यत्वे सतीत्यतं नभ्रमेइति तात्पर्यादित्यर्थः । अतएव दूषणदशायां ' विषयत्वं सप्तम्यर्थ ' इत्यनेन सप्तम्यर्थ एव विवृतइतिभावः । अत्रशरीरत्वप्रकारकप्रमाया अपि करचरणशून्यशरीरत्वविषयकत्वादप्रसिद्धिरिति दूषणमयुक्तम्, तज्ज्ञानस्य तच्छून्यविषयकत्वेपि शरीरत्वेनेति तृतीयापर्यन्तेन यथा प्रतिपाद्यते तथात्वाभावात ;अत उक्तविवक्षयैव व्यभिचारोवारणीय इति नचेत्याद्यग्रिमशंकार्थ इत्याह (अत्रच तृतीयार्थेनेति) तृतीयार्थस्या प्रसिद्धिवारकतया विवक्षितपरिष्कारकत्वेन विवक्षाधीनव्यभिचारवारणोपयोगिताबोद्ध्या ।

यद्यपि शरीरमिदमित्यादि प्रमा यदि शरीरत्व त्वेन नशरीरत्वादिविषयिणी, अपितुतद्रूपेण शरीरमात्रविषयिण्येव, तदाशरीरमिदमित्यशरीरे शरीराभेदारोपोपि शरीरत्वेन शरीरमात्रं विषयइति करादिशून्यस्य यच्छरीरत्वेन ज्ञानंतदन्यत्वं तत्राक्षतमेवेति व्यभिचारोदुर्वारः, तथापि शरीरत्व विशिष्टस्या भेदारोपे विशेष्यांशेपि शरीरत्वं नियम

[म] तृतीयार्थस्यविषयत्वे उक्तदोषात्; अन्यस्यासम्भवादिति निरस्तम् । कर-चरणवद्विशेष्यकशरीरत्वप्रकारकज्ञानत्वस्य हेतुत्वात्, शरीरभ्रमे च कर-चरणवतः शरीरस्य विशेषणत्वात् । विषयतापक्षे करचरणादिशून्यनिष्ठशरीरत्व प्रकारकविषयता प्रतियोगित्वशून्यत्वे सति शरीरज्ञानत्वादिति हेतुः ।

---

[दी] (करचरणेति) विशेष्यतावच्छेदेन प्रकारता बोध्या । तेन विपरीतचतुष्कादौ न व्यभिचारः । (शरीरस्येति)

---

[ग] तोभासतइत्यभिप्रायेणाशंकासंगतिः । मूले ( विषयत्वइति ) विषयतारूपत्व इत्यर्थः । ( उक्तदोषादिति ) विषयतारूपस्य तृतीयार्थस्य ज्ञानएवान्वयात् करादिशून्यशरीरत्वादि निष्ठविषयताया स्वेना व्यावृत्त्या अप्रसिद्धितादवस्थ्यादितिभावः । दीधितौ-( विशेष्यतावच्छेदेनेति ) विशेष्यताप्रकारतयो वैयधिकरण्येपि निरूपकतासम्बन्धेन ज्ञानेसम्बद्ध्यमानयो रवच्छेद्यावच्छेदकभावाविरोधइति ध्येयम् । ( विपरीतचतुष्कादाविति ) शरीराशरीरयो रशरीरत्व शरीरत्वभ्रमादावित्यर्थः ) आदिपदेन शरीरेद्रव्यत्वादिमात्र मशरीरेच शरीरत्वमवगाहमानस्य परिग्रहः । शरीरविशेष्यतावच्छिन्न शरीरत्व प्रकारता शालित्वरूपप्रामाण्यस्य तत्रासत्वाद्व्यभिचार प्रसक्तिः । विशेष्यताप्रकारतयो रवच्छेद्यावच्छेदकभावा घटितस्य शरीरविशेष्यकत्वे सति शरीरत्वप्रकारकत्वस्य भ्रमसाधारणतया तत्सिद्धे रनुद्देश्यतया तस्या साध्यत्वादिति भावः ।

ननु 'शरीरस्य विशेषणत्वादि' त्ययुक्तं, शरीरभिन्ने तस्याभेदेन विशेषणत्वेपि शरीरत्वादिविशेष्यतया तस्य विशेषणतया-विशेष्यताघटितस्यापि हेतोरभेदभ्रमव्यावृत्ता वनुपयोगित्वात्तादृशभ्रम-

[दी] तथाच साध्यहेत्वोर्मुख्यैव विशेष्यताप्रविष्टेति न सिद्धसाधनव्य भिचारयो रवकाशः । पृथिव्यादिज्ञानन्तु पृथिव्याद्यप्रकारकमेव पक्षः । अतो नाभेदारोपतया ऽर्थान्तरस्यावकाशः । अभेदारोपेतु विशेषणांशे साध्यसत्त्वान्नव्यभिचारइति ऋजुरेव पन्थाः । मिश्रमतेऽनुव्यवसाय प्रामाण्यस्यानुव्यवसायान्तर ग्राह्यत्वादनवस्थे त्यपि द्रष्टव्यं । प्रामाण्यस्य स्वग्राह्यत्वं – स्वविषयत्वं , स्वस्य

---

[ग] स्य शरीरत्वांशे शरीरविशेष्यकत्वेन साध्यसत्त्वाच्चेत्यत आह ( तथाच्चेति ) शरीरस्याभेदारोपे विशेषणत्वेचेत्यर्थः ( मुख्येति ) इतरविशेषणतानवच्छिन्न इत्यर्थः ( नसिद्धसाधनेति ) साध्ये मुख्यविशेष्यतानिवेशात साध्यस्य भ्रमसाधारण्यप्रयुक्ताया उद्देश्यासिद्धेः, हेतोस्तत्साधारण्य प्रयुक्तस्य उक्तयुक्त्या मुख्यविशेष्यतया घटितस्य साध्यस्यहेतौ व्यभिचारस्यच नावकाशइत्यर्थः । उभयत्र मुख्यविशेष्यतानिवेश्यापि स्वयमुद्देश्यासिद्धिं व्यभिचारंच वारयति(पृथिव्यादिज्ञानन्त्विति)आदिना शरीरादिपरिग्रहः (पृथिव्याद्यप्रकारकमिति)पृथिव्याद्यप्रकारकत्व विशेषितमित्यर्थः । तथाच तदभेदारोपे तदप्रकारकत्वासत्त्वेन तादृशपक्षतावच्छेदक सहितस्य पृथिवीत्वादिमति तत्प्रकारकत्वरूप साध्यस्यारोप व्यावृत्ततया तत्सिद्धा वुद्देश्यसिद्धिरित्याह(अतइति) (विशेषणांशे साध्यसत्वादिति)इतरविशेषणतापन्नस्य विशेष्यतामादाय साध्यसत्वादित्यर्थः । निश्चितप्रामाण्यकस्यैवव्यवसाये तत्प्रामाण्यादिज्ञानस्य निश्चयकार्यकारित्वे भट्टमते व्यवसाये ज्ञातता लिंगक तत्प्रामाण्यानुमित्यादिष्वनवस्थित प्रामाण्यानुमिति परंपरायाइवमुरारिमतेप्यनवस्थित व्यवसाय प्रामाण्यविषयक तदनुव्यवसाय तत्प्रामाण्य विषयक तदनुव्यवसायादि घटितानुव्यवसायधारायाः कल्पनापत्तिरस्तीति न्यूनताभंगाय दर्शयति(मिश्रमतइति)स्वजन्यग्रहविषयत्व रूपं स्वग्राह्यत्वं गुरुमतेपि प्रामाण्यस्येति स्वग्राह्यत्वं व्याचष्टे (स्वविषयत्वमिति) तद्ग्रहस्यानुपयुक्तत्वेऽनभ्युपगमसम्भवान्नानवस्था प्रसक्तिरिति प्रामाण्यघटित प्रामाण्यग्रहे तदुपयोगितां घटयिष्यन् तस्य प्रामाण्यवति प्रामाण्यावगाहित्वघटकता माविष्करोति ( स्वस्येति ) व्यवसायस्येत्यर्थः । व्यव

[म] ननु नान्य गृहीतप्रामाण्यं ज्ञानं परप्रामाण्यनिश्चयरूपं, अनवस्थानात् । नापि स्वज्ञायमानप्रामाण्यम्, स्वतः प्रामाण्यग्रहापत्तेः । अतो ऽगृहीतप्रामाण्यमेव ज्ञानं परप्रामाण्यनिश्चयरूपमास्थेयम् । तथा च व्यवसायोऽप्यगृहीतप्रामाण्य एव स्वविषयं निश्चाययतु, किं विषयनिश्चयार्थं तत्प्रामाण्यनिश्चयेन । अथ व्यवसायस्याप्रामाण्यदर्शनान्न तन्मात्रादर्थनिश्चयः ; तर्हि प्रामाण्यानुमितेरप्यप्रामाण्यदर्शनान्न ततोपि प्रामाण्यनिश्चय इति चेत् । न ब्रूमो ज्ञानप्रामाण्यनिश्चयादेवार्थनिश्चय इति, किन्तु यत्राप्रामाण्यशंका नास्ति करतलामलकादिज्ञाने तत्र व्यवसाय एवार्थनिश्चय इति तत एव प्रवृत्तिर्निष्कम्पा ; यत्रानभ्यासदशायां प्रामाण्यसंशयेनार्थनिश्चयं परिभूयार्थसंशयः तत्र प्रामाण्यनिश्चयाधीनज्ञानादर्थं निश्चित्य निष्कम्पं प्रवर्त्तते नान्यथेति सर्व्वानुभवसिद्धम् । अतएवागृहीतप्रामाण्यमेव ज्ञानं परप्रामाण्यं निश्चाययति, अप्रामाण्यशङ्काकलङ्काभावात् । यत्र तु प्रामाण्यज्ञाने अप्रामाण्यशंकया प्रामाण्यसंशयः तत्र

---

[दी] प्रामाण्यविषयकत्वमिति यावत् । तद्ग्रहंविना तद्घटितप्रामाण्यग्रहायोगादिति तत्तत्प्रामाण्यधाराघटित प्रामाण्यप्रवाह ग्राहित्वे व्यवसायस्य विषयापर्यवसानमेव स्यात, तथाचावश्यं कस्यचित्प्रामाण्यस्य परतस्त्वं वक्तव्यम्, एवं तदादिघटित प्रामाण्येपीत्यनवस्थेत्यर्थः ।

---

[ग] सायस्य यत्प्रकारकत्वं न्यायमतसिद्धं तद्घटितप्रामाण्य बहिर्भावेन मूलकृतस्तादृशप्रामाण्यावगाहितायाव्यवसायग्राह्यताखण्डनमसंगतं, तद्बहिर्भावेपि तस्याव्यवसायग्राह्यतासम्भवात ; अतो विषयानवस्थया तन्निराकरोति (तत्तदिति)परतस्त्वम्–अनुमित्यादि मात्रग्राह्यत्वं । (तदादीति) तत्प्रामाण्यादीत्यर्थः । परतस्त्वं वक्तव्यमित्यनुषज्यते । अनवस्था-अनुमित्यादि

[म] प्रामाण्यज्ञाने प्रामाण्यनिश्चयादेव प्रामाण्यनिश्चयः, एवं यावद्प्रामाण्यशंकं तज्ज्ञानप्रामाण्यनिश्चयादेव तन्निश्चयः । न चैवमनवस्था, चरमज्ञानप्रामाण्यज्ञानज्ञानस्य ज्ञानाभावेन कोटिस्मरणाभावेन विषयान्तरसञ्चारेण वा प्रामाण्यसंशयानवश्यम्भावात् । अन्यथा भट्टमते प्रामाण्यस्य ज्ञानानुमितिग्राह्यत्वेनानवस्था स्यात् । गुरुमते च प्रामाण्यस्य स्वग्राह्यत्वं न स्वग्राह्यं स्वरूपप्रामाण्याभ्यां बहिर्भूतत्वात्; परग्राह्यत्वे ऽनवस्थानात् किन्तु परिशेषानुमानेन प्रमाणान्तरेण वा ग्राह्यं, तथा च तत्प्रामाण्यस्यापि स्वग्राह्यत्वमन्येनैवेत्यनवस्थैव ।

---

[ग] रूप प्रामाण्यज्ञानप्रवाहा विश्रान्तिः । एतादृशानवस्था प्रसंजकपरिशेषानुमानादि ग्राह्यताभ्युपगमे पराग्राह्यत्वे सति ग्राह्यत्वरूपपरिशेषानुमान सिद्ध्यर्थमुक्तं मूले(परग्राह्यत्वे नवस्थानादिति) तस्यानवस्थिताविच्छिन्नानुव्यवसाय प्रवाहकल्पनाभयेन ज्ञानस्यानुव्यवसाय ग्राह्यत्वानंगीकारादित्यर्थः ।

पूर्वव्यवसाये विशेषदर्शनामूलके प्रामाण्यसंशये सति प्रामाण्य निश्चयं विना नार्थनिश्चयो भवितुमर्हति, प्रामाण्यसंशयस्यार्थ संशायकत्वेन तत्संशयसामग्रीसत्वादतो निष्पंकप्रवृत्त्यनुपपत्तिरिति प्रामाण्यनिश्चयस्य प्रवृत्त्युपयोगिता मूलाभिप्रेता नोपपद्यते, धर्मिणि करादिदर्शनं विना तद्विशेष्यकपुरुषत्वादिज्ञाने प्रामाण्यानुमापक करादिमद्विशेष्यकत्व ग्रहासम्भवेन प्रामाण्यानुमित्यर्थमेव धर्मिणि करादिदर्शनस्या वश्योपेयतया ततएव पुरुषत्वादिसंशयनिवृत्त्या तन्निश्चयसंभवात् ।

नच प्रामाण्यानिश्चये उदीच्येपि तद्धर्मिकपुरुषत्वादिज्ञाने प्रामाण्यशंकासम्भवान्न निश्चयकार्यकारितेति वाच्यम्; यावद्धर्मिज्ञानादि विळम्बेनाप्रामाण्यशङ्का तावदेव ततः प्रवृत्तिसम्भवाद्विशेषदर्शन मूलज्ञाने प्रामाण्यनिश्चयं विनाप्यप्रामाण्य शंकानुदयस्य सर्वासिद्धत्वाच्च;

[ दी ] अथ किमर्थं प्रामाण्यानुमितेरनुसरणम्, पुरुषत्वव्याप्यकरादिदर्शनेन पुरुषत्वसन्देहप्रतिबन्धादग्रिम तन्निश्चयोत्पादस्याप्रत्यूहत्वात्, नहि करादेः पुरुषत्वव्याप्यत्व निश्चयमन्तरेण करादिमतिपुरुषत्वज्ञानत्वस्य प्रामाण्यव्याप्यतानिश्चयस्सम्भवति । अप्रयोजकत्वात् । करादेरदर्शनेतु हेतोरसिद्धिः । अथ प्रामाण्यसंशयजन्यार्थ संशयस्सत्यपि विशेषदर्शने प्रामाण्य निश्चयादेव निवर्ततइति तदनुसरणमिति चेन्न, नहि प्रामाण्य संशय स्संशयसामान्ये तद्विशेषेवा हेतुः, व्यभिचारात्;

---

[ग] अन्यथा पूर्वज्ञानएव प्रामाण्यानुमित्या उत्तरनिश्चये तत्प्रामाण्यशंकास्कन्दनस्य भवतोपि दुर्वारत्वादिति पूर्वपक्षयति ( अथेत्यादिना ) ननु- करादिदर्शनेपि करादेः पुरुषत्वव्याप्यतया यत्र न ग्रहस्तत्र प्रामाण्यानुमापक लिंगग्रहस्सम्भवति नत्वर्थसंशयविरोधि विशेषदर्शनं, गृह्यमाणग्राह्यव्याप्तिक धर्मदर्शनस्यैव तथात्वादित्यत आह ( नहीति ) ( अप्रयोजकत्वादिति ) करादिमतिपुरुषत्वज्ञानत्वस्य पुरुषत्ववति पुरुषत्वप्रकारत्वाव्याप्यत्वं पुरुषत्वशून्येकरादिमत्वं विनानोपपद्यतइति तद्व्याप्यत्वेकरादेः पुरुषत्वव्याप्तिभंगप्रसंगरूपस्य प्रकृतव्याप्तिग्राहकतर्कस्य करादौ पुरुषत्वाव्याप्यत्वरूपापाद्यव्यतिरेकनिश्चयं विना असंभवेन व्यभिचारशंकया प्रकृतव्याप्तिनिश्चयासंभवादित्यर्थः । करादौ पुरुषत्वव्याप्तिग्रहेपि धर्मिणि कराद्यदर्शनात्तत्र पुरुषत्वसंशयो भविष्यत्येवेत्यतआह ( करादेरदर्शनेत्विति ) धर्मिणीत्यादिः । हेतोरसिद्धिः-करादिमद्विशेष्यकत्वस्य प्रामाण्यसाधकहेतो धर्मिणि पुरुषत्वज्ञानरूपपक्षे ग्रहासंभवइत्यर्थः । तथाच प्रामाण्यानुमितिरेव कथमितिभावः । मिश्रसमाधान माशंक्य निराकरोति ( अथेति ) ( प्रामाण्यनिश्चयादेवेति ) प्रामाण्यसंशयरूप कारणविघटकादित्यादिः । प्रामाण्यसंशयस्यार्थ संशयहेतुतायामेव प्रामाण्यसंशयजन्यत्वं संशयस्य विशेषदर्शनाप्रतिबध्यत्वप्रयोजकमिति सम्भवदुक्तिकं, सैव न सम्भवतीत्याह ( नहीति ) आद्ये पक्षे दोषमाह ( व्यभिचारादिति ) अर्थनिश्चयशून्यकाले

[ दी ] संशयत्रैविध्यव्याघातापत्तेः; प्रमात्वतदभावभ्रमत्व तदभावादि संशयानां मिथो व्यभिचारात् ; सत्येकतरकोटिनिश्चये संशयानुपपत्तेश्च । अथप्रामाण्यसंशयाकालीनार्थसंशयएवार्थनिश्चयः प्रतिबन्धक इतिचेत् ? तर्हि ताहशसंशयत्वेनापि जन्यता, यतस्तदवच्छिन्नं प्रत्यर्थनिश्चयस्य प्रतिबन्धकता स्यात् । एतेन विशेषादर्शनजन्यएव संशये विशेषदर्शनं प्रतिबन्धकमिति परास्तम् , संशयमात्रस्यैव विशेषादर्शनजन्यत्वाच्च ।

---

[ग] विनापि प्रामाण्यसंशयं साधारणधर्मदर्शनादितस्संशयोत्पत्तेरिति भावः । साधारणधर्मदर्शनाद्यजन्य संशयरूपे विशेषहेतुतां दूषयति ( संशयत्रैविध्येति ) साधारणधर्मदर्शनादिसहकारेणैव अर्थनिश्चयकालीनार्थ संशयरूपविशेषे हेतुत्वमाशंक्य निराकरोति ( प्रमात्वेति ) आदिना तद्वद्भेदकोटिक संशयपरिग्रहः । कथञ्चिद्व्यभिचारवारणेपि अर्थनिश्चयकालेपि तत्प्रतिबन्धनार्थसंशयएव न सम्भवति, क्व प्रामाण्यसंशयहेतुतेति दूषयति ( सत्येकतरेति ) अप्रामाण्यशंकामुत्तेजकीकृत्या र्थनिश्चयकाले तत्संशयोपपादनेच प्रामाण्यसंशय हेतुत्वमनर्थकमित्याशयः । अर्थनिश्चयदशायां तत्संशयस्यान्यथैवोपपत्ति माशंकते ( अथेति ) (प्रामाण्यसंशयाकालीनेति ) एवञ्चैताहशविशेषानात्मकस्यापि सामान्यकार्यस्य प्रसिद्ध्या विशेषान्तरे प्रामाण्यसंशयहेतुत्वमावश्यकमिति भावः । संशयत्वस्य जन्यतावच्छेदकत्वएवैतत्सर्वं शोभते, तदेव न, तस्यार्थसमाजग्रस्तत्वादिति दूषयति ( तर्हिमिति ) ( प्रतिबन्धकत्वमिति ) प्रामाण्यसंशयस्य हेतुत्वञ्चेति शेषः । एतेन-संशयत्वस्य जन्यतानवच्छेदकत्वेन (विशेषदर्शनं प्रतिबन्धकमिति) तथाच प्रामाण्यसंशयजन्य संशये विशेषदर्शनस्याहेतुतया नतस्य विशेषदर्शनप्रतिबध्यत्वमित्यभिमानः । उक्तस्यसम्भवमप्याह ( संशयमात्रस्यैवेति ) विशेषदर्शनाभाव जन्यतावच्छेदक कोटौ प्रामाण्यसंशयाजन्यत्वस्य उक्तयुक्त्या गौरवणचानिवेशादिति भावः । माभूद्विशेषदर्शनरूप प्रतिबन्धकवशादुक्तस्थले ऽर्थसंशयस्तथापि प्रामाण्यानिश्चये तन्निश्चयरूप कारणवा-

[दी] अथ प्रामाण्यसंशयोत्तरार्थनिश्चये प्रामाण्यनिश्चयो हेतुरितिचेन्न, तादृशनिश्चयत्वेन जन्यतायां मानाभावात् । निश्चयसामान्यसामग्रीसत्वे सत्यपि प्रामाण्यसन्देहे तदुत्पादस्य दुर्वारत्वात्, नहि तदनुत्तरनिश्चयत्वेनापि जन्यता, तदवच्छिन्नं प्रति वा कस्यचित्किञ्चिद्रूपावच्छेदेन जनकता, मानाभावात्, महागौरवप्रसंगप्रतिहतत्वाच्च । एतेनाप्यर्थनिश्चयोत्तरार्थं संशयं प्रति प्रामाण्यसंशयस्य भ्रमसंशयोत्तरप्रत्यक्षं प्रति विशेषदर्शनस्यच हेतुताप्रत्युक्ता । [ अत्रकाचित्पङ्क्तिर्व्युच्छिन्ना *]

अथ भवतामपि कथं सत्यप्यर्थनिश्चये सतिच प्रामाण्यसंशये तत्संशयइति चेत, अगृहीताप्रामाण्यस्यैव विशेषदर्शनस्यप्रति

---

[ग] धेनार्थनिश्चयेपि न सम्भवतीति तन्निश्चयानुसरणमित्याशंकते(अथेति) तादृशनिश्चयत्वेन प्रामाण्यनिश्चयजन्यतां स्वीकृत्यापि तत्र प्रामाण्यनिश्चयं विना निश्चयो दुर्वारइत्यतआह ( निश्चयसामान्येति) तदुत्पादस्य - अर्थनिश्चयसामान्योत्पादस्य । ननु प्रामाण्यसंशयानुत्तरनिश्चये प्रामाण्यसंशयाभावस्य हेतुतया यावद्विशेषसामग्रीबाधेन प्रमाण्यसंशयदशायां न निश्चयापत्तिरित्यत आह ( नहीति ) ( मानाभावादिति ) निश्चयत्वस्यार्थसमाजग्रस्ततया ऽर्थनिश्चये प्रामाण्यसंशयदशायां विपरीतकोटिभान विरोधिविशेषदर्शनासत्वे विपरीतकोटेरपि भानसम्भवेन निश्चयत्वावच्छिन्नापत्त्य सम्भवे न तद्वारणान्यथा नुपपत्तिरूप प्रमाणासम्भवादिति भावः । बाधकमप्याह ( महागौरवेति ) एतेन-प्रकृतइव विशेषकारणतया सामान्यधर्मावच्छिन्नापत्तेर्दुर्वारत्वेनेत्यर्थः । अधिकारेण संशयत्वनिश्चयत्वयो स्यर्थसमाजग्रस्ततया वक्ष्यमाणहेतुताया निर्युक्तिकत्वं सूचितम् ( प्रामाण्यसंशयस्येति) हेतुतेत्यग्रिमेणान्वयः । प्रत्यक्षं- प्रत्यक्षनिश्चयं[ * ( व्याख्यातेति ) निर्युक्तिकत्वेनेत्यादिः * ] ( भवतामिति ) प्रतिबध्यतावच्छेदककोटौ प्रामाण्यसंशयाजन्यत्वमनिवेश्यैव अर्थसंशयसामान्येतन्निश्चयस्य प्रतिबन्धकत्व वादिनामित्यर्थः । विशेषदर्शनस्य- विरोधिनिश्चयस्य । अप्रामा

[ दी ] बन्धकत्वादिति गृहाण । अप्रामाण्यस्या ननुगमा त्तद्ग्रहाणामननुगमेपि न क्षतिः, प्रतिबन्धकतावच्छेदकाननुगमस्या दोषत्वात्। प्रकृतेचागृहीताप्रामाण्यस्य करादिरूपाविशेषदर्शनस्य सत्त्वान्न संशयसम्भवः।

---

[ग] ण्यस्य-नानाविधभ्रमत्व प्रमात्वाभावरूपस्य। अननुगमात् अनतिप्रसक्तैकरूपेणोपादानासम्भवात। तद्ग्रहाणामननुगमेपि-एकरूपेणाभावस्य प्रतिबन्धकतावच्छेदक कोटौ निवेशासम्भवेपि। न क्षतिः- तावदभाव-विशिष्टस्य प्रतिबन्धकत्वाद्विशेषणविशेष्य भावे विनिगमनाविरहेपि-न क्षतिः। "प्रतिबन्धकतावच्छेदकाननुगमस्या दोषत्वा" दिति-पाठः। प्रतिबन्धकतावच्छेदकाननुगमस्य - तावदभावानां विशेष्य विशेषणभावे विनिगमनाविरहेणनानात्वस्य (अदोषत्वादिति) अगत्येत्यादिः। "एकैकाभावविशिष्टस्य प्रतिबन्धकत्वात् प्रतिबन्धकतावच्छेदकाननुगमस्यवादोषत्वा" दिति क्वचित्पाठः। तत्पाठे, एकैकाभाव विशिष्टस्येत्यस्य प्रत्येकरूपावच्छिन्नाभाव कूटविशिष्टस्येत्येवार्थः। नानाविधाप्रामाण्यज्ञानानामेकत्राभाव निवेशासम्भवेपि अभावसमुदायस्यैकत्र निवेशे विशेष्यविशेषणभावे विनिगमनाविरहेण तन्निवेशासम्भवेपिच पृथक्पृथक् तत्तदप्रामाण्य ज्ञानाभाव विशिष्टत्वेन निश्चयस्य प्रतिबन्धकत्वादित्यर्थः। प्रतिबन्धकतावच्छेदकाननुगमस्य-सकलप्रतिबन्धकाना मेकरूपेण संग्रहासम्भवस्य। अदोषत्वात्-तदभावानां हेतुत्वेऽव्यभिचाराप्रयोजकत्वात्। कार्यकारणाभावनानात्वस्यागत्याऽदूषकत्वादिति यथाश्रुतव्याख्यानादरणीया, भ्रमत्वग्रहाभाव विशिष्टत्वेनप्रमात्वाभाव ग्रहाभावविशिष्टत्वेन च पृथक्प्रतिबन्धकत्वे प्रमात्वाभाव मात्रग्रहाधीनसंशये प्रथमप्रतिबन्धकाभावस्य भ्रमत्वमात्रग्रहाधीन-संशयेच द्वितीयविशिष्टाभावस्य व्यभिचारात्।

नन्वेवं प्रामाण्यनिश्चये प्रामाण्यसंशयरूपोत्ते जकबालात् निश्चितस्या प्यर्थस्य संशयोभवे देवेति कथं प्रामाण्यानुमिति वैयर्थ्यमित्यत आह (प्रकृतेचेति) (अगृहीताप्रामाण्यस्येति) करा-

[ म ] यत्तु व्यवसायस्य प्रामाण्यनिश्चयादेव-प्रवृत्तेर्न तस्यापि प्रामाण्यानुसरणमिति नानवस्था ; न च प्रामाण्यसंशयादौचित्यावर्जितो विषयसंशय इति वाच्यम्, निश्चिते संशयाभावात् ; अन्यथा स्वतोग्रहेऽपि संशयेऽनवस्थेति । तदसत् - यदिहि प्रामाण्यसंशयान्न विषये संशयो निश्चितत्वात्, तदा विषयनिश्चयार्थं प्रामाण्यनिश्चयो व्यर्थः, प्राथमिकविषयनिश्चयादेव निष्कम्पप्रवृत्त्युपपत्तेः । न हि विषयसंशयमनाहृत्य प्रामाण्यनिश्चयः प्रवृत्तिहेतुरित्युक्तम् । अन्यसंशयादन्यत्र निश्चिते कथं संशय इति चेदनुभवं पृच्छ, येन स्वसाक्षिकमेव प्रामाण्यसंशस्य विषयसंशयहेतुत्वमनुमतम् । ज्ञानाविषयत्वमपि प्रामाण्यसंशयमासाद्य विषयसंशायकम् । ननु लिंग-पक्ष-व्याप्त्यादीनां ज्ञानस्य प्रामाण्यावधारणेऽनवस्था, अनवधारणे हेत्वसिद्धिः । अथ लिंगादिज्ञानं स्वविषयावधारणे कर्त्तव्ये स्वप्रामाण्यज्ञानं नापेक्षते, अनुमानमात्रोच्छेदप्रसंगात् ; लिंगादिनिश्चयस्य च स्वकारणाधीनस्य सर्व्वसिद्धत्वादितिचेन्न - प्रामाण्यसंशयेन लिंगस्यापि-सन्देहात । न हि न लिंगज्ञाने प्रामाण्यसंशयः, अविरोधादिति । उच्यते , अप्रामाण्यशंकाकलंकाभावे लिंगादिज्ञानस्यैवार्थनिश्चायकत्वात्, तत्कलंकेतूक्तैव गतिः । यत्तु व्यवसाये क्वचिदप्रामाण्यशंका भवति क्वचिन्नेति; त्वयापि वक्तव्यम् । एवं बहुवित्तव्ययायाससाध्ये स्वर्गसाधनं याग इति ज्ञानं न गृहीतप्रामाण्यं प्रवर्त्तकं, प्रामाण्यानुमितेः पूर्व्वमेव तज्ज्ञानस्य विनाशात् ; किन्तु तज्ज्ञानसमानविषयकमप्रामाण्यशंकाशून्यं ज्ञानान्तरमेव । नन्वेवं बहुवित्तव्ययायाससाध्ये निष्कम्पप्रवृत्तावनुपयोगित्वात् निष्फलं प्रामाण्यज्ञानमिति किं तदुपायानुसरणेनेति चेन्न - स्वर्गसाधनं याग इति ज्ञानप्रामाण्ये निश्चिते तत्समानविषयकज्ञानान्तरे अप्रामाण्यशंका न भ-

[म] वतीति ज्ञानान्तरमगृहीतप्रामाण्यमपि स्वार्थनिश्चयरूपं निष्कम्पप्रवृत्तिं जनयतीत्यप्रामाण्यशंका प्रतिबन्धद्वारा निष्कम्पप्रवृत्तावुपयुज्यते प्रामाण्यज्ञानमिति न निष्फलम् । यत्त्वनुमानस्य निरस्तसमस्तविभ्रमाशङ्कस्य स्वत एव प्रामाण्यग्रह इत्युक्तम् ,

---

[दी] अत्र वदन्ति, स्वतस्सिद्धव्यभिचारादर्शनात् करादेः पुरुषत्व व्याप्यताग्रहेण ( वा ) गृहीतायाः करादिमति पुरुषत्वादिज्ञानत्वस्य प्रामाण्यव्याप्यतायाः स्मरणात्प्रामाण्यानुमितिः

---

[ग] दिदर्शने अप्रामाण्यग्रहे अप्रामाण्यज्ञाना नास्कन्दितकरादि मद्विशेष्यकत्वरूपहेतु ग्रहाभावेन प्रामाण्यानुमितेरेवा सम्भवादितिभावः । ( स्वतस्सिद्धेति ) करादौपुरुषत्वादिव्यभिचार शंकानिरासार्थं तर्कान्तरानुसरणेनवस्थास्यादितिभावः । व्याप्यताग्रहेण-व्याप्यताग्रहाधीनतर्कैन ।

यद्यपि करादौपुरुषत्वव्याप्यत्वाग्रहेपि स्वतसिद्धव्यभिचाराज्ञानात् करादिमद्विशेष्यकत्वे प्रामाण्यव्याप्यताग्रहस्सम्भवति , तथापि तथा प्रामाण्यग्रहोपगमे पुरोवर्त्तिविशेष्यकत्वेपि स्वतसिद्धव्यभिचाराग्रहात् प्रामाण्यव्याप्यताग्रहसम्भवेन विनैवकरादिदर्शनं प्रामाण्यानुमितिसम्भवात् करादिदर्शनानुसरणमनर्थकंस्यादिति तन्निर्वाहायैव मूलकृता करादिमद्विशेष्यकत्वं हेतूकृतमित्याशयेन करादौ पुरुषत्व व्याप्यताग्रहानुसरणम् । क्वचिद्व्याप्यताग्रहेण वेति वाकारसंवलितः पाठः, तथा सति स्वतसिद्धव्यभिचारादर्शनादिति गृहीतायाः प्रामाण्यव्याप्यताया इत्यनेनान्वितम् । स्वतसिद्धव्यभिचाराग्रहेण प्रामाण्यव्याप्तिग्रहोपगमे उक्तरीत्याकरादिदर्शनानुसरणवैय्यर्थ्यात् कल्पान्तरानुसरणम् ( प्रामाण्यव्याप्यतायाः स्मरणादिति ) तद्व्याप्यताया अनुभवकाले तद्ग्राहकतर्कनिर्वाहकस्य करादौ पुरुषत्वव्याप्यताग्रहस्यासत्वेन ततएव पुरुषत्वसंशयनिवृत्ति सम्भव इति स्मर-

[ दी ] करादेः पुरुषत्वव्याप्यत्वादे र्विस्मरणात नच तद्दर्शनात्पु रुषत्व संशयप्रतिरोधः ।

अथ प्रामाण्यस्यानुमापकः तद्व्याप्यवत्तापरामर्शएवास्तु त त्संशयोच्छेदकइति कृतं तदनुमित्या । परामर्शस्योदीच्यज्ञानावि षयत्वं पुनरनुमितावपि समानम् ।

---

[ग] णानुसरणम् । ननु प्रामाण्यलिंगे तद्व्याप्यत्वस्मरणकाले करादौ पुरुषत्वव्याप्ते धर्मिवृत्तितायाश्च पूर्वानुभूतायाः स्मरणसम्भव इति त तएव पुरुषत्वसंशयनिवृत्तिर्भवेदित्यत आह ( करादेरिति ) 'व्याप्य-त्वादे' रित्यादिना धर्मिसम्बन्धपरिग्रहः । विस्मरणात् - संस्कारनाशे नोद्बोधकविरहेण वा स्मरणाभावात् ।

( नचतद्दर्शनादिति ) संशयप्रतिबन्धककरादिग्रहासमवधानादि तिभावः । तथाच तत्रप्रामाण्यानुमितिं विनाप्रामाण्यसंशयानिवृत्ते-र्लौकिकसामग्रीं विना पुरुषत्वग्राहकसामग्र्यभावः तस्य संशयएवस्या न्नतुनिश्चयइति तन्निश्चयार्थं प्रामाण्यानुमित्यनुसरणम् ।

नच- प्रामाण्यस्य निश्चयेपि विपरीतकोटिभानविरोधिनो ऽस-त्त्वेर्थसंशयःस्यादेव, निश्चितप्रामाण्यक प्राचीनव्यवसायश्च नतावत्का-लस्थायीति न ततोविपरीतभान निवृत्तिरितिवाच्यम् ; यद्धर्मि-विशेष्यकार्थनिश्चये प्रामाण्यग्रह स्तत्र तत्प्रकारकप्रमाविषयत्वरूप तद्धर्मव्याप्यवत्वस्यैव तदभावभान निवर्त्तकत्वादितिभावः ।

( तत्संशयोच्छेदकइति ) विशेषदर्शनविधया प्रामाण्यसंशयप्र-तिबन्धकइत्यर्थः ( अनुमितावपि समानमिति ) अनुमितेः स्वज-नकपरामर्शसमानविशेष्यकत्व नियमादितिभावः । एवंच धर्मिता वच्छेदकावच्छेदेन विरोध्यवगाहिनिश्चयो ऽसमानविशेष्यकोपि संश यविरोधीतिवाच्यम् , तथाच परामर्शोपि तथा भूतः उदीच्यव्य वसाये संशयविरुद्धयादेवेतिभावः ।

[दी ] अत्राहुः, पक्षतावच्छेदकपुरोवर्तिविशेष्यकत्वावच्छेदेन प्रामाण्यानुमाने उत्तरज्ञानस्यानुव्यवसाये पुरोवर्तिविशेष्यकत्वग्रहात् , अन्यथातु धर्मिज्ञानविरहान्न संशयइति ।

---

[ ग ] उत्तरज्ञानस्य – पुरोवर्त्तिविशेष्यकोदीच्यव्यवसायस्य । ( पुरोवर्त्तिविशेष्यकत्वेति) ग्राह्याभावावच्छेदकेत्यादिः । अन्यथा तदनुव्यवसायानुदयेन उदीच्यज्ञानेसंशयः प्रामाण्यस्य पुरोवर्त्तिविशेष्यकत्वावच्छेदेन प्रामाण्यव्याप्यवत्ताग्रहस्तूदीच्यज्ञाने संशयनिवृत्तावनुपयुक्तः, तदभावव्याप्यव्याप्यस्येव तदभावव्याप्यावच्छेदकधर्मस्यापि ग्रहस्य तद्वत्ताज्ञानाप्रतिबन्धकत्वादितिभावः ।

नच – तदवच्छेदेन प्रामाण्यग्रहविशिष्ट तद्वत्ताग्रहःप्रामाण्यसंशयविरोधी, तथाचानुव्यवसायेन पुरोवर्त्तिविशेष्यकत्व ग्रहेपि तदानीं प्रामाण्यस्मरणं विना नाप्रामाण्यसंशय निवृत्तिरितितत्स्मरणं स्वीकार्यम् , तथाच तदानीं पुरोवर्त्तिविशेष्यकत्वावच्छेदेन प्रामाण्यव्याप्यवत्वस्या प्युपस्थित्यर्थं पूर्वानुभूतस्य स्मरणसम्भवेन ततोपि पुरोवर्त्तिविशेष्यकत्वं धर्मितावच्छेदकीकृत्य प्रामाण्यसंशयस्य निवृत्तिसम्भव इति किं प्रामाण्यानुमित्येतिवाच्यम् । पुरोवर्त्तिविशेष्यकत्वावच्छेदेन प्रामाण्यव्याप्यवत्तास्मरणात पुरोवर्त्तिविशेष्यकत्वावच्छिन्न धर्मिकप्रामाण्यसंशय निवृत्तावपि ज्ञाननिष्ठेदन्त्वावच्छिन्न धर्मिकप्रामाण्यसंशयनिवृत्ते स्ततोऽनिर्वाहात् तदर्थं प्रामाण्यानुमितेः पूर्वमवश्य मंगीकरणीयत्वात् , पूर्वं पुरोवर्त्तिविशेष्यकत्वावच्छेदेन प्रामाण्यानुमितौ ज्ञाननिष्ठेदन्त्वावच्छिन्ने पुरोवर्त्तिविशेष्यकत्वावगाहिनोऽ नुव्यवसायात् तदवच्छिन्न विशेष्यकसंशयनिवृत्तिसम्भवात् ।

नच - पुरोवर्त्तिविशेष्यकत्व धर्मितावच्छेदकक प्रामाण्यसंशयः पुरोवर्त्तिविषयसंशय प्रयोजकइति प्रामाण्यव्याप्यवत्तास्मरणात् तन्निवृत्तावेव पुरोवर्त्तिनिविषयसंशयनिवृत्तेः ज्ञाननिष्ठे दन्त्व धर्मि

[दी] अनुमित्युपनीत प्रामाण्यस्यानुव्यवसायेनोदीच्यज्ञाने ग्रहणं पुनरे कद्व्यादिक्षणान्तरित जन्मनि तस्मिन् सुतरामसम्भवि ।

---

[ग] तावच्छेदकक प्रामाण्यसंशयनिवृत्ति रनपेक्षितेतिवाच्यम् । पुरोवर्त्तिविशेष्यकत्वस्य प्रामाण्यसंशयधर्मितावच्छेदकत्वेपि प्रामाण्याभाव भ्रमत्वेवा पुरोवर्त्यंशावच्छिन्नत्वावगाहि संशयादेव पुरोवर्त्तिनिविष यसंशयसम्भवात्, तद्धर्मावच्छेदेन ग्राह्याभावावगाहि संस्कारविशिष्ट तद्धर्मवत्ताग्रहस्य संशयविरोधित्वेतु प्रामाण्यस्मरणं विनैवोपपत्तिः ।

नचोदीच्यज्ञाने प्रामाण्यसंशयस्या निवृत्तावपि प्रामाण्यसंशये अनुत्पन्नएव ततः प्रवृत्तिर्निर्वहतीति किन्तत्र तन्निवर्त्तनेनेतिवाच्यम् । यत्र काराणान्तराभावात् तादृशज्ञानान्नप्रवृत्तिः तत्र तादृशज्ञाने प्रामाण्यशंकानुदये ततोविपरीतकोटिभाननिवृत्तौ निश्चयान्तरानिर्वाहेण ततः प्रवृत्ति निर्वाह इति तत्र तन्निवृत्तेरपेक्षणात्, प्रामाण्यस्य- पूर्वमनुमितौ तदुपनीत प्रामाण्यस्यो दीच्यज्ञानानुव्यवसायेन तज्ज्ञाने ग्रहणात् तज्ज्ञानेप्रामाण्यशंकानिवृत्तिः । व्याप्यवत्तापरामर्शस्य च सामग्रीबलसिद्धानुमित्याविनाशात् नोदीच्यव्यवसायपर्यन्तस्थितिरिति नतदुपनीतव्याप्यवत्वस्योदीच्यज्ञानानुव्यवसाये भानसम्भवइति मतं दूषयति ( अनुमित्युपनीतेति ) ( एकद्व्यादिक्षणान्तरितजन्मनि तस्मिन्निति ) प्रामाण्यानुमिति तृतीयादि क्षणजातव्यवसायइत्यर्थः । ( सुतरामसम्भवीति ) तदनुव्यवसायपूर्वं प्रामाण्यानुमितेरसत्वादितिभावः । विनश्यदवस्थपरामर्शजन्यानुमितेरनुव्यवसाये परामर्शोपनीतधूमवत्वस्य विशेष्यांशेन भानसम्भवः, तत्पूर्वपरामर्शनाशात् ; एवं धर्मितावच्छेदक धर्मवद्विशेष्यकत्वावच्छेदेनैव विशेषणप्रकारकत्वमनुव्यवसायोगृह्णातीति बौद्धाधिकारविवृतौस्वयं लिखितं; तथासति अनुमितौ साध्यव्याप्यस्य धर्मितावच्छेदक

